

## ॥ अथ भागवताद्यपद्यव्याख्यानुक्रमणिकाप्रारंभः ॥


| प० | पृष्ठ. | विषयाः | प० | पृष्ठ. | विषयाः | प० | पृष्ठ. | विषयाः |
|---|---|---|---|---|---|---|---|---|
| १ | १ | मंगलाचरणम्. | " | २ | कूर्मावतारपक्षः १८ | २८ | २ | कुबेरपक्षः ३७ |
| " | १ | उपोद्घातः. | " | " | वामनपक्षः १९ | २९ | १ | अग्निपक्षः ३८ |
| ३ | १ | गणेशपक्षः.१ | १७ | १ | वराहपक्षः २० | " | २ | विष्णुशिवाभेदपक्षः ३९ |
| ४ | १ | स्वरस्वतीपक्षः. २ | १८ | १ | परशुरामपक्षः २१ | ३० | १ | दुर्गापक्षः ४० |
| " | २ | सूर्यपक्षः. ३ | " | २ | संकर्षणपक्षः २२ | " | २ | श्रीभागवतपक्षः ४१ |
| ५ | १ | शिवपक्षः ४ | १९ | १ | बुद्धपक्षः २३ | ४८ | १ | व्यासपक्षः ४२ |
| ६ | २ | गुरुपक्षः ५ | २० | १ | कल्किपक्षः २४ | " | " | शुकपक्षः ४३ |
| ७ | २ | ब्राह्मणपक्षः ६ | " | २ | हयग्रीवपक्षः २५ | ४९ | १ | ऋषभदेवपक्षः ४४ |
| ८ | २ | कर्मपक्षः ७ | २१ | १ | दत्तात्रेयपक्षः २६ | " | २ | पृथुपक्षः ४५ |
| ९ | २ | सत्संगपक्षः ८ | " | २ | कपिलपक्षः २७ | " | " | ध्रुवपक्षः ४६ |
| १० | १ | गंगाप्रवाहपक्षः ९ | २२ | १ | सनकादिपक्षः २८ | ५० | १ | नरनारायणपक्षः ४७ |
| ११ | २ | तपःपक्षः १० | २२ | १ | गोवर्द्धनपक्षः २९ | " | २ | हंसावतारपक्षः ४८ |
| १२ | १ | ॐकारपक्षः ११ | २३ | १ | श्रीराधापक्षः ३० | ५१ | १ | यमुनाप्रवाहपक्षः ४९ |
| १३ | १ | नारदपक्षः १२ | " | २ | वृन्दावनपक्षः ३१ | " | " | पुष्करतीर्थपक्षः ५० |
| " | २ | रामचंद्रपक्षः १३ | २४ | २ | हरिनामपक्षः ३२ | " | २ | प्रयागराजपक्षः ५१ |
| १४ | १ | कृष्णचंद्रपक्षः १४ | २५ | २ | वायुपक्षः ३३ | ५२ | १ | कुरुक्षेत्रपक्षः ५२ |
| १५ | १ | धन्वंतरिपक्षः. १५ | २६ | २ | इन्द्रपक्षः ३४ | " | २ | मायाक्षेत्रपक्षः ५३ |
| " | २ | नृसिंहपक्षः १६ | " | " | वरुणपक्षः ३५ | " | २ | अयोध्याक्षेत्रपक्षः ५४ |
| २६ | १ | मत्स्यावतारपक्षः १७ | २७ | १ | धर्मराजपक्षः ३६ | ५३ | २ | काशीक्षेत्रपक्षः ५५ |

| प० | पृष्ठ. | विषयाः | प० | पृष्ठ. | विषयाः | प० | पृष्ठ. | विषयाः |
|---|---|---|---|---|---|---|---|---|
| ५४ | २ | द्वारिकाक्षेत्रपक्षः ५६ .... | ६९ | १ | जननीजनकपक्षः ७५ .... | ८५ | २ | स्वयंपाकपक्षः ९४ .... .... |
| ५५ | १ | गोपीचन्दनपक्षः ५७ .... | ६९ | २ | प्रद्युम्नपक्षः ७६ .... | ८८ | १ | नवग्रहपक्षः ९५ .... .... |
| ५६ | २ | ऊर्ध्वपुंड्रपक्षः ५८ .... .... | ७० | १ | अनिरुद्धपक्षः ७७ .... | ८९ | १ | एकादशीतिथिपक्षः ९६ .... |
| ५७ | १ | कांचीक्षेत्रपक्षः ५९ .... .... | ७० | २ | अर्जुनपक्षः ३८ .... | ९३ | १ | तर्कशास्त्रपक्षः ९७ .... .... |
| ५७ | २ | अवंतिकापक्षः ६० .... .... | ७१ | १ | उद्धवपक्षः ७९ .... | १०१ | १ | पुष्यनक्षत्रपक्षः ९८ .... .... |
| ५८ | १ | पुरुषोत्तमक्षेत्रपक्षः ६१ .... | ७१ | २ | हनूमत्पक्षः ८० .... | १०१ | २ | कलियुगपक्षः ९९ .... .... |
| ५८ | २ | भगवन्नैवेद्यपक्षः ६२ .... | ७१ | २ | गरुडपक्षः ८१ .... | १०२ | २ | संन्यासाश्रमपक्षः १०० .... |
| ५९ | १ | विष्णुचरणामृतपक्षः ६३ .... | ७३ | २ | सुदर्शनपक्षः ८२ | | | **इतिप्रथमश्लोकव्याख्याशतकम्** |
| ५९ | २ | तुलसीतरुपक्षः ६४ .... | ७३ | १ | श्रीलक्ष्मीपक्षः ८३ .... .... | | | |
| ६२ | २ | शालिग्रामपक्षः ६५ .... | ७५ | २ | अष्टादशाक्षरश्रीगोपालमनुपक्षः ८४ | | | |
| ६४ | १ | केदाराभिन्नबदरिकाक्षेत्रपक्षः ६६ | ७५ | १ | श्रीगीतापक्षः ८५ .... .... | | | **द्वितीयश्लोकव्याख्या.** |
| ६४ | २ | सेतुपक्षः ६७ .... | ७५ | २ | वेदपक्षः ८६ .... .... | १०८ | २ | ब्राह्मणपक्षः १ |
| ६५ | १ | समुद्रपक्षः ६८ .... | ७६ | २ | गायत्रीपक्षः ८७ .... .... | १०९ | २ | भक्तियोगपक्षः २ |
| ६५ | २ | काश्मीरमण्डलपक्षः ६९ .... .... | ७९ | २ | गवांकुलस्य पक्षः ८८ .... .... | | | तृतीयश्लोकव्याख्यापिप्रसंगात् । |
| ६६ | १ | भारतखण्डपक्षः ७० .... .... | ८० | २ | रुद्राक्षपक्षः ८९ .... .... | | | इयमनुक्रमणीपरशुरामात्मज |
| ६७ | १ | कालपक्षः ७१ .... | ८१ | २ | पंचाक्षरमन्त्रपक्षः ९० .... | | | गोविन्दशास्त्रिकृता |
| ६७ | २ | मनःस्थैर्यपक्षः ७२ .... | ८२ | २ | शिवलिंगपक्षः ९१ .... .... | | | संपूर्णा ॥ |
| ६८ | १ | हिरण्यगर्भपक्षः ७३ .... | ८३ | २ | विभूतिधारणपक्षः ९२ .... | | | |
| ६८ | २ | कार्तिकेयपक्षः ७४ .... | ८४ | २ | बिल्ववृक्षपक्षः ९३ .... .... | | | संवत् १९४६ शके १८११ पौषशुक्ल०१ |




॥ ॐ स्वस्ति ॥ श्रीगणेशायनमः ॥ ॥ हेरम्बंगिरिजापतिंचगिरिजांस्कन्दंगुरुंभारतीं श्रीभानुंपितरंनिजंचजननींविद्यागुरून्सर्वतः ॥ नत्वाश्रीवृषभानुजाप्रियतमंकृष्णंवृतंबल्लवैः कालिंदीविपिनेविहारनिरतंवन्द्यंहिवृंदारकैः ॥ १ ॥ श्रीमत्सद्गुरुपादपद्ममकरंदास्वादभृंगाकृतिर्विप्रोगौडकुलोद्भवोहरिरतोवंशीधरोलब्धवाक् ॥ कुर्वेभागवताद्यपद्यविषयेव्याख्याशतंमोददं सुज्ञानांपठतांचबोधजनकंसर्वागमानांपरम् ॥ २ ॥ गणेशोभारतीभानुःशंकरस्तत्प्रियातथा ॥ तपःसज्जनसंगश्चगुरुरोंकारएवच ॥ कर्ममत्स्यौचकमठोनारदश्रीनृसिंहकौ॥धन्वंतरीरामकृष्णौश्रीगंगाब्राह्मणस्तथा ॥ वाराहोवामनश्चैवपर्शुरामबलौतथा ॥ बुद्धःकल्किहयग्रीवौदत्तःकपिलएवच ॥ सनकाद्यागवांशैलःश्रीराधाकीर्तिनंदिनी ॥ वृंदावनंहरेर्नामवाय्विंद्रवरुणास्तथा ॥ धर्मराजःकुबेरश्चवह्निविष्णुशिवौतथा ॥ श्रीमद्भागवतव्यासौश्रीशुकःपृथुरेवच ॥ ऋषभध्रुवौततःप्रोक्तौनरनारायणस्तथा ॥ हंसोथयमुनाचैवश्रीपुष्करप्रयागकौ ॥ कुरुक्षेत्रंतथामायाक्षेत्रंसाकेतकंतथा ॥ वाराणसीद्वारिकाचगोपीचंदनमेवच ॥ ऊर्द्ध्वपुंड्रंतथाकांच्यवंतिकाक्षेत्रमेवच ॥ जगन्नाथोथनैवेद्यंविष्णुतीर्थंतुलस्यथ ॥ शालिग्रामोथबदरीसेतुरब्धिस्तथैवच ॥ काश्मीरंभारतंखंडंकालश्चमनसःस्थितिः ॥ हिरण्यगर्भःसेनानीर्जननीजनकस्तथा ॥ प्रद्युम्नश्चानिरुद्धश्चफाल्गुनश्चोद्धवस्तथा हनुमान्गरुडश्चैवसुदर्शनमथोरमा॥अष्टादशाक्षरोगीतावेदोगायत्रिकातथा ॥ गवांकुलंचरुद्राक्षपंचाक्षरकमंत्रकौ॥शिवलिंगंभस्मधृतिर्बिल्ववृक्षःस्वयंपचिः ॥ नवग्रहाहरेर्घस्रस्तर्कशास्त्रंचपुष्यभम्॥कलिस्तुर्याश्रमश्चैवशतंचैतेप्रकीर्तिताः ॥ एषांपक्षेयोजनामेकृतागुरुप्रसादतः ॥ श्रीमद्भागवतस्याद्यश्लोकस्यसुधियोभृशम् ॥ वक्ष्यामोयोजनाहेतून्विचार्यनिजयाधिया॥ पौर्वापर्यविचारोत्रनकार्योहिमनीषिभिः॥सर्वविघ्नविघातार्थंगणनाथस्यपूजनम् ॥ कार्यारंभेगणेशश्चपूजनीयःप्रयत्नतः॥इत्युक्तेर्गणेशध्यानम् ॥ सरस्वत्याःप्रसादेनसर्वंज्ञानंप्रजायते॥इतिज्ञानहेतुत्वेनतद्ध्यानम् ॥ सर्वांधकारशमनोभास्करोविश्वपूजितः॥इतिसर्वांधकारशमकत्वेनहृदयांधकारमपिनाशयतीतितद्ध्यानमिति॥यद्वाआरोग्यंभास्करादिच्छेदितिहेतोरपितद्ध्यानं ॥ श्रीशंकरस्यापिसर्वकल्याणहेतुत्वाच्छिवरूपाज्ज्ञानमर्हतीत्यार्योक्तेश्चज्ञानहेतुत्वात्तद्ध्यानमिति ॥विद्यासुशास्त्रेषुविवेकदीपेष्वाद्येषुवाक्येषुचकात्वदन्याइतिमार्कंडेयोक्तेःसर्वविद्या

हेतुत्वात्तद्ध्यानमिति ॥ सृजामितपसाविश्वमितिभगवदुक्तेस्तपसःपरपुमर्थकारणत्वात्तद्ध्यानमिति ॥ सत्संगतिःकथयकिंनकरोतिपुंसा
मितिहरिभर्तुक्तेस्तद्ध्यानमिति ॥ हरौरुष्टेगुरुस्त्राताग़ुरौरुष्टेनकश्चन ॥ तस्मात्सर्वप्रयत्नेनगुरुमेवप्रसादयेदितिस्मृतेस्तद्ध्यानमिति ॥
ॐकारस्यसर्ववाङ्मयकारणत्वेनध्यानमिति ॥ कर्मणैवाखिलंफलमित्युक्तेः कर्मैवध्येयमिति ॥ मत्स्यावतारेणापिहयग्रीवदैत्यहृतवेदा
नयनंहरिणाकृतंतद्धुहोहतिश्चकृतातस्तध्यानमप्यत्रोपयोग्यमेव ॥ कूर्मरूपस्यापिहरेर्मंदधृतिपूर्वकममृतोत्पादनंकारितम् ॥ श्रीमद्भागव
तस्यापिपरमामृतरूपत्वात्तदारब्धौतद्ध्यानंयुक्तमेवेति ॥ श्रीनारदेनैवव्यासशोकापनोदनंकृतमतस्तद्ध्यानमिति ॥ निजजनावनार्थं
कर्तुमशक्यमपिकरोतिहरिरतएवहरिणानिजभृत्यभाषणरक्षणार्थंश्रीनृसिंहविग्रहोंगीकृतस्तद्ध्यानंतुसर्वथाकार्यमेव धन्वंतरेःस्मृतेरेवसर्वा
र्तिशमकत्वान्ममाप्यंतरार्तिर्नश्यत्विितिहेतोस्तद्ध्यानमिति ॥ श्रीरामेणतुसमुद्रेसेतुःकृतस्तत्कृपयाहमपिसंसारसमुद्रेसेतुभूतंश्रीमद्भाग
तंकरोमीतितत्सिद्ध्यैतद्ध्यानंन्याय्यमेव ॥ श्रीकृष्णस्यत्वत्रप्रतिपाद्यत्वात्तद्ध्यानंकार्यमेव ॥ श्रीगंगायथात्रिलोकींपुनातितथामत्तआ
विर्भूतंश्रीमद्भागवतंत्रिलोकींश्रोतृवक्तृपृच्छकान्वापुनात्विवितद्ध्यानमिति ॥ ब्राह्मणानांसर्वामररूपत्वाद्ब्राह्मणार्चनेसर्वार्चनमितितद्ध्या
नम् ॥ श्रीवाराहेणसर्वाधारभूतपृथिव्युद्धारः सर्वोपद्रवकारीदैत्यश्चहतस्तद्ध्यानेनममाप्युपद्रवोमाभूदितियुक्तंतद्ध्यानम् ॥ श्रीवाम
नेननिजजनावनार्थंकपटरूपंधृत्त्वादैत्यानिरस्तास्तद्ध्यानेनममाप्यबोधदैत्योहतोभवत्वितिन्याय्यंतद्ध्यानम् ॥ श्रीपरशुरामेणभूयो
भूयोदुष्टक्षत्रंनाशयित्वाधर्मोवितस्तद्ध्यानंममापिभूयोभूयोग्रंथनिर्मितावालस्यादिकंनाशयत्वितियोग्यंतद्ध्यानम् ॥ श्रीबलदेवस्यशेषा
वतारत्वेनसर्पाधीशत्वाद्ग्रंथनिर्माणावसरेममसर्पादिविषधरसत्त्वभीतिर्माभूदितितद्ध्यानम् ॥ बुद्धरूपेणहरिर्वेदाद्दैत्यान्प्रच्याव्यनिजभक्ते
भ्योदेवेभ्यस्तन्मार्गंददावतोममापिसवेदार्थंबोधयत्विितितद्ध्यानम् ॥ कल्किस्तुकलिदोषंनाशयत्यतोममापिकलिसंबंधोमाभूदितित
द्ध्यानम् ॥ हयग्रीवस्यनिःश्वासतोब्रह्मयज्ञेवेदाविर्भावोभूदितिहेतोर्ममापिवेदार्थावबोधोभवत्वितितद्ध्यानम् ॥ श्रीदत्तात्रेयस्तुज्ञानि
शिरोमणिरभूत्तद्ध्यानेनममापिरचनाज्ञानंस्यादिति ॥ कपिलस्मृतेः सांख्येबुद्धिरप्रातिहतास्त्विवातितद्ध्यानमिति ॥ सनकादिस्मृतेःका



मादिपीडानश्यत्विितितद्ध्यानंतेषांनैष्ठिकत्वात् ॥ गोवर्द्धनेनतुव्रजरक्षाकृतातस्यरक्षावत्स्वभावत्वान्मामपिसरक्षत्विितिहेतोस्तद्ध्यान
म् ॥ श्रीराधायास्तुश्रीकृष्णस्यापिवशकर्त्रीत्वेनसर्वोत्कर्षवत्त्वान्ममापिसोत्कर्षंददात्विितितद्ध्यानम् ॥ वृन्दावनस्यतुसाक्षाच्छ्रीकृष्ण
स्यनित्यालयत्वान्ममापितद्भवत्विितितद्ध्यानम् ॥ कलौतुहरिनामैवसर्वार्थसाधकत्वाद्ध्येयमितितद्ध्यानम् ॥ वायोस्सर्वाधारत्वेनसर्व
जीवनहेतुत्वाद्ध्येयत्वम् ॥ इन्द्रस्यसर्वदेवाधिपत्वाद्ध्येयत्वम् ॥ वरुणस्यसर्वजीवनहेतुजलाधीशत्वाद्ध्येयत्वम् ॥ धर्मराजस्तुसर्वशा
स्तासर्वेषांकर्मफलदाताचेतिध्येयः॥ सर्वनिधीशत्वात्कुबेरस्यापितथात्वम् ॥ वन्हेःसर्वदेवमुखत्वाद्ध्येयत्वम् ॥ विष्णुशिवयोरभेदबुद्धेर्मोक्ष
हेतुत्वादभेदरूपेणतयोर्ध्यानन्याय्यमेव ॥ श्रीमद्भागवतस्यश्रीकृष्णवाङ्मयमूर्तित्वात्सर्ववेदसारत्वाच्चध्येयत्वम् ॥ व्यासस्तुसाक्षान्नारा
यणएवातस्तद्ध्यानंकार्यमेव ॥ श्रीशुकस्यैतच्छास्त्रप्रवर्तकत्वाद्ध्येयतास्त्येव ॥ पृथोरादिराजत्वेनसर्वमर्यादास्थापकत्वात्पूज्यत्वंस्यादे
व ॥ ऋषभदेवस्यमोक्षहेतुपारमहंस्याश्रमप्रदर्शकत्वाद्ध्यानविषयतास्तीति ॥ ध्रुवस्यतुसर्वोत्कृष्टपदस्थत्वात्सर्वदास्थायित्वाच्चतथात्व
म् ॥ नरनारायणयोस्तुकामक्रोधादिजेतृत्वेनध्येयतास्त्येव ॥ हंसावतारस्यतुब्रह्मणोपिमोहनिरासकत्वेनगुरुत्वादर्च्यत्वम् ॥ यमुनाया
स्तुश्रीकृष्णकेलिस्थानत्वेनतटिनीषुमुख्यत्वाद्ध्येयता ॥ पुष्करस्यसर्वतीर्थगुरुत्वाद्ब्रुवोनेत्रत्वाच्चार्हतास्त्येव ॥ प्रयागस्यतुतीर्थराजत्वा
द्ध्येयत्वम् ॥ कुरुक्षेत्रस्यतुत्रिधामुक्तिहेतुत्वेनध्येयत्वम् ॥ मायाक्षेत्रस्यतुमोक्षहेतुत्वाच्छ्रीगंगायांमुख्यस्थलत्वाच्चध्येयता ॥ श्रीसाकेता
परपर्यायायोध्याक्षेत्रस्यश्रीरामाविर्भावभूमित्वाद्ब्रह्मप्रियसरय्वधिकरणत्वाच्चसर्वदाध्येयत्वमेव ॥ श्रीकाश्यामरणादेवमोक्षदातृत्वेनध्येयता
श्रीविश्वेशनिवासभूत्वाद्वा ॥ श्रीद्वारिकायाः श्रीकृष्णराजधानीत्वेनसपरिकरस्यभगवतोनिवासभूमित्वात्तथात्वम् ॥ गोपीचंदनधृतेः
पापिनोपिमोक्षंयांतीतिध्येयमेवतत् ॥ ऊर्ध्वपुंड्रस्यसर्वकर्मसुधार्यत्वेनकर्मपूर्तिकरत्वाद्भगवत्प्रियत्वाच्चध्येयता ॥ कांचीद्वयस्यापि
सप्तपुर्यंतर्गतत्वेनमुक्तिदत्वाद्ध्येयत्वम् ॥ अवंतिकायाअपिश्रीकृष्णविद्याध्ययननगरत्वेनमोक्षहेतुत्वादर्हता ॥ श्रीजगन्नाथस्तुकलौसा
क्षादेवप्रसिद्धस्सर्ववांछितप्रदश्चातोध्येयएवसः ॥ श्रीविष्णुनैवेद्यस्यत्वखिलपापहरत्वेनभक्ष्यत्वाद्ध्येयत्वं ॥ श्रीविष्णुचरणोदकस्यनिखिल

तीर्थरूपत्वादर्च्यतास्ति ॥ श्रीतुलसींविनादत्तमप्यन्नादिहरिर्नगृह्णात्यतस्तस्याहरिवल्लभात्वेनध्येयतास्त्येव ॥ शालिग्रामेसर्वदाविष्णोराविर्भावाद्ध्येयतैव ॥ बदरीक्षेत्रस्याधुनापिसाक्षान्नरनारायणस्थितिमत्त्वाद्ध्येयत्वम् ॥ सेतुदर्शनस्यब्रह्महत्यानिवर्तकत्वेनरामेश्वराधिकरणत्वाद्वाध्यानयोग्यता ॥ समुद्रस्यतुसर्वतीर्थरूपत्वाद्रक्षआदिभ्योलोकरक्षकत्वाच्चध्येयता ॥ काश्मीरमंडलस्यवाग्देवतायाःसर्वदास्थलत्वादादिवाराहाविर्भावभूमित्वाद्वाध्येयता ॥ भारतखंडस्यतुपुण्यक्षेत्रत्वेनध्येयता ॥ कालस्यसर्ववशित्वाद्ध्येयता ॥ परोहियोगोमनसःसत्याधिरितिभगवदुक्तेर्मनःस्थितेःसर्वार्थसाधकत्वाद्ध्येयत्वम् ॥ ब्रह्मणस्तुसर्वजगदुत्पादकत्वेनध्यानगोचरता ॥ कार्तिकेयस्यापिप्रज्ञावर्द्धकत्वाद्देवसेनापतित्वाद्वाचर्यतास्त्येव ॥ जननीजनकयोस्तुचतुर्वर्गसाधनदेहदातृपालकत्वात्सर्वामररूपत्वाद्वाध्यानयोग्यता ॥ श्रीप्रद्युम्नस्यकामावतारत्वेनाखिलबलिभ्योबलवत्तरत्वाद्ध्यानविषयता ॥ अनिरुद्धस्यापिचतुर्व्यूहांतर्गतत्वेनभगवद्रूपतयाध्येयता ॥ अर्जुनस्यतुश्रीकृष्णस्यातीववल्लभत्वात्पूज्यतैव ॥ उद्धवस्यश्रीकृष्णमंत्रिषुप्रवरत्वाद्ध्येयत्वम् ॥ हनुमतोऽतिबलवत्तरत्वेनतद्ध्यानंममापिबलंकरोत्विवितिध्येयत्वम् ॥ गरुडस्यतुभगवद्यानत्वादमृतनेतृत्वाच्चार्चनयोग्यता ॥ सुदर्शनस्यभगवदायुधेषुमुख्यत्वाद्ध्येयत्वम् ॥ श्रीलक्ष्म्यास्तुकटाक्षपातेनसर्वसंपद्धेतुत्वाद्ध्यानयोग्यता ॥ अष्टादशाक्षरस्यसर्वमंत्रराजत्वाच्छ्रीकृष्णस्वरूपत्वाच्चतथात्वं ॥ श्रीगीतायाःसर्वोपनिषत्सारत्वात्साक्षाच्छ्रीमुखोक्तित्वाच्चध्येयता ॥ वेदोनारायणःसाक्षादित्युक्तेः सर्वपुरुषार्थोपायाद्बोधकत्वाद्ध्यानगोचरता ॥ अस्यपुराणस्यगायत्र्यर्थभूतत्वात्तद्ध्यानमुचितमेव ॥ गवांकुलस्यसर्वदेवदैत्यनरादिपालकत्वाद्ध्येयत्वम् ॥ रुद्राक्षस्यहरवल्लभत्वात्सर्वदेवमनुजेष्वभ्यर्हितत्वाच्चध्यानगोचरता ॥ पञ्चाक्षरमंत्रस्यतूपदेशंविनापिश्रेयोहेतुत्वादर्ह्यता ॥ शिवलिंगस्यसर्वपुरुषार्थजनकत्वेनध्येयता ॥ भस्मधृतेस्तुशिवपूजनोपयोगित्वात्तथात्वम् ॥ बिल्वस्यसाक्षाच्छ्रीनिवासभूमित्वेनामृतोद्भूतत्वेनचध्यानविषयता ॥ स्वयंपाकस्यसर्वाचारेषुमुख्यत्वाद्ब्राह्मण्यापादकत्वाच्चध्येयता ॥ नवग्रहाणांजगत्सुखदुःखहेतुत्वात्तद्ध्यानेनममदुःखंमाभूदितितद्ध्यानम् ॥ हरिवासरस्यसर्वव्रतेषुमुख्यत्वेनसर्वथाकार्यत्वाद्ध्येयत्वम् ॥ तर्कशास्त्रस्यवादिवृंदमर्दकत्वेनतद्ध्यानान्मन्निर्मितशास्त्रेकश्चिद्वादंनकुर्यादितितद्ध्यानम् ॥ पुष्यःपरकृतंहंतिनतुपुष्यकृतंपरइत्युक्तेःसर्वकार्यसाधकत्वात्तस्यर्क्षेषुप्रधानत्वाद्वाध्यानम् ॥ दुर्जनंप्रथमंवंदेदितिन्यायेनकलियुगस्यसर्वसुबुद्धिहरत्वात्तन्मेमाभूदितितद्ध्यानम् ॥ संन्यासस्यतुमोक्षोपयोग्याश्रमत्वादंतेतद्ध्यानमिति ॥ अत्रपौर्वापर्यविचारोनकार्योबहुव्याख्यानेतात्पर्यत्वात्संगतिविचारस्याप्यत्रचिंतानकार्या ॥ बह्वर्थेसंगतिर्वाक्येनैवालोच्यामनीषिभिःइत्यभियुक्तोक्तेः ॥

अथगणेशपक्षः ॥ नत्वालंबोदरंदेवंव्याख्याभागवतस्याहि ॥ आद्यश्लोकस्यविशदापक्षेगाणपतेकृता ॥ १ ॥ कार्यारंभेगणेशश्चपूजनीयःप्रयत्नतःइतिमनासिनिधायव्यासःश्रीमद्भागवतारंभरूपकार्यादौगणेशंप्रणमाति ॥ जन्माद्यस्येति ॥ ॥ छ ॥ ॥

**जन्माद्यस्ययतोन्वयादितरतश्चार्थेष्वभिज्ञःस्वराट् तेनेब्रह्महृदाय**
**आदिकवयेमुह्यन्तियत्सूरयः ॥ तेजोवारिमृदांयथाविनिमयोयत्र**
**त्रिसर्गोमृषाधाम्नास्वेनसदानिरस्तकुहकंसत्यंपरंधीमहि ॥ १ ॥**

वयंतंगणेशंब्रह्महृदाब्रह्मदृष्ट्याआदौधीमहि ॥ आदीत्यव्ययमादावित्यर्थे ॥ मनसिद्दशिहृच्छब्दोवागीशेनप्रकीर्तितइत्यनेकार्थचिंतामणिः ॥ गणेशस्यब्रह्मरूपतात्वथर्वशिरस्युक्ता । त्वंप्रत्यक्षंब्रह्मासि । त्वंज्ञानमयोविज्ञानमयोसि । सर्वंजगदिदंत्वत्तोजायते । सर्वंजगदिदंत्वत्तस्तिष्ठति । सर्वंजगदिदंत्वयिलयमेष्यतीतिश्रुतेः ॥ यतोयस्माद्गणेशात्स्वराडिंद्रःअर्थेषुसमुद्रोद्भूतकामधेन्वादिपदार्थेष्वाद्यस्यसमुद्रमंथनादिकारणस्यामृतस्यजन्माविर्भावमन्वयात् जनेःप्रादुर्भावार्थकत्वाज्जन्मशब्दआविरर्थकः ॥ स्वराण्नमुचिसूदनइत्यमरः ॥ यद्वास्वराट्युधिष्ठिरोयतोगणेशादाद्यस्यसर्वादिकारणस्यश्रीकृष्णस्यजन्माविर्भावमन्वयात्प्राप ॥ अनुपूर्वोयाप्रापणेततोलङ् ॥ युधिष्ठिरेणवनस्थेनापद्ग्रस्तेनकस्य

चिद्द्वेषेरुपदेशाद्गणेशार्चनंकृतंततः श्रीकृष्णप्राप्तिस्ततआपत्त्यभावएतच्चभविष्येस्फुटं॥ सामंतेशश्चक्रवर्तीस्वराट्सम्राण्महाधिपइतिधरणि ॥ समुद्रमथनारंभेगणेशार्चनंनकृतंततएवगिरिपातादिनासुरासुरविनाशोगिरेरधोगत्यादिरूपश्चोपद्रवोभूत् ॥ ततोविष्णुनागणेशार्चनंकारयित्वामथनमारंभितं ॥ विलोक्याविघ्नेशविधिंतदाच्युतइत्यादिनाष्टमस्कंधेवक्ष्याति ॥ अनाराध्यगणाधीशंनहिकिंचित्प्रसिध्यतीतिभविष्येपि॥ततोमृतादिप्राप। यन्निमित्तंयत्क्रियतेतदेवतस्यहेतुःयथास्वर्गकामोयजेतेत्यादौस्वर्गकामएवयजनेहेतुस्तथामृतमेवात्राब्धिमथनेकारणमितिपूर्वोक्तमनुसंधेयम् ॥ कीदृशः स्वराट्इतरतः सकाशादभिज्ञः । इःकामेकामनायांचेत्यनेकार्थोक्तेः इंकामंतरतिजयतीतीतरोविष्णुस्तस्मादितरतः ॥ तस्यनित्यंब्रह्मचर्यवत्त्वादितरत्वं॥तदुक्तंजैमिनीये ॥ यद्यहंब्रह्मचर्येणनभग्नोभूतलेतदा ॥ तेनमेसुकृतेनाद्यपार्थस्यायातुवैशिरः ॥ यैर्नीतंतेपतंत्वद्यभिन्नशीर्षाममाज्ञया इति ॥ किञ्च दुर्वासोदर्शनार्थिनीभिर्गोपीभिरप्येतद्यमुनातरणावसरे ॥ कृष्णाज्ञयैद्ब्रह्मचर्यमनुभूतंयमुनामार्गदानेनहेतुनेति गोपालतापिन्यां ॥ गर्गसंहितायांचैतत्स्पष्टतरम् ॥ तथावक्ष्यत्यपिश्रीदशमेआत्मन्यवरुद्धसौरतइति ॥ तथाचेतरतोविष्णोरभिज्ञःप्राप्तशिक्षः ॥ तच्छिक्षाचलोभःकार्योनवोजातुकामंरोषस्तुवस्तुषु इत्यादिनाष्टमस्कन्धेप्रगटीभविष्यति॥यद्वार्थेषुइतरतःइतादूरीभूतारतिःप्रीतिर्यस्यसतथासमासांतोत्रडः॥ तस्मिन्बलिः स्पृहांचक्रेनेन्द्रईश्वरशिक्षया ॥ इत्यग्रेवक्ष्यमाणत्वात् ॥ युधिष्ठिरपक्षेइतरतःशत्रोरभिज्ञस्त्रस्तः ॥ इतरोरिपुनीचान्यशिवविष्णुगुहेषुचइतिसर्वार्थचिंतामणौ । ज्ञात्रासेप्यनेकार्थत्वाद्धातूनाम् ॥ यत्कोर्थः यंसूरयोमुह्यंतिध्यायन्तिमुहवैचित्ये ॥ इहचित्यतेसंज्ञायनेनेतिचित्तंध्यानंविशेषेणाचित्तंविचित्तंतस्यभावोवैचित्यमित्यर्थान्मुहिध्यानार्थोभवतीति ॥ पादांबुजध्यानवशेनयस्यविघ्नांधकाराविलयंप्रयांतीतिजातकाभरणोक्तेः ॥ कस्मैकवयेकवित्वायभावप्रधानोनिर्देशः ॥ यत्रयस्मिन्गणेशेध्यातेसतीतिशेषः ॥ त्रयाणांशोकमोहविघ्नानांसर्गःस्थितिर्मृषा ॥ सृष्टौस्थितौचसंहारेसर्गोऽध्यायेथनिश्चये इतिकोशात्स्थितावपिसर्गोस्ति शोकइष्टविनाशजंदुःखम् । मोहोऽज्ञानम् । विघ्नस्तुकार्योत्पत्तिप्रतिबंधकउपद्रवः ॥ कथ यथातेजोवारिमृदांविनिमयोव्यत्यासोमृषेतिदृष्टांतः ॥ किंभूते यत्रतेने तत्वंकरित्वंनयतिप्राप्नोतितच्छिरोधारणेनेतितेन

स्तस्मिंस्तेने ॥ डोत्रकर्मणिनयतेः। अत्रापिभावप्रधानोनिर्देशः ॥ तेकरीस्मृतइतिसौभरिप्रोक्तनाममालायांगजमुखइत्यर्थः ॥ कीदृशंतंस्वेनान्यत्रविद्यमानेनधाम्नातेजसापरंसर्वोत्कृष्टं । आदिपूज्यत्वात्सर्वदेवपराभवकर्तृत्वाच्च ॥ आदिपूज्यत्वंतुसर्वत्रप्रसिद्धमेव ॥ सर्वदेवपराभवकर्तृत्वंशिवपुराणेस्पष्टं । पुनःकीदृशंसत्यंब्रह्मरूपत्वात् ॥ पुनःसदानित्यंनिरस्तोपास्तःकुहकोविघ्नसमूहःस्तवपाठकानांयेनसतथा ॥ सर्वेविघ्नाःशमंयांतिगणेशस्तवपाठतः ॥ इत्यभियुक्तोक्तेः॥ इतिगणेशपक्षः ॥ १ ॥ ॥छ॥ ॥छ॥

॥ अथसरस्वतीपक्षः ॥ ॥ वयंतत्सारस्वतंधामहृदाधीमहि ॥ ततकिंयस्यान्वयात्संबंधात्स्वराट्दरिद्रोप्यभिज्ञईश्वरोभवति ॥ वंशानुगतिसंबंधेपदानांयोजनेतथा ॥ पदार्थसंगतौप्राप्तौ संसारेसेवनेऽन्वयः ॥ इतिमहीदेवः ॥ स्वराडिवनिपानखनित्रमिंद्रइत्यत्रस्वराट्पदंदरिद्रपरंवक्ष्यति ॥ अभितोज्ञापयतिनियोजयतिसर्वानित्यभिज्ञः। ज्ञा नियोगेऽतोडः । सरस्वतीप्रसादादाप्तविद्यःसर्वान्स्वेस्वेकर्त्तव्येनियोजयतीतितंपृष्ट्वैवसर्वेस्वंस्वंकार्यमारभंतइतिभावः ॥ यद्वाऽभिज्ञोनारदःस्वराट्स्वरमटतिजानातीतिस्वराट्स्वरज्ञानवानभूदित्यर्थः । एतच्चगर्गसंहितादावतिस्पष्टम् ॥ यत्सारस्वतंधामआदिकवयेबृहस्पतयेब्रह्मज्ञानंतेने ॥ ब्रह्मतत्त्वेतपोभेदेनद्वयोःपुंसिवेधासि ॥ ऋत्विग्योगभिदोर्विप्रेज्ञानेवेदेचभूमानि ॥ इतिमेदिनी ॥ दत्तंतेनिर्मलंज्ञानंकुमतिध्वंसकारकम् ॥ इतिस्कांदेबृहस्पतिंप्रतिभारतीवाक्यात् ॥ यस्मिन्ब्रह्मणिज्ञानेसूरयःशास्त्रज्ञाअपिमुह्यंतिज्ञानस्यशास्त्रेष्वनेकधाकथनात्किंद्वैतमेवश्रेष्ठमुताद्वैतमितिनिश्चयंनाधिगच्छंति ॥ यत्रसारस्वतधामध्यानेत्रयाणांजाड्यास्मृत्यस्फूर्त्तीनांसर्गःस्थितिर्मृषा ॥ अस्फूर्त्यस्मृतिजाड्यानिनश्यंतियद्विचिंतनात् ॥ तांदेवींशारदांवंदेसदासुरवरार्चिताम् ॥ इत्यभियुक्तोक्तेः ॥ यथातेजोवारिमृदांविनिमयोविपर्यासोमरुमरीचिकादिमृषेति ॥ किञ्चयत्सारस्वतंधामआद्यस्यब्रह्मणः॥ इःकामेकामनायांचचंद्रेसांबादिषुतथा ॥ इतिकोशात्इनाचंद्रेणतीर्यतउपमीयतेइतीतरंमुखंयद्वाइंचंद्रंतरत्युल्लंघयतिशोभयेतीतरंतस्मादितरतोमुखादित्यर्थः ॥ धातूनामनेकार्थत्वात्तरतिरत्रोपमार्थः ॥ तथाचब्रह्ममुखादितिलब्धंजन्मापप्राप । आस्याद्वागितितृतीयेवक्ष्यमाणत्वात् ॥ किंभूतंधाम सदासत्यंकालत्रयेविद्यमानं ॥ नित्यसिद्धांब्रह्मरूपांवंदेदेवींसरस्वतीम् ॥ इतितत्स्तवोक्तेः ॥ पुनःप

रंब्रह्मादिसेव्यं । याब्रह्माच्युतशंकरप्रभृतिभिर्देवैःसदावंदितासामांपातुसरस्वतीभगवतीनिःशेषजाड्यापहेतिसंहितोक्तेः ॥ पुनःस्वेननिजेन धाम्नाप्रकाशेनअर्थेषुवाच्येषुनिरस्तोऽपास्तःकुहकोऽस्फूर्तिलक्षणोयेनतत्तथा । यद्वाऽर्थेषुमहावाक्यार्थेषुनिरस्तःकुहकोऽज्ञानरूपोयेनत त्तथा । तथाचज्ञानंदत्त्वामोक्षंददातीतिभावः ॥ मोक्षदेमुक्तिमार्गेइतिरुद्रयामलोक्तेः ।सरस्वत्यावागधिष्ठातृदेवतात्वेनवागप्रतिहतामेभवत्वि तिग्रंथादौतद्ध्यानमुचितमेवेतिप्रतीयतेस्माकमत्र ॥ इतिसरस्वतीपक्षः ॥ २ ॥ ॥छ॥ ॥छ॥

अथसूर्यपक्षः ॥ सूर्यएवसर्वजगतःप्रकाशकत्वाद्धितकरः ॥ किंचास्यपुराणस्यापि कलौनष्टदशामेषपुराणार्कोधनोदितः ॥ इत्यग्रेवक्ष्यमाण त्वेनसूर्यरूपत्वमस्ति ॥ तच्चांतस्तमोनाशकत्वसाम्यात्समंजसं । निखिलश्रुत्यर्थपंकजोद्बोधकत्वाद्गायत्र्यर्थवर्णकत्वाद्वाबोध्यं । गा यत्र्यामपिसूर्यएवस्तूयते । किंचगायत्रीरूपत्वकथनेनद्विजस्यैवास्याध्ययनपाठादावधिकारोनत्वत्रैवर्णिकस्येत्यपिसूचितंभवाति ॥ सूर्यस्यबहिरंतस्तमोनाशकत्वात्सशिष्योव्यासस्तमेवध्यायति ॥ जन्माद्यस्येत्यादिना ॥ वयंतंसूर्यंहृदाधीमहि ॥ तं कं ॥ यतःसूर्यादस्य जगतोजन्मादिभवति । सूर्याद्भवंतिभूतानिसूर्येणपालितानिसूर्यंप्राप्नुवंतीतिसूर्योपनिषदि । आदित्यहृदयेपियन्मंडलंविश्वसृजंप्रसिद्ध मुत्पत्तिरक्षाप्रलयप्रगल्भम् ॥ इत्युक्तम् ॥ यआदिसनातनंब्रह्मवेदंकवयेयाज्ञवल्क्यायतेनेअश्वरूपेणप्रकाशितवान् ॥ एतच्चद्वादशेस्फुटी भविष्यति ॥ यश्चतेजोवारिमृदांतेजसांवारीणांमृदांधाम्नाश्रयत्वेनइतरतःइताज्ञातारतिःक्रीडायस्यसतथाप्रसिद्धइत्यर्थः ॥ तेजसामाश्रयत्वं तुतत्रप्रमाणानपेक्षमेव । वार्याश्रयत्वंतुआदित्याज्जायतेवृष्टिरितिस्मृतेः ॥ वक्ष्यत्यपियथैवसूर्यात्प्रभवन्तिवारःपुनश्चतास्मिन्प्रविशंतिकाले ॥ इतिचतुर्थे । द्वादशेपि अपामादानविसर्गाभ्यामिमांलोकयात्रामनुवहतीति ॥ रविकराएवघनाकारेणपरिणतावर्षंतीति । यथाघनोर्कप्र भवोऽर्कदर्शनइतिवक्ष्यमाणत्वात् ॥मृच्छब्देनतदुपलक्षितंजगत्तस्यधाम्नाप्रकाशकत्वेनेत्यर्थः ।यद्वामर्दयतिसर्वंजगदितिमृद्धर्मराजस्तस्यधा म्नाजनकत्वेनेत्यर्थः । किंचयस्मिन्सूर्येत्रयाणांप्रातर्मध्यसायानांसर्गोरचनामृषा । प्रातरादयःकालास्तुलोकापेक्षयैवनतुतत्रतेसंतीतिभावः । अर्थेष्वभिज्ञःस्वमनोरथपूर्त्तिकामोनायंसदाऽन्वयात्सेवते । किंचसूरयःशास्त्रतात्पर्यज्ञाब्रह्माद्यायत्यंसदामुह्यंति । मुहवैचित्त्ये वैचित्त्यंमोहो

ध्यानंच विशेषेणचिंत्यतेसंज्ञायतेध्येयंयेनतद्विचित्तंध्यानंतस्यभावस्तथा । ब्रह्मेंद्रनारायणरुद्रवन्दितःसनःसदायच्छतुमगलंरवीरितिभावि ष्योक्तेः । यद्वामुह्यंतिकीर्तयंतिधातूनामनेकार्थत्वात् ।एवंब्रह्मादयोदेवाऋषयश्चतपोधनाः ॥ कीर्तयंतिसुरश्रेष्ठदेवंनारायणंरविम् ॥ इतितत्रैवो क्तेः ॥ किंचयःसूर्योयथायथावद्विनिमयःनितरांमीयतेक्षिप्यतेशरीरमनेनेतिनिमयोरोगसमूहः ॥ निपूर्वड्डुमिञ्प्रक्षेपणेऽतोऽप्रत्ययः साधने । वि गतोनिमयोयस्मात्सविनिमयः ॥ आरोग्यंभास्करादिच्छेदितिस्मृतेः । वाताश्मरीदुर्नामत्वग्दोषमहोदरप्रमेहांश्च ॥ ग्रहणीभगंदरमुख्या न्महारुजस्त्वमिनसंहरसीत्यार्यास्तवोक्तेश्च ॥ कुष्ठव्याधिस्तथादद्रुरोगाश्चविविधाश्चये ॥ जपतस्तस्यनश्यंतिभक्त्याशृणुतदर्जुनेतिभविष्ये श्रीकृष्णोक्तेश्च ॥ किंभूतंस्वेनान्यनिरपेक्षेणैवनिरस्तःकुहकोंधकारोयेनसतथातं । किंचयःसूर्यःस्वराट्स्वयंप्रकाशःनत्वन्येनकेनचित्प्रकाशि तःयच्चयेनेद्धःसूर्यस्तपतीतिसूर्यस्तपतियद्भयादितिचश्रुतौ ॥ यदादित्यगतंतेजोजगद्भासयतेखिलम् ॥ यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमाम कमितिस्मृतौचोक्तंतत्त्वाधिकारिकदेवतापरमत्रतुसाक्षाद्ब्रह्मरूपसूर्योध्येयोभिप्रेतः ॥ पुनःकिंभूतं सत्यंत्रैकालाबाध्यंआत्मरूपत्वात् । सूर्य आत्माजगतस्तस्थुषश्चेतिश्रुतेः ॥पुनःपरंसर्वोत्कृष्टंब्रह्मादिपूज्यत्वात् । तदुक्तमादित्यहृदये आदित्यमर्चयेद्ब्रह्माआदित्यमर्चयेच्छिवः ॥ इति । यद्वापातिसर्वमितिपंजलंतद्रातिददातीतिपरस्तं ॥ स्वर्गोभिर्मोक्तुमारेभेभूम्याउदमयंवसु ॥ इतिश्रीदशमेवक्ष्यमाणत्वात् ॥ इतिसूर्यपक्षः ॥ ३ ॥

॥ अथ शिवपक्षः ॥ ॥ शिवरूपाज्ज्ञानमहमित्यार्यास्तवोक्तेश्शिवस्यज्ञानदातृत्वश्रुतेर्व्यासस्तंध्यायति ॥ वयंतंशिवंसदाहृदाधीम हि ॥ तंकं यत्रत्रयाणांनेत्राणांसर्गोरचनाऽमृषा । यद्वात्रयाणांब्रह्मादीनांसर्गःप्रेरणममृषासत्यः । यस्याज्ञयाजगत्स्रष्टाविरिंचिःपालकोहरिः ॥ रुद्रःसंहारकर्त्ताचनमस्तस्मैपिनाकिने ॥ इतिस्मृतेः । सर्गोऽध्यायेचनिर्मोक्षेप्रेरणेसृष्टिहानयोः । स्वभावेगमनेज्ञानेहिंसनेपिचकीर्ति तः ॥ इतिमहीदेवोक्तेः ॥ यद्वात्रयाणांत्रिपुरस्थदैत्यानांसर्गोहिंसनममृषासत्यः । तेजोवारिमृदांयथाऽविनिमयःस्वभावावस्थितिरासृष्टे रमृषाचपुनर्यस्यान्वयाद्देहादाद्यस्याग्रपूज्यस्यगणेशस्यजन्माभूत् । पार्वतीमलादुत्पत्तिर्गणेशस्यकल्पांतरविषयाबोध्या ॥ गणेशस्या दिपूज्यत्वंतुभगवदर्पितमालाधृतेरेवजातमेतच्चब्रह्मवैवर्तेस्पष्टम् ॥ यःशिवआदिकवयेपाणिनयेब्रह्मवेदैकदेशंव्याकरणंतेने । येनाक्षरसमाम्ना

यमधिगम्यमहेश्वरात् ॥ कृत्स्नंव्याकरणंप्रोक्तंतस्मैपाणिनयेनमः ॥ इतिस्मृतेः ॥ पाणिनयेशिवएवददावितिअंगांगिनोरभेदोपचारात् ब्रह्मैकदेशेपिब्रह्मशब्दप्रयोगः। एकदेशत्वेमानंतुमुखंव्याकरणंस्मृतमितिस्मृतिः। यद्वामुखमर्द्धंशरीरस्यसर्वंवामुखमुच्यते॥ इतिकामंदकोक्तेर्व्याकरणंवेदमुखत्वाद्वेदएवेतिध्येयम् ॥ यःशिवःस्वराट्स्वयंप्रकाशः संगीताचार्यश्च संगीताचार्यत्वंग्रंथांतरेस्पष्टम्। स्वयंप्रकाशत्वंतुसर्वेश्वरत्वादेवेति। यश्चेतरतइतराणांकामतरणशीलानांयोगिनामर्थेषुकर्तव्यमनियमादिष्वभिज्ञःनियोजकः इत्थंसमाधिसिद्धयेयमाइत्थंनियमाश्चकार्याइत्येवंप्रेरकः। ज्ञा नियोगेडप्रत्ययः। यस्मिन्शिवेसूरयोभृग्वादयोपितदाचरणनिंदनादिनामुह्यंति। एतच्चचतुर्थेदक्षोपाख्यानेस्फुटीभविष्यति। यद्वायस्मिन्व्याकरणेसूरयोऽन्यशास्त्राभ्यासेनकथंचननिपुणाअपिमुह्यंति। शब्दापशब्दापरिज्ञानात् क्लिश्यंति॥अतएवोक्तमभिज्ञैःयद्यपि बहुधाधीतंतथापिव्याकरणंपठनीयं ॥ शब्दोऽशब्दोमाभूत्सकलंशकलंशकृत्सकृत् ॥ इति। किंच वैयाकरणकिरातादपशब्दमृगाःक्वयांतिसंत्रस्ताः॥नटभटगणकचिकित्सिकमुखविवरगह्वराणियदिनस्युरित्यप्येतदभिप्रायेणैवोक्तं॥ अथच व्याकरणाध्ययनंविनान्यशास्त्राध्ययनस्याधिकारएवनसंभवति।तदुक्तं योवेदवेदवदनंसदनंहिसम्यग्ब्राह्म्याःसवेदमपिवेदकिमन्यशास्त्रम्॥ यस्मादतःप्रथममेतदधीत्यधीमाञ्शास्त्रांतरस्यभवतिश्रवणेधिकारी ॥ इति ॥ तथाचश्रुतिः॥ तस्यवाग्वधोभवतीतिश्रुतेर्व्याकरणंविनान्यशास्त्राध्येतुर्दोषमप्याह।तस्मादादाविदमेवाध्येतव्यम्॥ किंच अनधीत्यशब्दशास्त्रंयोन्यच्छास्त्रंसमीहतेबालः॥ सोहेःपदानिगणयतिनिशितमसिजलेचिरगतस्य ॥ इति ॥ किंभूतं शिवंपरंसर्वनियंतारं ब्रह्मादयोयत्कृतसेतुपालाइतिवक्ष्यमाणत्वात् ॥ किंभूतंव्याकरणंपरंपरप्रयोजनकत्वात्सर्वशास्त्रश्रेष्ठं॥ ननुकिंव्याकरणप्रयोजनंतत्राह रक्षोहागमलघ्वसंदेहाःप्रयोजनमितिभाष्यम् रक्षार्थंवेदानामध्येयंव्याकरणंलोपागमवर्णविकारज्ञोहिसम्यग्वेदान्परिपालयिष्यतीति ऊहःखल्वपिनसर्वैर्लिंगैर्नचसर्वाभिर्विभक्तिभिर्वेदेमंत्रानिगदितास्तेचावश्यंयज्ञगतेनयथायथंविपरिणमयितव्यास्तान्नावैयाकरणःशक्नोतिविपरिणमयितुंतस्मादध्येयंव्याकरणं आगमःखल्वपिब्राह्मणेननिष्कारणोधर्मःषडंगो

१ षडंगानिच शिक्षाकल्पोव्याकरणंनिरुक्तंज्योतिषांगणम्। छंदसांलक्षणंचैवषडंगोवेदउच्यते ॥ इति।

वेदाध्येयोज्ञेयश्चेति प्रधानंचषडंगेषुव्याकरणंप्रधानेचकृतोयत्नःफलवान्भवति ॥ लघ्वर्थंचाध्येयंव्याकरणंब्राह्मणेनावश्यंशब्दाज्ञेयाइति। नचांतरेणव्याकरणंलघुनोपायेनशब्दाःशक्याविज्ञातुं। असंदेहार्थंचाध्येयंव्याकरणंयाज्ञिकाःपठंतिस्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति ।तस्यांसंदेहःस्थूलाचासौपृषतीच स्थूलानिवापृषंतियस्याःसेयंस्थूलपृषतीति। तन्नावैयाकरणःस्वरतोध्यवस्यतियदिपूर्वपदप्रकृतिस्वरत्वंततोबहुव्रीहिरर्थांतोदात्तत्वंततस्तत्पुरुषइतिभाष्यम् ॥ यद्वाकिंभूतंव्याकरणंपरंसर्वोत्कृष्टपुरुषार्थचतुष्टयापादकत्वात् ॥ तथाहिनिष्कारणोधर्म्मःषडंगोवेदोध्येयोज्ञेयश्चेत्यध्ययनविधिर्व्याकरणाध्ययनतांगमयति सांगवेदाध्ययनपरोयंनित्योधर्मःसंध्योपासनादिवदित्यर्थः। षट्स्वंगेषुप्रधानंव्याकरणंपदपदार्थज्ञानस्यव्याकरणमूलत्वात्। वाक्यार्थज्ञानस्यचतद्धेतुकत्वादितिधर्मसाधनता। अथार्थसाधनतामाह। योवाइमांपदशःस्वरशोवाचंविदधातिसआर्त्विजीनोभवति ॥ इतिबोधयतिश्रुतिर्याजनेयजनेचविदुषएवाधिकारम्। षण्णांतुकर्मणामस्यत्रीणिकर्माणिजीविका॥ याजनाध्यापनेचैवविशुद्धाच्चप्रतिग्रहः॥ इति। स्मृतिश्च। अध्यापनंब्राह्मणस्यवृत्तिःतन्निर्वाहश्चशब्दज्ञानाधीनः नह्यशब्दज्ञंशिष्याःसमुपगच्छंतीतिशब्दज्ञानंव्याकरणंविनालघुनोपायेननसंभवतिशब्दानामानंत्यात् ॥ प्रतिपदपाठस्याशक्यत्वात्।अथकामसाधनतामाह।एकःशब्दःसम्यग्ज्ञातःसुष्ठुप्रयुक्तःस्वर्गेलोकेकामधुग्भवतीतिकामसाधनतांबोधयति।साधुशब्दप्रयोगस्यस्वर्गहेतुतावगमात्। अथमोक्षसाधनतामाह। शब्दब्रह्मणिनिष्णातःपरंब्रम्हाधिगच्छतीतिश्रुतिः। किंच तत्त्वावबोधःशब्दानांनास्तिव्याकरणादृते ॥ तद्द्वारमपवर्गस्यवाङ्मलानांचिकित्सितम् ॥ इति। किंच ध्वनिविशेषावच्छिन्नंब्रह्मशब्दवाचकंव्यक्तिविशेषावच्छिन्नंब्रह्मशब्दवाच्यमिति। एवंसतिवेदांतेनसहासिद्धांतैक्यान्मोक्षेहेतुत्वंस्फुटमेवेत्यलमतिप्रसंगेन। किंचवेदांगत्वादस्याध्ययनेद्विजेतरानधिकारएव ॥ पुनःस्वेनधाम्नाप्रकाशेनानिरस्तःकुहकोऽपशब्दोच्चारणरूपोयेनतत्तथा वाक्छुद्ध्यापादकमित्यर्थः ॥ शिवपक्षेनिरस्तोऽपास्तःकुहकोऽघलक्षणःस्वनामोच्चारकाणांयेनतं। यद्द्व्यक्षरंनामगिरेरितंनृणांसकृत्प्रसंगादघमाशुहन्ति। तदितिवक्ष्यमाणत्वात्। यद्वानिरस्ताःकुहकावृकांधकप्रभृतिदैत्यायेनतं ॥ पुनःसत्यंकालत्रयेप्येकरसं ॥ देवाहवैरुद्रमपृच्छन्कोभवानितिसोब्रवीदहमेकःप्रथममा

सीत्वर्त्तामिचभविष्यामिच ॥ इतिश्रुतेः। द्वितीयपक्षेसत्यंशब्दसत्यत्वापादकं। उपायाःशिक्षमाणानांबालानामुपलालना ॥ असत्येवर्त्मनि
स्थित्वाततःसत्यंसमीहते॥इतिभाष्योक्तेरिति। ननुकिंनामव्याकरणत्वं शब्दान्वाख्यापकत्वेसतिव्याख्याविशिष्टसूत्रवार्तिकभाष्याद्यन्य
तमत्वंव्याकरणत्वं।केवलविशेषणोपादानेकोशादावतिव्याप्तिस्तेषामपिशब्दान्वाख्यापकत्वात्। केवलविशेष्योपादानेसूत्रादीनांतत्स्या
च्छब्दानांतन्नस्यादतउभयोपादानंसूत्रवार्तिकभाष्याद्यन्यतमत्वंतत्त्वमित्युक्तेशेखरादिग्रंथानांव्याकरणत्वंनस्यादतो व्याख्याविशिष्टेति
विशेषणम्। सूत्रत्वंच अल्पाक्षरमसंदिग्धंसारवद्विश्वतोमुखम् ॥ अस्तोभमनवद्यंचसूत्रंसूत्रविदोविदुः ॥ सारवदितिसिद्धांतरूपमात्र
स्याभिधायकम् विश्वतोमुखंज्ञापनीयनिपातनीयानेकार्थसूचकं अस्तोभमपरिचितार्थपदरहितम् अनवद्यमप्राकरणिकत्वदुर्बोधत्वाविक
लत्वविसंधिकत्वादिदोषरहितमिति। वार्तिकत्वं उक्तानुक्तद्विरुक्तानांविचारेयन्निबंधनम् ॥ हेतुभिर्यत्प्रमाणंस्यादेतद्वार्तिकमुच्यते ॥ यद्वा
वृत्तिकारेणकृतंवार्त्तिकं वृत्तिश्चस्फुटत्वेनसूत्रस्थपदविवरणम्॥ भाष्यत्वंच सूत्रार्थोवर्ण्यतेयत्रपदैःसूत्रानुकारिभिः॥स्वपदानिचवर्ण्यंतेभाष्यं
भाष्यविदोविदुः ॥ इतिशिवपक्षः ॥ ४ ॥ अथदुर्गापक्षमग्रेव्याख्यास्यामः ॥ ॥छ॥ ॥छ॥
॥ अथगुरुपक्षमाह ॥ ॥ वयंतंगुरुंसदाहृदाधीमहि । तंकं । यतोयस्यगुरोरन्वयात्सेवनादर्थेषुधर्मादिचतुष्केषुसर्वपदवाच्येषुवाऽभि
ज्ञोभवति । चतुर्वर्गपरिज्ञानंशब्दार्थज्ञानमेववा ॥ गुरुसेवनतोनॄणांभवेदेवनसंशयः ॥ इतिस्मरणात् । यस्यदेवेपराभक्तिर्यथादेवे
तथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः ॥ इतिश्वेताश्वतरोक्तेश्च ॥ किंचयत्रगुरौत्रयाणांब्रह्मविष्णुरुद्राणांसर्गोऽमृषा।
गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः ॥ इतिस्मृतेः। कथंयथाऽविनिमयोवस्तुनःस्वाभाविकरूपममृषा। यश्चगुरुःतेजोवारिमृदामेतदुपल
क्षितदेहानामाद्यस्यनिदानस्यकर्मविशेषस्यपरंकारणंकर्तारमर्थाज्जीवंप्रतिब्रह्मज्ञानंतेने । अखंडमंडलाकारंव्याप्तंयेनचराचरम् ॥ तत्प
दंदर्शितंयेनतस्मैश्रीगुरवेनमः ॥ इतिमंत्रात्। यश्चेतरतइतरेभ्योधनान्नदात्रादिभ्यःस्वराट्प्रबलतरःधनान्नादिनैहिकसुखमेवसिध्यति
यच्चधनाद्धर्मकरणेनान्नाद्दानेनोत्पद्यतेपुण्यंतदपिस्वर्गादिफलंदत्वोपक्षीणप्रायमेव । गुरुश्चमंत्रशास्त्रोपदेशादिनैहिकंकारयित्वापारलौ



किकमपिकरोति।भुक्त्वाभोगानैहिकांश्चदेहांतेपरमंपदम् ॥ प्राप्नोतिनात्रसंदेहोगुरुभक्त्यानरोत्तम ॥ इत्यादिपुराणात्। चिंतामणिर्लोक
सुखंसुरद्रुःस्वर्गसंपदम् ॥ प्रयच्छतिगुरुःप्रीतोवैकुंठंयोगिदुर्लभम् ॥ इतिपाद्माच्च। सत्कीर्त्तिर्विमलंयशःसुकवितापांडित्यमारोग्यतावादेवा
क्पटुताकुलेचतुरतागांभीर्यमक्षोभिता ॥ प्रागल्भ्यंप्रभुताविधौनिपुणतायस्यप्रसादेनवैतंवंदेशिवरूपिणंनिजगुरुंसर्वार्थसिद्धिप्रदम्।इतिनि
रुत्तरतंत्राच्च ॥ यद्वाइतरतोदेवादिभ्यःस्वराट्। तदुक्तंनिरुत्तरे । लोकेशोहरिरंबिकास्मरहरोमातापिताभ्यागतःस्वाचार्यःकुलपूजितोयति
वरोवृद्धस्तथाभिक्षुकः ॥ नैतेयस्यतुलांव्रजंतिकलयाकारुण्यवारांनिधेस्तंवंदेशिवरूपिणंनिजगुरुंसर्वार्थसिद्धिप्रदम् ॥ इति। हरौरुष्टेगुरुस्त्रा
तागुरौरुष्टेनकश्चन ॥ तस्मात्सर्वप्रयत्नेनगुरुमेवप्रसादयेत् ॥ इतिग्रंथांतराच्च । चपुनर्यस्यगुरोरन्वयात्संबन्धात्स्वेन स्वःस्वकीयेधनेपिचे
तिकोशात् स्वीयेनार्थाच्छिष्येणनिरस्तंविवेकित्यक्तंशास्त्रंदृष्ट्वाकुहकमज्ञानलक्षणमादिनाश्यतेस्म । अत्रादिर्भक्षणार्थोपिनाशपरोज्ञेयः।
अत्तेर्ण्यंतात्कर्मणिचिण्। यस्मिन्गुरौसूरयोपिशास्त्रसंपन्नाअपिमुह्यंतिमनुष्योयमितिकदाचिद्भ्रमंति । गुरौमनुष्यबुद्धिर्भ्रमएव । तदुक्तं
योगुरुःसहरिस्साक्षाद्भ्रान्ताःपश्यंतितंनरम् ॥ इतिपुराणात् । किंच यस्यसाक्षाद्भगवतिज्ञानदीपप्रदेगुरौ ॥ मर्त्यासद्धीः श्रुतंतस्यसर्वं
कुंजरशौचवत् ॥ इतिवक्ष्यत्यपि । कस्मैकवयेकवित्वाय । भावप्रधानोनिर्देशः । गुरुसेवयाकवित्वलाभःप्रथितएव । सत्कीर्त्तिर्विम
लंयशःसुकवितेतिपूर्वमुक्तत्वात् ॥ किंभूतंगुरुं धाम्नातेजसासत्यंब्रह्मरूपं। सत्यंब्रह्मयथार्थयोरितिकोशांतरात्। आदित्यवर्णंतमसः परस्ता
दितिश्रुतेस्तेजोराशिंसर्वतोदीप्तिमंतमितिस्मृतेश्चतेजोरूपत्वम् । ब्रह्मणःगुरुश्चब्रह्माभिन्नएव । आचार्यंमांविजानीयादितिवक्ष्य
माणत्वात्। गुरुरेवपरंब्रह्मेत्युक्तत्वाच्च। गुरुलक्षणंतु संसारतापविस्तारकारणार्थप्रबोधकः ॥ गुरुर्लोकेसविज्ञेयोनान्यश्चातुर्य्यबोधकः ॥ इ
ति। ब्रह्मवैवर्त्तेतु यस्यास्याद्यस्यविशतिमनुःश्रोत्रंद्विजोतम ॥ सएवतद्गुरुर्ज्ञेयोनमालादिप्रदोगुरुः ॥ इत्युक्तं। वस्तुतस्तु गृणातितत्त्वमि
तिगुरुः । तत्त्वंतु वदंतितत्त्वविदस्तत्वंयज्ज्ञानमद्वयम् ॥ ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यते ॥ इत्युक्तलक्षणंब्रह्मैव। यद्वाचार्यो
पिगुरुर्मुख्यएवतंधीमहीतियोज्यं। यद्वा योगुरुरितरतःपित्रादिभ्यःस्वराट्श्रेष्ठः। तदुक्तमापस्तंबेन आचार्यःश्रेष्ठोगुरूणांसहिविद्यातस्तं

जनयतितच्छ्रेष्ठंजन्मशरीरमेवमातापितरौजनयतः शीर्यत्स्वभावंसर्वयोनिसुलभंप्राकृतंमलजंशररिमितितल्लक्षणात् ॥ आचार्यलक्षणं
त्वागमे । स्वयमाचरतिशिष्यानाचारेस्थापयेत्त्रयत् । आचिनोतिचशास्त्रार्थमाचार्यस्तेनकथ्यते ॥ स्मृतौतु उपनीयतुयःशिष्यान्वेद
मध्यापयेद्द्विजः ॥ सकल्पंसरहस्यंचतमाचार्यंप्रचक्षते ॥ इत्युक्तं । यद्वाज्ञानदोगुरुरत्रध्येयः । ज्ञानंतुमहावाक्यार्थविचारादेवजायते । गिर
तितत्त्वोपदेशेनसंसारमितिगुरुः । गिरतिहद्विषंतंपाप्मानामितिश्रुतेः । महावाक्यार्थविचारस्तुपदार्थविचारमृतेनसंभवाति पदपदार्थज्ञानं
तुशास्त्रोपदेष्टृगुरुतएवजायतेऽतःसएवसर्वगुरुषुमुख्योतस्तमेवधीमहीतिसंबंधः सदाधीमहीत्यत्रगुरुमूर्तेःसदाध्यानमित्यत्रस्मृतौचध्यानमु
पलक्षणमर्चनादेरितिध्येयं । सदाध्यानार्चनाद्यभावेतूत्सवाद्यवसरेतदभावेप्रतिवर्षमाषाढ्यांपूर्णिमायांत्ववश्यमेवगुर्वर्चनंविधेयमन्यथातुम
हापापीस्यात् । तदुक्तंगाधिजसंहितायाम् । सदासेव्याःसदासेव्यागुरवोनृभिरन्यथा ॥ उत्सवेषुविशेषेणतदभावेद्विजोत्तम ॥ आषा
ढ्यांपूर्णिमायांतुप्रतिवर्षंसुखाप्तये ॥ गुरूणामर्चनंकार्यंसंवत्सरकृतंशुभम् ॥ अन्यथानिष्फलंयातिमहापापीसजायते ॥ इतिगुरुपक्षः ॥८॥
अथच आचार्यत्वंत्वाद्यवर्णेमयासंस्थापितंधरे ॥ इतिधरांप्रतिश्रीवाराहोक्तेः । बालयोरनयोर्नृणांजन्मनाब्राह्मणोगुरुः॥इतिगर्गंप्रतिनंदरा
जोक्तेश्चब्राह्मणएवगुरुःकार्योनान्यवर्णइत्यतोब्राह्मणपक्षेश्लोकंयोजयाति । वयंतंब्राह्मणसंघंसदाधीमहि । यतोयस्यब्राह्मणसंघस्यान्व
यात्सेवनात् । इहषष्ठचर्थेतासिः । जन्मात्तितिरस्करोतीतिजन्माद्यंज्ञानं । ऋतेज्ञानान्नमुक्तिरितिश्रुतेः । इहजन्मोपपदादत्ते 'र्मादेर्य' इतिय
प्रत्ययः । वंशेपश्चाद्गतौप्रोक्तःपदानांयोजनेतथा ॥ पदार्थसंगतौप्राप्तौसंसारेसेवनेन्वयः ॥ इत्यनुशासनात् । तस्यजन्माद्यस्यज्ञानस्यत
द्रूपस्यब्रह्मणोवातत्प्रतिपादकशास्त्रस्याभिज्ञोज्ञाताभवतिज्ञानीभवतीतिभावः । पुमानितिशेषः नहिज्ञानिनोजन्मादिरूपःसंसारोभवति
तस्यतुभगवद्रूपतैवजायते । ज्ञानीत्वात्मैवमेमतइतिश्रीमुखोक्तेः । ब्राह्मणसेवयाज्ञानंलभते । इहप्रमाणंतु पुमांल्लभेतानतिवेलामात्मनः
प्रसीदतोत्यंतशमंस्वतःस्वयम् ॥ यन्नित्यसंबंधनिषेवयेतिपृथूक्तिरेव । यश्चसद्यइतरेतइतरेषुक्षत्रियादिषुस्वराट्स्वयमेवराजतइत्यर्थः ।
इहसप्तम्यर्थेतासिः । नतुक्षात्रियादिकृतप्रकाशः । क्षत्रियादयस्तुब्राह्मणानुकंपयैवराजंते । स्वमेवब्राह्मणोभुंक्तेस्वंवस्तेस्वंददातिच ॥ त

स्यैवानुग्रहेणान्येभुंजतेक्षत्रियादयः ॥ इतिमनुस्मृतेः । चतुर्थेपृथूक्तेश्च । यश्चब्राह्मणसंघःतेजोवारिमृदांकोर्थःत्रिवृत्करणश्रुतेरेतन्निर्मित
ब्रह्मांडस्यविनिंरचनांयथायथावत्तेनेविस्तारितवान् । विनिःस्याद्रचनायांस्त्रीप्रापकेनागुरौहरौ॥इतिकौशिकः।कारणेकार्यप्रयोगस्तुगोभिः
श्रिणीतमत्सरमितिवद्बोध्यं । विवृतंचैतदधिकरणमालादौ । प्रमाणंचात्र यैरिदंतपसासृष्टमितिनवमेत्वाक्यम् । यश्चसंघोर्थेषुधर्मार्थकाम
मोक्षेषुअयःशुभावहः। अयःशुभावहोविधिरित्यमरः । विप्राधर्मप्रदालोकेतएवार्थप्रदामताः ॥ कामदामोक्षदादेवसर्वपूज्याःशुभावहाः ॥
इत्यादिपुराणात् । यत्रत्रयाणांसंध्याविधीनांसर्गःकरणममृषासत्यःत्रिकालंसंध्यावंदनकर्तृत्वात् । दशधेनुसमाःसंध्याविप्रास्तिस्र
उपासते ॥ इतिवात्स्योक्तेः । यद्वात्रयाणांब्रह्मविष्णुरुद्राणांसर्गःस्थितिरमृषा । ब्रह्माविष्णुरहंदेवितिष्ठामोविप्रविग्रहे ॥ इतिस्कांदात् ।
यद्वात्रयाणांकामक्रोधलोभानांसर्गोमृषावस्तुतोयत्रनास्तिउपाधिसंबंधंविनासात्विकस्वभावत्वादितिकदाचित्तदाविर्भावउपाधितएव । उ
ष्णत्वमर्कातपसंनियोगाच्छैत्यंहियत्साप्रकृतिर्जलस्य । इतिन्यायात् । यद्वात्रयाणांब्रह्मादीनांसर्गऐक्यनिश्चयोऽमृषा । ब्रह्माविष्णुः
शिवश्चेतिसर्गस्थित्यंतकारिणः ॥ एषुभेदंनकुर्वंतिवेदज्ञाब्राह्मणाःप्रिये॥ इतिस्कांदादेः । किंच्च नतेमय्यच्युतेजेचभिदामण्वपिचक्षते॥ इति
द्वादशेशिवोमार्कंडेयंप्रतिवक्ष्याति । सर्गःस्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिष्वित्यमरः ॥ किंच्च यस्संघःब्रह्महृदायःब्रह्मणोवेदस्यहृदभि
प्रायमासमंतादयतेजानातीतिब्रह्महृदायः । ब्रह्मज्ञानेतथावेदेइतिविश्वः । स्वांतेस्तेनेहरौरम्येऽभिप्रायेचहृदुच्यते ॥ इतिधरणिः ।
अयतेःपचाद्यच् । रहस्यंनैगमंविप्राजानंत्येवनचेतराः ॥ तदर्थस्यविमर्शंतुयतोलब्धादिवानिशम् ॥ इत्यभियुक्तोक्तेः । यस्मिन्वे
देसूरयोब्रह्मादयोपिमुह्यंतियथावत्तत्तात्पर्यंनजानंति । वेदस्यचेश्वरात्मत्वात्तत्रमुह्यंतिसूरयः ॥ इत्येकादशेवक्ष्यमाणत्वात् । किंचशब्दब्रह्म
सुदुर्बोधंप्राणेंद्रियमनोमयम् ॥ अनन्तपारमक्षोभ्यंदुर्विगाह्यंसमुद्रवत् ॥ इत्यारभ्ययावदध्यायसमाप्तिवेदस्यदुर्ज्ञेयतैवोद्धवायोक्तेति । कस्मैआ
दिकवयेसनातनकवित्वायगद्यपद्यरचनालाभायेतियावत् । निर्देशोत्रभावमयः ॥ ब्राह्मणसेवनेनकवित्वलाभस्तु मोक्षकवित्वंचलभेद्द्विजार्च
याभोगान्यशःपुत्रधनादिसौख्यम् ॥ विप्रार्चनादेवभवंतिदेहिनामतःसदार्च्यानृपतेद्विजोत्तमाः ॥ इत्यादिपुराणादवसीयते । यद्वायस्मिन्

विप्रसंघेसूरयःशास्त्राभ्यासेनकथंचिद्विद्वांसोप्यन्येनास्तिककापालिकादयोमुह्यंतिशास्त्रेश्रूयमाणंविप्रमहत्त्वप्रतिपादकवाक्यजातंअव्यक्त रूपिणोविष्णोःस्वरूपंब्राह्मणाभुवि ॥ इति नब्राह्मणान्मेदयितंरूपमेतच्चतुर्भुजम् ॥ इतिच। इयंब्राह्मणनौराजन्विपरीताभवार्णवे ॥ तरंत्य धोगतायस्यांमज्जंत्युपरिवर्तिनः॥ इतिच। मज्जंश्चसर्वतीर्थानिपूजयन्सर्वदेवताः॥पठंश्चसर्वशास्त्राणिनाविप्रःपूज्यतांव्रजेत्॥ असंयतोद्विजः पूज्योनचशूद्रोजितेंद्रियः ॥ कोदुष्टांगांपरित्यज्यदुह्याच्छीलवतींखरीम् ॥ इत्याद्यनेकत्रपठितमर्थवादत्वेनमन्यंतइत्यर्थः । किंभूतंस्वे नासाधारणेनधाम्नातपआदिजन्येनतेजसानिरस्तंकुहकंदर्शनादिकर्तॄणांपापादियेनतं । धामस्याद्गृहतेजसोरिति । कुहकःकपटेपापेदुःखेऽ ज्ञानेऽशुभद्वयोरितिचविश्वः । श्रवणाद्दर्शनाद्वापिमहापातकिनोपिवः ॥शुध्येरन्नंत्यजाश्चापिकिमुसंभाषणादिभिः ॥ इतिमार्कंडेयं शिवो द्वादशेवक्ष्यति । पुनःसत्यंसत्यस्वरूपमोक्षोपयोगित्वात् । भूत्वाद्विजवरत्वंवैमामुपैष्यसिकेवलम् ॥ इतिमुचुकुन्दंप्रतिश्रीमुखोक्तेः । त्रैवर्ग्य र्थोयतोनित्यंकृतांतभयसंयुते ॥ इत्यादिवाक्यैर्मोक्षस्यैवसत्यतावसीयते । पुनःपरंसर्वदेवोपास्यत्वादुत्कृष्टतमं । ब्राह्मणाःसाधवःशांतानि संगाभूतवत्सलाः ॥ एकांतभक्ताअस्मासुनिर्वैराःसमदर्शिनः ॥ सलोकालोकपालास्तान्वदंत्यर्चंत्युपासते॥ अहंचभगवान्ब्रह्मास्वयंचहरिरी श्वरः ॥ किञ्चविप्रान्स्वलाभसंतुष्टान्नमस्येशिरसासकृत् ॥ इतिरुक्मिण्युपाख्यानेश्रीकृष्णः । समत्परोहंद्विजदेवदेवइतिपञ्चमेऋषभः । ब्र ह्मण्यस्यपरंदैवंब्राह्मणाःकिलमेविभो॥इतिसनकादीन्प्रतिविष्णुः।नन्वस्यब्राह्मणाराजन्कृष्णस्यपरमात्मनः॥पुनन्तःपादरजसात्रिलोकींदैव तंमहत् ॥ इतियुधिष्ठिरंनारदः । अन्यान्यपिबहूनिवाक्यानिसर्वत्रेतिहासपुराणादौसंति । किञ्चब्रह्मब्राह्मणआत्मनेतिश्रुतिरपिब्राह्मणम हत्त्वंप्रतिपादयति ॥ इतिब्राह्मणपक्षः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥

अथकर्मकर्तृनिरूपणानंतरंकर्मपक्षेश्लोकंयोजयति । अथयत्कर्मवशादनेकप्रबन्धरचनांकुर्वाणोऽद्यापिसंतोषपदंनागतोहंनिखिलजगन्नाट नपटुतरंतत्कर्मशास्त्रारंभेस्तौमिजन्माद्यस्येति । वयंतत्कर्महृदामनसासदाधीमहि । पद्येतत्पदादर्शनेपियत्पददर्शनात्तल्लाभोयत्तदोर्नित्यसं बन्धत्वात् । तदुक्तं यत्पदन्तत्पदादेवह्युपतिष्ठेतसर्वदा ॥ तत्पदंयत्पदादेवतेसदैवान्वितेमिथः॥इति । तत्किं । यतःकर्मणोस्यपुरुषस्यजन्मा

दि।तदुक्तंकर्मणाजायतेजंतुःकर्मणैवहिलीयते ॥ इति । किंभूतस्यास्य अनुअनुअयतेप्राप्नोतिजीवानित्यन्वयःसंसारःसचासावादिश्चेत्यन्व यादिस्तस्मिन्ननादिसंसारेतरतिप्लवनंकरोतीत्यन्वयादितरस्तस्यतथा । इहषष्ठ्यर्थेतासिः॥"सर्वविभक्तिभ्यस्तासिः"इतिपाणिन्यनुशासना त् । संसारेसेवनेन्वयइतिकोशः पूर्वमुक्तएव । प्लवनंचमनुष्योभूत्वाक्वचित्तुरंगोभवतितत्कृत्वापशुपक्ष्यादिर्भवतियथामंडूकाजलेवान राश्चवृक्षाद्वृक्षेषुप्लवनंकुर्वंतितथाजीवोयोनौयोनाविति ॥ किञ्चयतःयेनकर्मणैवांतःकरणशुद्धिद्वाराऽर्थेषुतत्त्वमस्यादिमहावाक्यार्थेष्वभिज्ञो ज्ञानवान्सन्स्वराट्परमात्मैवभवति ।सर्ववाक्यंसावधारणमितिन्यायादेवकारोत्रबोध्यः । चशब्दोयतइत्यस्यपौनःपुन्यद्योतनार्थः । ब्रह्मवि द्ब्रह्मैवभवतीतिश्रुतेः । स्वराडेवभवतिस्वेनेंद्रियाद्यनपेक्षत्वेनराजतेप्रकाशतइति ॥ तथाचस्वप्रकाशोभवति। चक्षुषश्चक्षुःश्रोत्रस्यश्रोत्रमि त्यादिश्रुतेः॥किंचयत्कर्मकवयेजीवायादिसनातनमर्थादनेकजन्मसभवंब्रह्मज्ञानंतेनेगर्भइतिशेषः । एतत्तृतीयस्कंधेस्फुटीभविष्यति । काव्य कर्त्रसुराचार्यजीवदेवगुरुष्वपि ॥ कविःकिनिजलचरेकाविर्ब्रह्मानिरामयो॥इतिव्याडिः ॥ यद्यस्मिन्कर्मणिसूरयःकवयोपिमुह्यंति । किंकर्मकिम कर्मेतिकवयोप्यत्रमोहिताः ॥ इतिश्रीमुखोक्तेः । वक्ष्यत्यप्येकादशे कर्माकर्मविकर्मेतिवेदवादोनलौकिकः ॥ वेदस्यचेश्वरात्मत्वात्तत्रमुह्यन्ति सूरयः ॥ इति । यत्रयस्मिन्कर्मणिसतित्रयाणांब्रह्मविष्णुरुद्राणांसर्गःकार्यविशेषउत्पत्तिस्थितिलयरूपोऽमृषासत्यः । यतःकर्मणिसत्ये वोत्पद्यतेस्थीयतेलीयतेचातस्तत्सत्तायामेवतत्सत्तेति । कथंयथातेजोवारिमृदांविनिमयोव्यत्यासोऽसदप्यधिष्ठानसत्तयासद्वत्प्रतीययते। तथायमपितेजसोविनिमयोरविकरजालेवारिबुद्धिःवारिमृदोर्विनिमयस्तुमयकृतसदसिदुर्योधनेनानुभूतः । तच्चभारतेसभापर्वणिस्फुटं ॥ किं भूतंकर्म सत्यंकार्यदर्शनात् ॥ कार्यसद्बुद्धेरतोषःपुनःकिंभूतंस्वेननिजेनधाम्नाश्रयेणभगवतापरंशुद्धम् । कर्मणांतस्मिन्समर्पणात्सएवाश्रयः ॥ एतच्च यद्ददासियदश्नासीत्यादिनाभगवतैवार्जुनायोपदिष्टं । शुद्धिरपिकर्मणोभगवत्यर्पणादेव ।कर्मशुद्धिर्मदर्पणमित्येकादशेश्रीमुखोक्तेः । अतएवनिरस्तकुहकमितिहेतुगर्भितंविशेषणम् ॥ निरस्तोदूरीभूतःकुहकोबंधप्रदत्वसामर्थ्यलक्षणोयस्यतत्तथा । पूर्वंबंधप्रदमपिब्रह्मणिसम र्पितंकर्मबन्धनाशकंभवति । तद्वक्ष्यति एतत्संसूचितंब्रह्मंस्तापत्रयचिकित्सितम् ॥ यदीश्वरेभगवतिकर्मब्रह्मणिभावितम् ॥ आमयोयेनभू

तानांजायतेयश्वसुव्रत ॥ तदेवह्यामयंद्रव्यंनपुनातिचिकित्सितम् ॥ एवंनृणांक्रियायोगाःसर्वेसंसृतिहेतवः ॥ तएवात्मविनाशायकल्पं
तेकल्पिताःपरेइति ॥ ॥ इतिकर्मपक्षः ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥
कर्मवशादेवसत्संगोभवतीतिसत्संगपक्षमाह॥ वयंतंसत्संगंहृदाधीमहि॥ तंकंयतायेस्यसत्संगस्यान्वयात्प्राप्तेःआद्यस्येवदप्रोक्तज्ञानस्यइतर
तोलौकिकज्ञानस्यचजन्मभवति॥ इति। आद्योवेदश्चनिगमःश्रुतिःसर्वार्थसंभवः ॥ स्वयंभूश्चहरिप्राणोह्यनादिर्ब्रह्मब्राह्मणौ ॥ द्विजाध्ये
याआदिशास्त्रंद्विजत्वापादकोगुरुरितिबह्वर्थचिंतामणौ । वेदस्याद्यत्वात्तत्प्रनिपादितज्ञानस्यसुतरामाद्यत्वमिति । लौकिकंवैदिकंचार्थ
ज्ञानंसत्संगतोनृणामित्यभियुक्तोक्तेः । सत्संगएवसर्वबोधहेतुरितिभावः । संसारेसेवनेन्वयइतिमहीदेवः ॥ चपुनःयतःसत्संगादर्थेषुध
र्मादिसदुक्तश्रुत्यर्थेष्वभिज्ञोभवति । सर्वेषामर्थज्ञानानांबोधःसत्संगतोभवेत्॥इतिस्मरणात् । यःसत्संगःस्वेनैवराजतेधीजाड्यापाकरणमान
प्रदानादिष्वितिस्वराट् । तदुक्तंभर्तृहरिणा जाड्यंधियोहरातिसिंचातिवाचिसत्यंमानोन्नतिंदिशातिपापमपाकरोति ॥ चेतःप्रसादयतिदिक्षु
तनोतिकीर्तिंसत्संगतिःकथयकिंनकरोतिपुंसाम् ॥ इति। यश्चसत्संगआदिकवयेवाल्मीकयेब्रह्मतत्त्वंतेने ।वाल्मीकेस्तुप्राग्भवेसप्तर्षीणांसंगो
वनेजातस्तैश्चविपरीतंरामेतितत्त्वंतस्मैप्रोक्तमित्यध्यात्मरामायणेप्रसिद्धं । भृगुगोत्रोत्पन्नसुमतिशर्मणःपुत्रोहिपितृशर्मास्वपितृभ्यांदुर्भिक्षे
वनांतरंगतोदस्युभिर्मिलितोभूयसाकालेननष्टगोत्रादिस्मृतिर्दस्युधर्मासप्तर्षिहननेप्रवृत्तस्तैर्बोधितस्तद्धर्मंत्यक्त्वाजपनिष्ठोभूत्तत्रतच्छरीरेव
ल्मीकोभूत्पुनःकदाचित्तत्रागतैस्तद्ध्वनिंश्रुत्वासप्तर्षिभिस्सनिष्कास्यवाल्मीकिनाम्नाहूतस्तद्वरेणवाल्मीकीयाख्यकाव्यंचकारेतिस्कांदी
यावंतीखंडेवाल्मीकेश्वरमाहात्म्येचप्रसिद्धतरम्॥जातेजगतिवाल्मीकेकविरित्यभवत्पदम्॥कवीइतिततोव्यासेकवयस्त्वयिदंडिनि ॥इति
प्रबंधोक्तेरादिकविर्वाल्मीकिरेवेति । यद्यस्मिंस्तत्त्वेसूरयोपिमुह्यंति।यद्वायद्येषुधर्मादिषुसूरयोमुह्यंति । धर्मार्थकाममोक्षाश्चइतिवर्गचतुष्टय
म्॥दुःशकंज्ञानमेतस्यतत्रमुह्यंतिसूरयः॥इतिवाक्यात्।तत्त्वेसूरिमोहस्त्वेकादशेसनकादिप्रश्नेब्रह्मणोमोहदर्शनादवसीयतएव॥ तद्वृत्तंविस्त
रभियेहनोक्तं । यत्रसत्संगेसतित्रयाणांकामक्रोधलोभानांसर्गोमृषा कामसर्गः । कामकारणमेवेहशोकमोहाशमस्याहि ॥ निर्लज्जतानिर्भयता



कामेनक्रियतेक्षणात् ॥ इतिसंहितोक्तेः शोकादिरूपः । यद्वाधर्मकर्तनादिरूपः ॥ तदुक्तं । योधर्मद्रुमकर्तनायकठिनः स्फीतःकु
कारःक्तोयश्चार्थौच्चयशुष्कदारुदहनेविश्रांतवैश्वानरः ॥ योयंमुक्तिमृगीविहिंसनविधौशार्दूलवत्क्रीडतितेनालंमदनेनवैकुरुतरेकृष्णेसतृष्णं
मनः ॥ इतिग्रंथांतरोक्तेः। क्रोधसर्गस्तुदुर्बोधादिरूपस्तदुक्तंदुर्बोधमूलमधिकंलघुतैकमूलंशूलंनिजस्याशिरसःपरिपीडनेन ॥ दुर्दैवकेनबतके
नक्तःकिलैषरोषज्वरोजडधियः स्वकृतोहिदोषः ॥ इति । लोभसर्गस्तुदृष्टश्रुतपदार्थेषुतृष्णाधिक्यमिदंमेभूयादिदंमेभूयादित्येवंरूपः॥अयं
त्रिसर्गस्सत्संगेननश्यतीति । तदुक्तंयश्चेहश्रूयतेलोकेप्रपञ्चः क्रोधकामयोः ॥ लोभस्यचसहीयेतसत्संगेसतिनिश्चितम् ॥ कथंमृषाभवतिय
थातेजोवारिमृदांविनिमयोयथार्थज्ञानेनेतिभावः ॥ किंभूतंसत्संगंसत्यंसत्यस्वरूपंब्रह्मवशीकरणशीलत्वात् ॥ तच्चैकादशेवक्ष्यति नरोधय
तिमांसांख्यंनयोगोधर्मएवच ॥ नस्वाध्यायस्तपस्त्यागोनेष्टापूर्त्तंनदक्षिणा ॥ यथावरुंधेसत्संगःसर्वसंगापहोहिमाम् ॥ सत्संगेनाहिदैतेयाया
तुधानाःखगामृगाः॥इत्यारभ्यसंत्सगान्मामुपागताइत्यंतेन ॥ पुनःपरमुत्कृष्टमन्येषांतदपेक्षयानिकृष्टत्वात् । तद्वक्ष्यतितुलयामलवेनापिन
स्वर्गंनापुनर्भवम् ॥ भगवत्संगिसंगस्यमर्त्यानांकिमुताशिषः॥इति ॥ किंच संसारांतेभवनशीलत्वाद्भगवद्भक्तिजनकत्वाद्वापरम् । तदुक्तं
श्रीदशमेमुचुकुंदेन भवापवर्गोभ्रमतोयदाभवेज्जनस्यतर्ह्यच्युतसत्समागमः ॥ सत्संगमोयर्हितदैवसद्गतौपरावरेशेत्वयिजायतेमतिः ॥
इति। परपुण्यप्राप्यत्वाद्वापरं ॥ तदुक्तं गंगेवाघविनाशिनीजनमनःसंतोषसच्चंद्रिकातीक्ष्णांशोरुचिरप्रभेवजगदज्ञानांधकारापहा ॥ छायेवा
तुरतापनाशनकरीस्वर्धेनुवत्कामदापुण्यैरेवहिलभ्यतेसुकृतिभिःकैरेवसत्संगतिः ॥ इति । पुनःकिंभूतंनिरस्तोऽपास्तःकुहकोऽविवेकलक्ष
णोयेनतं अविवेकःपरःशत्रुःसत्संगेनैवशाम्यतीत्युक्तेः ॥ इतिसत्संगपक्षः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥
सत्संगादेवतीर्थयात्रादौरुचिरुत्पद्यतेऽतस्सर्वतीर्थोत्तमंश्रीगंगाप्रवाहंध्यायाति ॥ गंगायाःसेवनंराजन्नंतःक्लेशंहरेद्ध्रुवम् ॥ इत्युक्तेरंतःक्ले
शनाशकत्वाद्वातंध्यायतिव्यासः ॥ जन्माद्यस्येति ॥ वयंतंश्रीगंगाप्रवाहंसदाधीमहि तंकंयत्रत्रयाणांस्वर्गमर्त्यपाताललोकानांसर्गोनि
र्मोक्षोमुक्तिरमृषा । सर्गःस्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिष्वित्यमरः । मंदाकिनीस्वर्गलोकमधोभोगवतीतथा ॥ भागीरथीमर्त्यलोकंत

मसोमोचयिष्यति ॥ इतिगंगामाहात्म्ये ॥ किंभूतंस्वतएवेनःस्वेनोनकेनचित्कृतः । स्यादिनःस्वामिसूर्ययोरितिकोशात्स्वेनःकृष्ण
स्तस्यसर्ववशित्वात् । तदुक्तं ससुरासुरगंधर्वसयक्षोरगराक्षसम् ॥ जगद्वशेवर्ततेदंकृष्णस्यसचराचरम् ॥ इति । तस्यधाम्नाधामत्वेन
स्वरूपत्वेनपरंसर्वतीर्थोत्तमं । नगंगासदृशंतीर्थंस्वयमेवद्रुतोहरिः ॥ इतिगंगामाहात्म्ये । कृष्णरूपतातुगंगायाःस्वजलेंगत्यागिनांकृष्ण
स्वरूपकर्त्रीत्वात् । तदुक्तंकालिदासेन । इदंहिगांगंत्यजतामिहांगंपुनर्नचांगंयदिवापिचांगम् ॥ करेरथांगंशयनेभुजंगंयानेविहंगंचरणे
चगांगम् ॥ इति । श्रीगंगाद्रवरूपेणत्रैलोक्यंव्याप्यतिष्ठति ॥ इतिसंमोहनतंत्रेपि । यथागंगारूपेणहरिर्द्रुतस्तथागर्गसंहितामथुराखं
डेस्फुटः।स्वेनस्येत्यत्रार्षत्वात्षष्ठचालुक् । यद्वास्वेननिजेनधाम्नाऽधिकरणेनश्रीकृष्णेनपरंआधाराधेययोरभेदोपचारात्।वन्ह्यंगारवत् । पु
नर्निरस्तकुहकंनिरस्ताकुर्भूमिर्यैर्ऋषिभिस्तेनिरस्तकवस्तेषांहोहर्षोयेनतथातं । अत्रसमासांतःकः । ततःसप्तर्षयस्तत्प्रभावाभिज्ञाइत्या
रभ्यमुक्तिमिवागतांमुमुक्षवइवसबहुमानमद्यापिजटाजूटैरुद्वहंतीतिवक्ष्यतिपंचमे ॥ यःस्वराट्अनन्यसाधारणः । तदुक्तं त्रैलोक्येयानितीर्थानिपुण्यक्षेत्राणियानिच ॥ सर्वत्रसर्वधर्माश्चसर्वेयज्ञाःसदक्षिणाः ॥ तपांसिकृच्छ्ररूपाणिश्रुतिःसांगाचतुर्विधा ॥ ब्रह्माविष्णुश्चरुद्रश्च
देवतानांगणास्तथा ॥ पुरुषार्थाश्चसर्वेवैशक्त्योविविधास्तथा ॥ गंगायांसर्वएवैतेसूक्ष्मरूपेणसंस्थिताः ॥ सुस्नातःसर्वतीर्थेषुसर्वक्रतुषु
दीक्षितः ॥ चीर्णसर्वव्रतःसोपियस्तुगंगांनिषेवते ॥ तपांसितेनतप्तानिसर्वदानप्रदश्चसः ॥ सप्राप्तयोगनियमोयस्तुगंगांनिषेवते ॥ सर्व
वर्णाश्रमेभ्यश्चवेदविद्भ्यश्चवैतथा ॥ शास्त्रार्थपारगेभ्यश्चगंगास्नायीविशिष्यते ॥ मनोवाक्कायजैर्दोषैर्दुष्टोबहुविधैरपि ॥ वीक्ष्यगंगांभवे
त्पूतःपुरुषोनात्रसंशयः ॥ कृतेसर्वाणितीर्थानित्रेतायांपुष्करंपरम् ॥ द्वापरेतुकुरुक्षेत्रंकलौगंगैवकेवलम् ॥ योदेहपातनंयावद्गंगातीरंनमुं
चति ॥ सहिवेदांतविद्योगीब्रह्मचर्यव्रतीसदा ॥ कलौकलुषचित्तानांपापद्रव्यरतात्मनाम् ॥ विधिहीनक्रियाणांचगतिर्गंगांविनानाहि॥
अलक्ष्मीःकालकर्णीचदुःस्वप्नोदुर्विचिंतनम् ॥ गंगेतिजपमानानामंगंनोपविशंतिहि ॥ यज्ञदानतपोयोगजपाःसनियमायमाः ॥ गंगा
सेवासहस्रांशंनलभंतेकलौक्वचित् ॥ किमष्टांगेनयोगेनकिंतपोभिःकिमध्वरैः ॥ वासएवहिगंगायाजलंज्ञानस्यकारणम् ॥ अपिदूरस्थ



तस्यापिगंगामाहात्म्यवेदिनः ॥ अयोग्यस्यापिगोविंदोगंगाभक्त्याप्रसीदति ॥ पुराणांतरे गंगागंगेतियोब्रूयाद्योजनानांशतैरपि ॥
मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति॥इदंब्रह्माइदंविष्णुरिदंसाक्षात्परोहरिः॥एतद्ब्रह्मनिराकारंकेवलंजाह्नवीजलम्॥इति।ब्रह्मांडे दृष्टाजा
न्मशतंपापंपीताजान्मशतद्वयम् ॥ स्नाताजान्मसहस्राणिहंतिगंगाकलौयुगे ॥ चिरपर्युषितंवापिशूद्रस्पृष्टमथापिवा ॥ जाह्नव्याः
स्नानदानादौपुनात्यंबुनसंशयः ॥ इति । हेमाद्रिः तटस्थमुद्धृतंवापिशितमुष्णमथापिवा ॥ अपिचांडालभांडस्थंगंगांभःसर्वदाशुचि ॥
भुक्त्वावायदिवाऽभुक्त्वारात्रौवायदिवादिवा ॥ नकालनियमःकश्चिद्गंगांप्राप्यसरिद्वराम् ॥ इति । यश्चप्रवाहःयथायथावत्तेजोवारिमृदां
विनिमयःतेजःप्रतापंवांतिगच्छंतीतितेजोवादेवाःअरीन्म्रदंतिचूर्णयंतिसेवकानामित्यरिमृदः । मृदमर्दनेऽतऔणादिकःक्विप्संप्रसारणश्च ।
तेचतथातेषांपुनस्तथा । देवास्तेजस्विनोमताइतिपूर्वनिरुक्तौस्वजनार्त्तिदजंतुहराश्चसुराइतिपरनिरुक्तौमानमभियुक्तोक्तं । विनिमयः
प्रशस्तनिवासस्थानम् । विशेषेणनयतिमनोयत्रसाविनिरावसथः । डिप्रत्ययोत्रणीप्रापणेऽतःकर्त्तर्यौणादिकः । विनिःपुमानावसथइति
कोशात् । प्रशस्तोविनिर्विनिमयः । प्राशस्त्येमयट् । किंभूतंसदासत्यंब्रह्मरूपत्वात् । पुण्येब्रह्मस्वरूपेहरिचरणरजोहारिणिस्वर्गमार्गे इति
शंकरोक्तेः । यःप्रवाहःसूरयःसुष्ठुरयोवेगोयस्यसतथा । निपातनादुपसर्गस्यदीर्घः । यद्वासूतेउत्पादयतिधर्मंदर्शनादिकर्तॄणामितिसूःसचा
सौरयःसूरयः । सूरंसूर्य्यंयातिप्रापयतिस्वसंगिनामितिवासूरयः । जाह्नव्याःसर्वदासेवीसंप्राप्यरविमंडलम् ॥ ततोब्रह्मपुरंयातिनभूयोभुवि
जायते ॥इतिसंहितोक्तेः । चपुनःयःप्रवाहःइतरतइतरेषांपापजीवानांसर्पादीनामपितीरस्थानांजन्मात्जन्मनिवर्तकः । कृष्णरूपप्रापक
त्वात् । तदुक्तमभियुक्तैः कदाचिन्नागारिःसुरतटिनिवीथीषुविचरन्समाकृष्यव्यालंसकलमगिलत्कंचनबिलात् । चतुर्बाहुर्भूत्वातदुपरि
लसत्पीतवसनोगतोविष्णोर्लोकंतवजननितीरस्यमहिमा॥ इति । एतदभिप्रेत्यैववाल्मीकिनाप्युक्तं त्वत्तीरेतरुकोटरांतरगतोगंगेविहंगोवरं
त्वन्नीरेनरकांतकारिणिवरंमत्स्योथवाकच्छपः॥नैवान्यत्रमदांधसिंधुरघटासंघट्टघंटारणत्कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः॥इ
ति।यश्चप्रवाहआदिकवयेब्रह्मणेआनंदंतेने । वैकुंठादागतंनीरंगांगंदृष्ट्वाचतुर्मुखः ॥ आनंदंपरमंलेभेअहोभाग्यंनृणामिह॥इतिगंगामाहात्म्ये।

यस्यप्रवाहस्यांतिसमीपेस्थितोजनअर्थेष्वलौकिकस्वर्गीयादिपदार्थेषुआत्मसाक्षात्कारोपयोगिषुभक्त्यादिषुवाऽभिज्ञःसाक्षात्कारवान्भव
ति । गंगातीरेसदावासात्सर्वाभिज्ञोभवेत्स्फुटम् ॥ इत्युक्तेः । यश्चप्रवाहःअमुहीमोहनिवर्तकःकुतोऽन्वयात्सेवनतः । कुतोमोहःप्रभवतिगं
गासेवनतोनृणाम् ॥ इत्यादिपुराणात् ॥ इतिगंगापक्षः ॥ ९ ॥ ॥ ॥ ॥ ॥
श्रीगंगातीरस्यतपोभूमित्वात्तदग्रेतपःपक्षेश्लोकान्वयमाह ॥ वयंतत्तपःसदाधीमहियतस्तपसःस्वराट्श्रीविष्णुरपिअस्यविश्वस्यजन्मा
दिअन्वयाच्चकार । सृजामितपसाविश्वंग्रसामितपसापुनः । बिभर्मितपसाविश्वमितिवक्ष्यमाणत्वात् । किंभूतःस्वराट्इतरतइतरानभ
क्तान्अर्थेषुविषयादिषुअभिज्ञोनियोजकः । अभितोज्ञापयतिनियोजयतीत्यभिज्ञः । ज्ञानियोगेचुरादिः । एषएवासाधुकर्मकारयतीतिश्रु
तेः । भक्तांस्तुनतथेत्यर्थतोज्ञायते । तद्भक्तास्तुभगवतादीयमानमपिमोक्षादिनगृह्णंतीतिनैकात्मतांमेस्पृहयतिकेचिन्मत्पादसेवाभिरता
मदीहाः ॥ येन्योन्यतोभागवताःप्रसज्यसभाजयंतेममपौरुषाणि ॥ इति । एतेनभक्तिर्निष्फलेतिनशंक्यं । तैर्दर्शनीयावयवैरुदारवि
लासहासेक्षितवामसूक्तैः ॥ हृतात्मनोहृतप्राणांश्चभक्तिरनिच्छतोगतिमण्वींप्रयुंक्ते ॥ इति । यत्तपःकवयेब्रह्मणेपिआदिसनातनंब्रह्मज्ञानंते
ने । तपसोनंतरब्रह्माज्ञानंलेभेसनातनम् ॥ इत्युक्तेः । ज्ञातोसिसेव्यसुचिरादितितदुक्तेश्च । किंचएवंपुराधारणयात्मयोनिर्नष्टांस्मृतिंप्रत्यवरुध्य
तुष्टात् ॥ तथाससर्जेदममोघदृष्टिर्यथाप्ययात्प्राग्व्यवसायबुद्धिः ॥ इतिवक्ष्यमाणत्वाच्च । यद्यस्मिंस्तपसिसूरयोपिमुह्यंतिकठिनतरंतपःकर्तुम
शक्यमित्यादिरूपमोहमाप्नुवन्तीतिभावः ॥ यस्मिंस्तपसित्रिसर्गःत्रयाणामंतःकरणशुद्धिपारलौकिकानंदैहिकयशसांसर्गोनिश्चयोऽमृषा
सत्योभवाति । तदुक्तंतपसामनसःशुद्धिःपरत्रतपसासुखम् ॥ तपसालभ्यतेकीर्तिःकिंवक्ष्येतपसःपरम् ॥ इतिसंहितायाम् । यथातेजोवारिमृ
दामविनिमयआत्माऽमृषासत्यस्तथेतिसत्यत्वमात्रेदृष्टांतः । कीदृशंतपःब्रह्मणःपरमेश्वरस्यहृद्धृदयम् । तथाचवक्ष्यतिभगवानेव तपोमे
हृदयंब्रह्मन्निति । पुनःपरंसर्वोत्कृष्टंतपसोनपरंकिंचिदितिवाराहे । परपराक्रमरूपत्वाद्वापरंवीर्यमेदुश्चरतपइतिवक्ष्यमाणत्वात् । पुनःसत्यं
सत्यस्वरूपभगवत्प्रापकत्वात् । तथाचवक्ष्यतितपसैवपरंज्योतिर्भगवंतमधोक्षजम् ॥ सर्वभूतगुहावासमंजसाविंदतेपुमान् ॥ इति ॥ पुनः



स्वेननिजेनधाम्नाप्रकाशेननिरस्तंदूरीकृतंकुहकमज्ञानलक्षणंयेनतत्तथा । सर्वेषांतपसाऽज्ञानंनाशमायातिवैनृणाम् ॥ इतिपुराणांतरात् ।
किंभूतःस्वराट्आयःसर्वलाभस्वरूपः आयःसर्वनिधौलाभेइतिकोशात् ॥ इतितपःपक्षः ॥ १० ॥ ॥ ॥ ॥ ॥
तपसिध्येयमोंकारपक्षंप्रसंगागतमाह ॥ ओंकारस्यसर्ववाङ्मयादित्वात्तद्ध्यानस्यचओंकारंबिन्दुसंयुक्तंनित्यंध्यायंतियोगिनः ॥ कामदंमो
क्षदंचैवेतिसर्वफलप्रदश्रवणाद्वा । ओमित्येकाक्षरंब्रह्मेतिब्रह्मरूपत्वाद्वा । ओंकारंयेत्वधीयतेमनसाब्रह्मसत्तमाः ॥ विमुक्ताःसर्वकर्मभ्यस्तेयंपश्यं
तिसाधवः ॥ एतद्धिपरमंब्रह्मेतिहरिवंशोक्तेश्चप्रथममोंकारंव्यासोध्यायाति । वयंतमोंकारंसदाधीमहि ॥ तंकं यत्रत्रयाणांभुवनानांवेदा
नांदेवानांविश्वादिजीवानांविराडादीनांवातिसृणांजाग्रदाद्यवस्थानांसृष्ट्यादीनांवासर्गोऽकारादिभिर्वर्णैरचनाऽमृषायथार्थएव । तथाहिऋ
ग्वेदोजाग्रदवस्थाभूर्लोकोब्रह्माविश्वोविराट्सृष्टिश्चाकारार्थः । तथा यजुर्वेदःस्वप्नावस्थाभुवर्लोकोविष्णुस्तैजसोहिरण्यगर्भःस्थितिश्चेत्यु
कारार्थः । तथासामवेदःसुषुप्त्यवस्थास्वर्लोकोमहेश्वरःप्राज्ञोव्याकृतःप्रलयश्चेतिमकारार्थइतिनृसिंहतापिन्यां । किंचपुष्पदंतेनाप्युक्तं । त्रयीं
तिस्रोवृत्तीस्त्रिभुवनमथोत्रीनपिसुरानकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति । इति । कुतः । सर्वेषुपदपदार्थेष्वन्वयात् । अन्वयश्चसर्वाक्षरसमाम्ना
यकारणत्वादेव । कारणंहिकार्येष्वनुगतमेवभवति तत्तुसमवाय्येव । मृद्घटादिष्विवेतिबोध्यं । कारणत्वमोंकारस्यश्रीकृष्णएवस्वभक्तशिरोम
णिमुद्धवंप्रत्येकादशेवक्ष्यति । ओंकाराद्व्यंजितस्पर्शस्वरोष्मांतस्थभूषिताम् ॥ विचित्रभाषाविततांछंदोभ्यश्चतुरुत्तरैः ॥ इत्यादिना । किं
च तस्याथासंस्त्रयोवर्णाअकाराद्याभृगूद्वह ॥ धार्य्यंतेयैस्त्रयोभावागुणनामार्थवृत्तयः ॥ ततोक्षरसमाम्नायमसृजद्भगवानजः ॥ अंतस्थो
ष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ तेनासौचतुरोवेदांश्चतुर्भिर्वदनैर्विभुः ॥ असृजदित्यादिना । यतओंकारादाद्यस्यसर्वक्लेशापहारका
रणीभूतस्यज्ञानस्यजन्मभवति उपासनयेतिशेषः ॥ तारोपासनयाज्ञानंजायतेसर्वदुःखहृत् ॥ इत्यादिपुराणोक्तेः । तारःप्रणवओंकारोवेदादिः
सर्वकारणम् ॥ इत्यभिधानचंद्रोदयोक्तेस्तारपदंप्रणवपरं ॥ चपुनर्यतोयस्याभिज्ञःस्वराट्ब्रह्मैवभवति ॥ ओंकारोविदितोयेनज्ञातंतेना
खिलंजगत् ॥ सब्रह्मरूपोदेहस्थोप्यथयातिपरंपदम् ॥ इत्यादिपुराणात् । यद्यस्मिन्नोंकारेइतरतइतरेज्ञामुह्यंति । प्रथमार्थेतासिः । मूढान्य

नीचेष्वितरोनिष्कामेचसकामके ॥ इत्यनेकार्थकल्पद्रुमः ॥ कथंमुह्यंतीत्याकांक्षायामाह । ओमितीदंसर्वमितिश्रुतिमाकर्ण्यतद्विमर्शा
समर्थाः संतः कथमोंकारादिदंजातमेतन्नसंगच्छतइत्येवंमुह्यंतीतिभावः । येसूरयोविद्वांसस्तेतुइतिवितर्केनमुह्यंति । किंतुब्रह्मह्रदाब्रह्मरू
पेणोपासतएवेतिभावः । कस्मैआदिकवयेआदिकविंविष्णुंप्राप्तुमित्यर्थः । आदौसृष्ट्यादौकौत्युच्चारयतिब्रह्मणेतपतपेत्यादिरूपंवचश्चतुः
श्लोकीरूपंवेत्यादिकविर्विष्णुस्तस्मै । तुमोप्रयुक्तस्य इतिचतुर्थी ।प्रणवाभ्यासतोविप्राविष्णुःप्राप्योनचान्यथा ॥ इतियोगचिंतामणौ ।
तिज्यतेक्षम्यतेपराधोभृगुकृतपादताडनादिरूपोयेनसतेजाविष्णुः । तिजनिशानेक्षमायांचेत्यतःकर्मण्यसुः । त्यज्यतेऽज्ञैरितिवातेजाः ।
नमांदुष्कृतिनोमूढाःप्रपद्यंतेनराधमाः ॥ इतिश्रीमुखोक्तेः ॥ मूढोऽयंनाभिजानातिलोकोमामजमव्ययम् ॥ इतितदुक्तेश्च । यद्वासर्व
तेजोरूपत्वात्तेजा इति । तेजस्तेजस्विनामहं ॥ यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकम् ॥ इतिस्मृतेः ॥ आदित्यवर्णंतमसःपर
स्तात् ॥ इतिश्रुतेश्च ॥ व्रियतेस्वीक्रियतेसृष्टिव्यवहारोनेनेतिवारिर्ब्रह्मा । वृञ्वरणेऽतइञ्प्रत्ययः । यद्वावरयतीच्छतिसृष्ट्यादिज्ञान
मितिवारिः । वरईप्सायामदंतश्चौरादिकोयंक्वचिदनदंतोप्यतएववृद्धिरत्र । सईश्वरोमेकुरुतान्मनोरथमितितृतीयेवक्ष्यमाणत्वात् । वा
रिर्नाब्रह्मणिक्लीबंनीरेस्त्रीगजबंधने ॥ इतिकोशसर्वस्वात् । म्रदतिप्रलयेमर्दयतिसर्वमितिमृद्रुद्रः । म्रदमर्दनेकर्तरिक्विप्संप्रसारणंचनिपा
तनात् । तेषांतेजोवारिमृदांविष्णुब्रह्मरुद्राणांयथायथावत्विनिमयःयओंकारोबोधकःविशेषेणनितरांमय्यतेऽनेनेतिविनिमयः । मयग
तावतोच् । यद्यप्योंकारस्तिसृभिर्मात्राभिर्गुणादीनपिबोधयति । तथापिविशेषतोब्रह्मादीनामेवबोधकःतदुक्तंनारदीये । मात्रास्ति
स्रःसमाख्याताब्रह्मविष्ण्वीशदेवताः ॥ अकारोब्रह्मणोरूपमुकारोविष्णुरूपकम् ॥ मकारोरुद्ररूपंस्यादर्द्धमात्रापरात्मिका ॥ इति । किंभूतं
स्वेननिजेनधाम्नाप्रकाशेनसत्यंपरं । सच्छब्देनपृथिव्यप्तेजांसित्यच्छब्देनवाय्वाकाशावितिं । सच्चत्यच्चाभवदितिश्रुतेः । सत्यंसत्यश
ब्दोपलक्षितंब्रह्मांडंपिपर्त्तिप्रकाशयतीतिसत्यंपरं । अत्रपिपर्त्तिप्रकाशनेतुधातूनामनेकार्थत्वात् । ॐकारएवेदंसर्वंप्रकाशितवानितिश्रु
तेः । पुनःनिर्गतोस्तोनाशोयेषांतेनिरस्ताअमरास्तान्कोहयतिविस्मापयतीतिनिरस्तकुहकस्तं ॥ देवाअपितदुपासनाफलंविचार्य



विस्मयमाप्नुवंत्यहोॐकारमाहात्म्यमितिकथयंतीतिभावः ॥ इत्योंकारपक्षः ॥ ११ ॥ ॥ छ ॥ ॥ छ ॥
अथनारदपक्षः ॥ सर्वेषामवताराणामोंकारार्थत्वाविशेषेपिप्रथमंव्यासोनिजोपदेष्टृत्वान्नारदंध्यायति ॥ वयंतंनारदंह्रदामनसाधीमहि ।
तंकं यतोयस्यान्वयात्संगादाद्यस्यसर्वादिकारणीभूतब्रह्मज्ञानस्यजन्माभूत् ॥ प्रल्हाददक्षात्मजध्रुवप्रचेतआदीनामितिशेषः । एतच्चाग्रे
चतुर्थादिस्कंधेषुस्पष्टीभविष्यति । ब्रह्मणआद्यत्वात्तज्ज्ञानस्याप्याद्यत्वंज्ञानज्ञेययोर्भेदऔपचारिकएवनपरमार्थतइति । किंचयोनारदोऽ
र्थेष्विन्द्रियार्थेषुइतरतःइतादूरीभूतारतिर्यस्यसइतरतः । नैष्ठिकत्वाद्विषयाभिलाषरहितइत्यर्थः । चपुनःयोनारदोऽभिज्ञःनबिभेत्यन्य
तइत्यभिःकृष्णः । ञिभीभयेऽतऔणादिकोडिः । भीषास्माद्वातःपवतेइत्यादिश्रुतेः । यद्बिभेतिस्वयंभयमितिस्मृतेश्च । तद्भयंतुसर्वे
षांनतस्यकस्यचिद्भयमस्तीतिभावः । तंजानातीत्यभिज्ञःकृतकृष्णसाक्षात्कारइत्यर्थः । आहूतइवमेशीघ्रंदर्शनंयातिचेतसि ॥ इतितदु
क्तेः । चपुनःयोनारदःस्वराट्स्वरंस्वररूपंब्रह्माटतिजानातीतिस्वराट् । विशेषतोभ्यस्तसंगीतशास्त्रत्वात्तस्य । अटगतौगत्यर्थानां
ज्ञानार्थतापि । ज्ञानगमनप्राप्तिभेदेनगतिपदस्यार्थत्रयपरत्वात् । स्वरस्यब्रह्मतातु स्वरब्रह्मविभूषितां ॥ स्वरब्रह्मणिनिर्भातहृषीके
शपदांबुजे ॥ इत्याद्युक्तेर्वक्ष्यमाणत्वात् । स्वरलक्षणंतुसंगीतरत्नाकरे । श्रुत्यनंतरभावीयःस्निग्धोनुरणनात्मकः ॥ स्वरोरंजयति
श्रोतुश्चित्तंसस्वरउच्यते ॥ इति । श्रुतिस्तुस्वरारंभकःशब्दविशेषः । तदुक्तं प्रथमश्रवणाच्छब्दः श्रूयतेह्रस्वमात्रतः ॥ साश्रुतिःसं
परिज्ञेयेति । किंच श्रुतिभ्यस्तुस्वराःषड्जर्षभगांधारमध्यमाः ॥ पंचमोधैवतश्चाथनिषादइतिसप्तते ॥ इति । एषांस्वरूपंविस्तरभियेह
नोक्तं । यत्रयस्मिन्नारदेत्रयाणांभक्तिज्ञानवैराग्याणांसर्गोनिश्चयोऽमृषासत्यः । येनकरतलीकृतामलकवद्भक्तेःपरमात्मन्यनुरागरूपायाज्ञान
स्यजीवब्रह्मणोरैक्यरूपस्यवैराग्यस्यचाब्रह्मलोकभोगारुचिरूपस्यचस्वरूपंनिश्चितं । भक्तिर्ज्ञानंविरक्तिश्चयाथात्म्यंचास्यवैहरेः ॥ इति
सप्तमेयुधिष्ठिरंप्रतितदुक्तेरेवावसीयतइति । तेजोवारिमृदामाविनिमयःस्वाभाविकंरूपंयथासत्यंतथेतिदृष्टांतार्थः । वाचारंभणंविकारोनामधे
यंमृत्तिकेत्येवसत्यमितिश्रुतेः । किंभूतंनारदं स्वेननिजेनधाम्नाप्रभावेणपरंसर्वोत्कृष्टंपरंपालकंवेतिपिपर्त्तिपालयतिज्ञानोपदेशेनसंसाराद्

क्षत्यज्ञानितिपरस्तमितिनिरुक्तेः पूपालनपूरणयोरतोऽप्रत्ययः । पुनःसदानिरस्तकुहकंसतांकर्ममार्गेप्रवर्तमानानांप्राचीनबर्हिषादीना
मासमंतान्निरस्तंदूरीकृतंकुहकंकर्मकरणजक्लेशोऽध्यात्मश्रावणेनेतितथा । एतच्चपुरंजनोपाख्यानादौस्पष्टम् । योनारदआदिकवयेम
ह्यंब्रह्मतद्रूपंभागवताख्यंपुराणंतेनेप्रकाशितवान् । इदंभागवतंनामपुराणंब्रह्मसंमितम् ॥ इतितदुक्तेः । यद्यस्मिन्भागवतेसूरयोविद्वांसो
पितात्पर्यावधारणासमर्थाःसंतोमुह्यन्तिव्याकुलीभवंति । गुरूपदेशंविनायथाब्रह्मनज्ञायतेतथेदमपीतिबोध्यम् । गुरुमतएवबोधश्रवणा
त् ॥ तथाचश्रुतिः ॥ आचार्यवान्पुरुषोवेदेति । कीदृशंभागवतंसत्यंसत्यस्वरूपब्रह्माभिन्नत्वात् । श्रीमद्भागवतेशास्त्रेश्रीकृष्णेपरमा
त्मनि ॥ अंतरंयेप्रपश्यंतितेनराब्रह्मघातिनः ॥ इतिपाद्मोक्तेर्भेददर्शनस्यानर्थजनकत्वश्रुतेरेवेत्यलम् ॥ इतिनारदपक्षः ॥ १२ ॥
॥ अथरामपक्षः ॥ ॥ श्रीरामंसच्चिदानंदंयोगिध्येयांघ्रिपंकजम् ॥ वंदेस्वाज्ञाननुत्यर्थंसदाबोधप्रलब्धये ॥ १ ॥ सर्वावतारेषुरा
मएवसमुद्रमुल्लंघ्यसीतारूपांश्रियमवापातस्तद्ध्यानेनप्रारिप्सितग्रंथरूपाब्धिमुल्लंघ्यचित्तशांतिरूपांश्रियमवाप्स्यामीत्थंमनसिनिधाय
व्यासोरामस्मरणरूपंमंगलमाचरति ॥ जन्माद्यस्येति ॥ वयंतंरामंहृदामनसाधीमहि ॥ तंकंयत्रत्रयाणांरावणकुंभकर्णेंद्रजितांसर्गोनि
श्चयोराममंमारयामोरामोवाऽस्मान्मारयिष्यतीत्येवंरूपोऽमृषासत्योमृषावा ॥ यद्वायत्रत्रयाणांपित्राज्ञापालनशिवधनुरामर्दनाब्धिसेतु
करणानांसर्गोनिश्चयोऽमृषेति । किंचयोरामःजन्माद्यस्ययतोर्थेष्वभिज्ञः जन्मनआदिकारणमज्ञानमस्यतिनाशयतीतिजन्माद्यस्यं
अज्ञानेनैवकर्मक्रियतेज्ञानिनोलोकसंग्रहमंतरातदप्रतिपादनात् । कर्मणाचजन्मादिभवत्यतोऽज्ञानमेवजन्मादिहेतुः । तथाचजन्मा
द्यस्यंज्ञानंतस्मैयततेप्रयततइतिजन्माद्यस्ययत्तस्यतथातस्यवेदस्यार्थेष्वभिधेयेषुकर्मादीनुपसर्जनीकृत्यब्रह्मप्रतिपादनपरेषुयज्ञेनदानेन
तपसानाशकेनेत्यादिरूपवाक्यार्थेषुअभिज्ञःसर्वतोज्ञानवान् ततएवतस्याविर्भावश्रुतेः । ऋचःसामानिजज्ञिरेइतिश्रुतेर्वेदाभ्यासेनैवज्ञानमु
त्पद्यतेऽतोवेदस्यैवयत्नोलोकबोधे। तदुक्तंज्ञानमुत्पद्यतेपुंसांनिगमाभ्यसनाद्ध्रुवम् ॥ ज्ञानेनतीर्य्यतेनित्यंसंसृतेःकारणंतमः॥ इत्यादिपुराणा
त् ॥ चपुनःयोरामःअन्वयादितरतःस्वराट् अन्वयःपुत्रस्तदादयोदानतीर्थतपआदयस्तैस्तीर्य्यतइत्यन्वयादितरःनरकः अपुत्रस्यगति

र्नास्तीतिस्मृतेः। अंजस्तरेमभवताप्रजदुस्तंरयद्ध्वांतमितिविचित्रकेतूपाख्यानेवक्ष्यमाणत्वाच्च। दानव्रततपोभिश्चतीर्थसेवनयाजनैः॥नरको
नभवत्येवहरेराराधनात्तथा॥ इतिवाक्याच्च। तस्मान्नरकात्स्वान्भक्तान्राजयतिनयतिवैकुंठमितिस्वराट्। कृष्णकृष्णेतिकृष्णेतियोमांस्मरति
नित्यशः॥ जलंभित्त्वायथापद्मंनरकादुद्धराम्यहम्॥ इतितदुक्तेः। रामकृष्णयोरवतारतोभेदेपिवास्तवाभेदात्कृष्णोक्तीरामोक्तिरेव यएवरामश्च
सएवकृष्णइतिचिरंजीवभट्टैर्विद्वन्मनोरंजिन्यामुक्तत्वात् । यश्चकवयेनिपुणायलक्ष्मणायआदिसनातनंब्रह्मज्ञानंरामगीतारूपंतेनेप्रकाशि
तवान्तथाह्यध्यात्मरामायणोत्तरकांडे त्वंशुद्धबोधोसिहिसर्वदेहिनामात्मास्यधीशोसिनिराकृतिःस्वयम् ॥ इत्यादिरूपंलक्ष्मणवाक्यंश्रुत्वा॥
आदौस्ववर्णाश्रमवर्णिताःक्रियाःकृत्वेत्यादिनातंबोधितवान् । यद्यस्मिन्ज्ञानेतद्बोधकशास्त्रेसूरयोप्यधीतशास्त्राअपिमुह्यंतितेषामपिभ्रमबा
हुल्यान्नात्मसाक्षात्कारोजायते। कीदृशंतंस्वेननिजेनासाधारणेनधाम्नासत्तास्फूर्तिरूपेणसदासत्यंपरमार्थभूतंनिरस्तात्यक्ताकुर्भूमिर्यैस्तेनि
रस्तकवस्तैर्ह्रियतेप्राप्यतइतिनिरस्तकुहः। प्रापणार्थाद्धरतेर्डः। सएवनिरस्तकुहकः स्वार्थेकः। तंनिरस्तकुहकं ग्रामाद्वनंक्षितिभुजोपिययुर्य
दर्थाइत्यग्रेवक्ष्यति । पुनःतेजोवारिमृदांयथायोग्यंपरंप्रकाशकंदेहादीनांप्रकाशस्यात्माधीनत्वात् । नहिजडंचैतन्यमंतरेणप्रकाशते ॥
यत्सत्तयासर्वमिदंप्रकाशतइत्यादिवचनात् । कथंभूतावयंविनिमयःविगतोभगवतोन्योनिमिराश्रयोयेषांतेतथाभगवदाश्रयाइत्यर्थः ।
निमीराजाआश्रयश्चेतिकोशात् ॥ इतिरामपक्षः ॥ १३ ॥ ॥ छ ॥ ॥ छ ॥
अथकृष्णपक्षः ॥ सर्वावताराणांश्रीकृष्णस्याधिष्ठानत्वेनास्मिञ्छास्त्रेप्रतिपाद्यत्वेनचतस्येतिहेतोरादौतंव्यासोध्यायति ॥ जन्माद्यस्ये
ति॥ वयंसदाहृदामनसातंश्रीकृष्णचंद्रंधीमहि॥ तंकंयतोयस्यान्वयाद्वंशादाद्यस्यब्रह्मणोविधेर्जन्माभूदितिशेषः। मय्यनंतगुणेऽनंतेगुणतोगु
णविग्रहः ॥ यदासीत्तितएवाद्यःस्वयंभूःसमभूदजइत्यत्रब्रह्मण्याद्यशब्दप्रयोगदर्शनादाद्योब्रह्मार्थकइतिषष्ठेवक्ष्यातिहरिर्दक्षंप्राति। पुनस्तंकं
यतोन्वयात्सेवनात्स्वराड्दरिद्रःसुदामाअर्थेषुलौकिकपदार्थेषुइतरतोभूत्। इताप्राप्तारातिःक्रीडायेनसतथा ॥ अत्रसमासांतोडः। स्वराडिव
निपानखनित्रमिंद्रइत्यत्रस्वराट्शब्दोदरिद्रार्थकोदृष्टोतोत्रापिबोध्यः। तद्वक्ष्यतिश्रीदशमेसएव नूनंबतैतन्ममदुर्भगस्यशश्वद्दरिद्रस्यसमृ

द्विहेतुः ॥ महाविभूतेरवलोकतोन्योनैवोपपद्येतयदूत्तमस्योति । यद्वाइतरतोगतेच्छः तदुक्तंश्रीदशमे विषयान्जाययात्यक्ष्यन्बुभुजेनातिलं
पट इत्यादिना ॥ कीदृशःस्वराट्अभिज्ञःसर्वशास्त्रार्थकुशलः श्रीकृष्णेनसहकृताध्ययनत्वात् । तदुक्तंतेनैव किमस्माभिरनिर्वृत्तंदेवदेवजग
द्गुरो ॥ भवतासत्यकामेनयेषांवासोगुरावभूत् ॥ इतियःकृष्णःकवयेर्जुनायादिसनातनंब्रह्मगीतारूपंतेने केस्वर्गेवातिगच्छतिनिवातकवचा
दिवधेनदेवत्राणार्थमितिकविः।वागतिगन्धनयोरतोडिरौणादिकः॥तयोःषष्टिसहस्राणियज्ञघ्नांस्तोपितुःपिता ॥ जघानस्वर्गतोराजन्नेकइंद्र
प्रियंकरः॥इतिवक्ष्यमाणत्वात् । यास्मिन्कृष्णेसूरयोब्रह्मादयोपिमुह्यंति । ब्रह्ममोहस्तुदशमेइतीरिशेतर्क्यैनिजमहिमनिस्वप्रमितिकेपरत्राजा
तोतन्निरसनमुखब्रह्मकमितौ ॥ अनीशेपिद्रष्टुंकिमिदमितिवामुह्यातिसतिचच्छादाजोज्ञात्वासपदिपरमोजाजवनिकाम् ॥ इत्यादिनास्फुटी
भविष्यति । यत्रश्रीकृष्णेतेजोवारिमृदांविनिमयोविकृतिरूपोदेहोमृषैव । त्रिवृत्करणश्रुतेस्त्रिभिरपिकेषांचिन्मतेदेहादिरुत्पद्यतेऽतोत्रत्रया
णांग्रहणंनविरुध्यतेऽयंशरीरीतिव्यवहारस्तास्मिन्मायाकाल्पितएव मायायोपात्तविग्रहमितिभीष्मोपाख्यानोक्तेः परब्रह्मत्वात्तस्य । तद्व
क्ष्यतिश्रीदशमे कृष्णमेनमवेहित्वमात्मानमखिलात्मनाम् ॥ जगद्धितायसोप्यत्रदेहीवाभातिमायया ॥ इतिअशरीरंवावसंतमित्यादिश्रुते
श्चात्मनोऽशरीरत्वप्रसिद्धेः । यथात्रिसर्गःत्रिगुणकार्यःप्रपञ्चोमृषेतिदृष्टांतार्थः ॥ प्रपञ्चमिथ्यात्वंत्वनुमानश्रुतिस्मृतिभिःसाध्यतएव ।
तथाहिप्रपंचोमिथ्यादृश्यत्वात्जन्यत्वाद्वाघटादिवत् ॥ यन्नैवंतन्नैवंयथात्मेत्यनुमानम् । आदावन्तेचयन्नास्तिवर्तमानेपितत्तथा ॥
इतिस्मृतिः । नेहनानास्तिकिञ्चनेतिश्रुतिश्च । किंभूतंकृष्णंस्वेनालौकिकेनधाम्नागोवर्धनोद्धरणदावानलपानादिरूपतेजसानिरस्तं
कुहकंमनुष्यनाव्यप्रदर्शनरूपंयेनसतथातं । नह्येतन्मनुष्येणकर्तुंशक्यतेविनेश्वरमितिभावः।पुनःसत्यंपरमसत्यंसत्यस्यसत्यमित्युक्तेः ।
पुनः परंपरिपूर्णतमंपूर्णवताराणामाधारभूतंलयस्थानत्वात् ॥ तदुक्तंगर्गसंहितायाम् । ककारःकमलाकांतऋकारोरामइत्यपि ॥
षकारःषड्गुणपतिःश्वेतद्वीपनिवासकृत् ॥ णकरोनारसिंहोयमकारोह्यक्षरोग्निभुक् ॥ विसर्गौचतथाह्येतौनरनारायणावृषी ॥ संप्र
लीनाश्चषट्पूर्णायस्मिञ्छब्देमहात्मनि ॥ परिपूर्णतमेसाक्षात्तेनकृष्णःप्रकीर्तितः ॥ कमलाकांतादीनांमूर्तिव्यूहानांकृष्णेलयोदृश्यते

गोलोकगतैर्देवैरितितद्वृत्तंतुविस्तरभियेहनोक्तं । षण्णांपूर्णत्वमपिगोलोकखंडेउक्तं । पूर्णोनृसिंहोरामश्चश्वेतद्वीपाधिपोहरिः ॥
वैकुण्ठोपितथायज्ञोनरनारायणःस्मृतः । परिपूर्णतमःसस्याद्यास्मिन्नेतेलयंययुः ॥ इति । एतादृशस्तुश्रीकृष्णएवनचान्यइत्यलमतिप्रया
सेन ॥ इति कृष्णचंद्रपक्षः ॥ १४ ॥ ॥ ॥छ॥ ॥छ॥ ॥छ॥
अथधन्वंतरिपक्षः॥श्रोतॄणांसुखप्राप्त्यर्थंवक्तुश्चादौस्तुवेहरिं॥धन्वंतरिंमहारोगनाशकंस्मृतिमात्रतः ॥ वयंतंधन्वंतरिंसदाहृदाधीमहियस्मि
न्ध्यातेसतित्रयाणांवातपित्तश्लेष्मणांसर्गोज्वरादिरूपोमृषाऽसत्योभवाति नश्यतीतिभावः।धन्वंतरिस्मृतौसत्यंनश्यन्तिविविधारुजः ॥ इ
त्यादिपुराणात्।धन्वंतरिश्चभगवान्स्वयमेवकीर्तिनाम्नानृणांपुरुरुजांरुजआशुहंतीत्यग्रेवक्ष्यमाणत्वात् । यश्चपुनःआद्यस्यांतुयोग्यस्यय
गीयभागस्यजन्माविर्भावमन्वयात्यज्ञेचभागममृतायुरवावरुंधइत्युक्तेः।धन्वंतरिश्चभगवानायुर्वेददृगिज्यभाग्॥ इत्युक्तेश्चधन्वंतरितःपूर्वंचि
कित्सकेभ्योयागभागोनासीदिति । भिषजंगणकंचैवद्विजंश्राद्धादिषुत्यजेत् ॥ इतिस्मृतेः । आद्यस्येतिअदभक्षणेऽस्मात्यत् । तेजोवारिमृ
दांविनिमयोदेहोयतोयस्यस्मरणेनयथाकोर्थोऽरुग्भवतिस्मृतमात्रार्तिनाशनइतिवक्ष्यमाणत्वात् । यश्चकवयेकवित्वायकल्पत्वायारोग्य
त्वायोतियावत् । कंसुखंवातियस्मिन्कालेसकविरारोग्यावस्थारूपःकालः । कविरितिभावप्रधानोनिर्देशः । अत्रवातेर्डिरौणादिकः । ब्रह्म
कोर्थोवेदमर्थादायुर्वेदंतेनेविस्तारितवान् ॥ आयुश्चवेदमनुशास्त्यवतीर्यलोकइतिद्वितीयेवक्ष्यमाणत्वात्।तस्यायुर्वेदस्याष्टावंगानि । तदुक्तं
नीलकंठेन कायबालग्रहोर्ध्वांगशल्यदंष्ट्राजरावृषान्॥अष्टावंगानितस्याहुश्चिकित्सायेषुसंश्रिता ॥ इति तस्यायुर्वेदस्यकायचिकित्साबाल
चिकित्साग्रहोभूतप्रेतादिऊर्ध्वांगंशिरोनेत्रादिशल्यंशस्त्रघातादिदंष्ट्रास्थावरजंगमात्मकंविषंतेषांचिकित्साजरारसायनादिनाजरायादूरीक
रणंवृषोवाजीकरणतंत्रमित्यर्थः । कथंभूतंब्रह्मइतरतःइतरेभ्यःशास्त्रेभ्यःस्वराट्शरीरारोग्यजनकत्वेनेहलोकेचमत्कारजनकम् ॥ सर्वेलोका
आयुर्वेदविदग्रेदैन्यमाश्रित्यवर्त्तंतेसामंताइवसार्वभौमाग्रेऽतस्स्वराडितिसमुचितंविशेषणं । पुनःपरंसर्वोत्कृष्टंधमार्थकाममोक्षाणांशरीरं
साधनंमतम् ॥ तच्छुद्धिर्जायतेयेनतच्छास्त्रंहिपरंमहत् ॥ इत्यातंकहरणोक्तेः ॥ किञ्चक्वचिद्दानंक्वचिन्मानंक्वचिद्भोगःक्वचिद्यशः॥ चिकि

त्सयाप्रजायेतचिकित्सानास्तिनिष्फला ॥ इतिभिषक्कल्पलतोक्तेः किंभूतंधन्वंतरिंसत्यंभगवद्रूपत्वात् भगवद्रूपत्वंतुहर्यवतारेषुतस्यग
णितत्वात्। यश्चपुनःअर्थेषुरोगहारिविश्वौषधादिपदार्थेष्वभिज्ञःएतद्द्रव्यममुकरोगहारीतिज्ञानवान्। यस्मिन्नायुर्वेदेसूरयोज्ञातान्यशास्त्राअ
पिमुह्यंति सिंहीत्वचमुपाहरेदित्यादिषुसिंह्वचाःशार्दूलभार्यायास्त्वचमुपरितनचर्मोपाहरेदित्याद्यर्थकल्पनयामुह्यंति। किञ्चतत्रब्राह्मीरसंक्षि
पेदितिवीक्ष्यब्राह्मीतुभारतीभाषेतिकोशाद्ब्राह्मीसरस्वतीतद्रूपंपुस्तकमतस्तज्जलेनाब्धव्यतद्रसंक्षिपेदित्येवंमोहमाप्नुवंतीतिभावः। पुस्त
कंभारतीरूपंनचतस्मात्परंस्मृतम् ॥ इतिग्रंथांतरोक्तेः। पुनःकिंभूतंब्रह्मआदिसनातनंनतुधन्वंतरिणैवरचितं। आयुर्वेदंधनुर्वेदंगान्धर्ववेदमा
त्मनः ॥ स्थापत्यंचासृजद्वेदंक्रमात्पूर्वादिभिर्मुखैरितिवक्ष्यमाणत्वात्ततोपिप्राक्तनाद्ब्रह्मणस्तत्सर्गश्रुतेः ॥ पुनःस्वेननिजेनधाम्नाप्रतापेननि
रस्तंदूरीकृतंकुहकंसर्वलोकरोगरूपंयेनतंतथा ॥ इतिधन्वंतरिपक्षः ॥ १९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
अथचश्रीनृसिंहस्यभक्तपक्षपातितयाममापिश्रीभागवतव्याख्यानसामर्थ्यप्रदानेनपक्षंकरिष्यतीतिहेतोर्नृसिंहंध्यायतिव्यासः ॥ जन्माद्य
स्येति ॥ वयंतंनृसिंहंधीमहि ॥ तंकं यस्यान्वयात्सेवनादभिज्ञोनारदादवाप्तज्ञानःप्रल्हादःअर्थेषुसंसारीयपदार्थेषुइतागतारतिःप्रीति
र्यस्यसइतरतः। समासांतोत्रडः। मुह्यंतियद्वर्त्मनिवेदवादिनोब्रह्मादयोह्येषभिनत्तिमेमतिं इति तदुक्तेः यः प्रल्हादः स्वराट्सन्आदिसनातनं
चतत्कंसुखमित्यादिकंतद्वेतिप्राप्नोतीत्यादिकविः। वीगतिव्याप्त्यादावतोडिः। तस्मैदत्तात्रेयायआपप्रापतदग्रेसप्तमेप्रकटीभविष्यति। किं
चयश्चादिकविरात्रेयस्तस्यहृदाप्रियत्वेनसौहार्देनब्रह्मज्ञानंतेने सुखमस्यात्मनोरूपंसर्वेहोपरतिस्तनुः ॥ इत्यादिवाक्यैः। सौहार्दमनासि
स्वीयेह्यप्रियेपिप्रवर्तते ॥ इतिकोशात्। यस्मिन्नृसिंहे सूरयोब्रह्मादयोभीताःसंतोयंदृष्ट्वामुह्यन्तिततपार्श्वंन्नगच्छन्ति। धातूनामने
कार्थत्वान्मुहिरत्रगतौ ॥ यत्रत्रयाणांदेवदैत्यनराणांसर्गोनिश्चयोऽमृषादेवनिश्चयोहतोयमसुरोल्पकइत्यादिरूपः ॥ दैत्यनिश्चयोऽयंमांमार
यिष्यतीत्येवंरूपः ॥ नरनिश्चयोऽयमस्माकंत्रातेत्यादिरूपः। यद्वात्रयाणांदेवदैत्यनराणांसर्गोयत्रमृषाऽसत्यः ॥ नायंनरोनापिसुरोनदैत्यः
कश्चिदीदृशः ॥ श्रूयतेहिमयालोकेयादृशोयमुपस्थितः ॥ इतिपुराणांतरेहिरण्यकशिपूक्तेः ॥ तेजोवारिमृदांविनिमयोदेहोयथामृषा ॥



कीदृशंतंस्वेनासाधारणेनधाम्नातेजसानिरस्तादूरीकृताःकुहकाःकपटिनोदैत्यायेनतं। सर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवमित्युक्तेः।
पुनःसदासत्यं। अहमेवासमेवाग्रेनान्यद्यत्सदसत्परम् ॥ पश्चादहंयदेतच्चयोवशिष्येतसोस्म्यहम् ॥ इतिश्रीमुखोक्तेः ॥ सत्यंज्ञानम
नंतमितिश्रुतेश्च। परंसर्वोत्कृष्टंसर्वदेवदैत्यगंधर्वयक्षादिस्तुत्यत्वात्। तच्चसर्वंसप्तमेस्फुटं। नह्यनुत्कृष्टःसर्वैःस्तूयतेकिन्तुसर्वोत्कृष्टएव
स्तूयतइतिभावः ॥ इतिनृसिंहपक्षः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥
॥ अथमत्स्यावतारपक्षः ॥ ॥ वयंतंमत्स्यावतारंहरिंहृदाधीमहि। यतःस्वराड्ब्रह्माआद्यस्यसर्वादिकारणस्यवेदस्यजन्माविर्भावमन्व
यात्। हत्वासुरंहयग्रीवमित्युक्तेः। योहरिरर्थेषुकर्तव्येषुअभिज्ञःजलचररूपंविनाजलेगुप्तस्यान्वेषणासम्भवइत्याद्यर्थाभिज्ञः। योमत्स्य
रूपोहरिः कवयेविवेकिनेसत्यव्रतायनृपायइतरतश्चेतरेभ्यऋषिभ्यः। आदावित्यर्थेआदीत्यव्ययं। सृष्टचादौप्रलयान्तेचब्रह्मतत्प्रतिपा
दकंतद्रूपंमात्स्याख्यंपुराणंतेने। तद्वक्ष्यत्यष्टमस्कन्धान्ते प्रलयपयसिधातुःसुप्तशक्तेर्मुखेभ्यःश्रुतिगणमुपनीतंप्रत्युपादत्तहत्वा ॥ दितिज
मकथयद्योब्रह्मसत्यव्रतानांतमहमखिलहेतुंजिह्ममीनंनतोस्मि ॥ इति। यद्यस्मिन्मत्स्यरूपेहरौसूरयोपिविद्वांसोपिसत्यव्रतादयःईश्वरोभू
त्वाकिमर्थंमात्स्यंतिर्यग्योनिरूपंदधारेत्यादिमोहंप्राप्नुवंति। किमर्थमदधाद्रूपंमात्स्यंलोकजुगुप्सितम् ॥ इतिवक्ष्यमाणत्वात्। यद्वात
द्दर्शनेमुह्यंतिइयताकालेनकथमियाञ्जातइत्यादिरूपंमोहंयांति। तद्वक्ष्यत्यष्टमे एवंविमोहितस्तेनवदतावल्गुभारतीम् ॥ योभवान्योज
नशतमहाभिव्यानशेसरः ॥ नैवंवीर्योजलचरोदृष्टोस्माभिःश्रुतोपिवा ॥ इति। यत्रमत्स्यरूपेहरौतेजोवारिमृदांतत्तच्छब्दोपलक्षितानां
रजस्सत्वतमसांत्रिषुकालेषुसर्गस्त्रिसर्गोदेहसम्बन्धादिरूपोमृषामायाविलसितत्वात्। यथामत्स्यादिरूपाणिधत्तेजह्याद्यथानटः ॥ इत्या
दिनाप्रथमे। उच्चावचेषुभूतेषुचरन्वायुरिवेश्वरः ॥ नोच्चावचत्वंभजतेनिर्गुणत्वाद्धियोगुणैः ॥ इत्यादिना अष्टमेचवक्ष्यति। कथंमृषा
यथाविनिमयोमिथ्याज्ञानंशुक्तिरजतादिस्वेनधाम्नातेजसानिरस्तंप्रलयकालीनंतमोयेनतं। पुनःसदासत्यंपरंसत्यंधर्मंपिपर्तीतिसत्यंपर
स्तं। पिपर्तेरत्रखः। धर्मःसत्यःसदाज्ञेयअसत्योऽधर्मईरितः। सत्येनलभतेस्वर्गमसत्येनतमोव्रजेत् ॥ इत्यादिपुराणात्। मत्स्या

वतारस्यवेदावनकर्तृत्वेनात्रवेदार्थप्रकाशोममापिभूयादित्याशयेनतन्नतिः ॥ इतिमत्स्यावतारपक्षः ॥ १७ ॥ ॥ ॥ ७ ॥
॥ अथकूर्मावतारपक्षः ॥ ॥ वयंतंकूर्मरूपंहरिंसदाधीमहि । तंकंयतोयस्यानुग्रहादाद्यस्यात्तुंयोग्यस्यामृतस्यचपुनरितरतइतरेषांकौ
स्तुभादीनांजन्माविर्भावंस्वराडिंद्रोऽन्वयात्प्राप । यत्रयस्मिन्कूर्मरूपेहरावाविर्भूतेसातित्रयाणांदेवदैत्यमुनीनांसर्गोनिश्चयोऽमृताद्याप्ति
रूपोऽमृषासत्योजातः । यथाऽविनिमयोवस्तुयाथात्म्यबोधोऽमृषा । यःकूर्मःकंसुखंवांतिप्राप्नुवन्तिदेवादयोयत्रसःकविर्मंदरगिरिस्तस्मै
कोर्थस्तंभर्तुंधारयितुंसत्यंपरंदेहंकमठाकृतिंतेने । कवयइतितुमोऽप्रयुक्तस्येतिकर्मणिचतुर्थी । सच्छब्दःपृथिव्यप्तेजसांवाची त्यच्छब्द
स्तुवाय्वाकाशवाची सच्चत्यच्चाभवदितिश्रुतौश्रुतः । तथाचसच्चत्यच्चसत्त्यंपञ्चभूतसमुदायस्तेनपूर्यतइतिसत्त्यंपरोदेहस्तं । यस्मिन्कूर्म
रूपेसूरयोपिभगवन्महित्वंकथंचिज्जानंतोपिमुह्यंति । अहोकूर्मपृष्ठस्यनतोन्नतत्वात्तत्रकथंमंदरःस्थितिंलेभइत्यादिरूपं । यद्वेयद्विस्तृतदे
होयंकथंजातइत्येवंरूपंमोहमाप्नुवंति ।यश्चतेजोवारिमृदामेतच्छब्दोपलक्षितानांदेवदैत्यनराणामर्थेषुकार्येषुअभिज्ञःअनयारीत्यैवैतत्सेत्स्य
तिनान्यथेतिज्ञानवान् । कूर्मरूपंविनाजलगतमंदरोगिरिरुपरिनायास्यतीत्येवंविचार्यैवहरिःकूर्मरूपंदधारेतिभावः । कथंभूतंदेहंब्रह्मब्रह्मदावि
रिंचिप्रियेणस्वेनधाम्नाऽसाधारणशक्त्यानिरस्तमपास्तंदेवादीनामुदधिमथनाशक्यत्वरूपंकुहकंयेनसतथातं । कूर्माविर्भावतःपूर्वंदेवादैत्या
श्चसमुद्रमथनेसंशयिताःकथममृतावाप्तिर्नइतिततश्चहरिणाकूर्मरूपेणाविर्भूयतत्संशयोनिवर्त्तितइतिभावः ॥ इतिकूर्मपक्षः ॥ १८ ॥
अथवामनपक्षः ॥ वयंतंवामनंसदाह्वदाधीमहि ॥ तंकंयत्रत्रयाणांपादन्यासानांसर्गोऽमृषासत्यएव । यद्वात्रयाणांलोकानांसर्गोऽमृषाददर्श
लोकत्रयमेवतत्रेत्युक्तेः । यथाऽविनिमयस्तात्विकंरूपममृषापृथिव्यादेरितिशेषः । वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमितिश्रुतेः।
तेजोवांतीतितेजोवाःअरीन्मृदंतीत्यरिमृदस्तेजोवाश्चतेरिमृदश्चतेजोवारिमृदस्तेषांदेवानामितरतइतरेषुदैत्येषु ।अत्रसप्तम्यर्थेतासिः।जायते
जगदेभिरितिजन्मानिपृथिव्यादीनिपंचभूतानि। अत्रसाधनेजनेर्मन्।तेषामाद्यस्यपृथिवीरूपस्यनिमित्तमितिशेषः।अन्वयात्प्राप । यातेर्ल
ङ् । योवामनोऽर्थेषुदेवप्रयोजनेष्वभिज्ञोज्ञाताविनाछलंबलिर्नजेयइत्यादिवृत्तज्ञः । यःस्वेनासाधारणरूपेणराजतेसंकल्पग्रहणानन्तरंप्रका

शतइतिस्वराट् । जलेतुपतितेहस्तेवामनोभूद्वामनः॥इतिहरिवंशोक्तेः।योवामनोयतःयततेदेवकार्यार्थमितियतः । पचाद्यच् ॥यआदिकव
येभार्गवायब्रह्म ब्रह्मन्संतनुशिष्यस्ययज्ञाच्छिद्रंवितन्वतः॥यत्तत्कर्मसुवैषम्यंब्रह्मदृष्टंसमम्भवेत्॥इत्यादिरूपंज्ञानंतेने । उशनाभार्गवःकविरि
त्यमरः।यद्वाब्रह्मशब्दोब्राह्मणमहत्त्वपरः । तेनैववाक्येनब्राह्मणमहत्त्वंतेने । यस्मिन्वामनेसूरयोबलिप्रभृतयोपिबालोयंकिंकरिष्यतीतिमुह्यं
ति । किंभूतंस्वेनधाम्नास्वस्वरूपप्रकाशेननिरस्तंकुहकंमर्त्यलक्षणंकपटंयेनतं ॥ पुनःसत्यंपातीतिसत्यंपोबलिः॥अलुक्समासःआर्षः।यद्वा
खप्रत्ययेमुम् । तस्मैरात्यात्मानंसुतलैश्वर्यंभावींद्रपदंवेतिसत्यंपरस्तं । डप्रत्ययः । वामनंमोहनाशायभजेतेतिवाराहोक्तेस्तद्ध्यानंव्यास
देवेनकृतमादाविति ज्ञेयमत्र ॥ इतिवामनपक्षः ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥
अथवाराहपक्षः ॥ ॥ वयंतंवाराहंसदाह्वदाधीमहि ॥ तंकं यत्रत्रयाणांप्रातःसवनमध्याह्नसवनसायंसवनादीनांसर्गोऽमृषात्रिपरूरसाया
मित्युक्तेः । सवनान्यवस्थितिरित्युक्तेश्च । यद्वायत्रत्रयाणांवेदानांसर्गोऽमृषा । त्रयीमयंरूपमिदंचसौकरमितिवक्ष्यमाणत्वात् । यथाऽ
विनिमयोयथार्थज्ञानरूपोऽमृषा । यद्वानिश्चयेनमीयतेप्राक्षिप्यतेहितैषिभिरितिनिमयः पापसंघः । डुमिञ्प्रक्षेपणेऽतःस्वरादइत्यप्रत्ययो
बोध्यः । विगतोनिमयोयेनसविनिमयःपवित्रताहेतुर्धर्मादिःनविनिमयःपवित्रताहेतुर्यस्मात्सोऽविनियमः । नहिज्ञानेनसदृशंपवित्र
मिहविद्यते ॥ इतिश्रीमुखोक्तेः । सत्यंज्ञानमनंतंब्रह्मेतिश्रुतेश्च ज्ञानंसत्यमेवतदन्यन्मृषेति ॥ किंचबुद्धींद्रियार्थरूपेणज्ञानंभातितदा
श्रयमितिद्वादशेज्ञानस्यसत्यत्वंवक्ष्यति । योवाराहःआद्यस्यब्रह्मणःसकाशाज्जन्माविर्भावमन्वयात्प्राप । यतइतिप्रथमार्थेतसिः ।
आद्यस्येतिपंचम्यर्थेषष्ठी । सृजतोमेक्षितिर्वार्भिःप्लाव्यमानारसांगता ॥ अथात्रकिमनुष्ठेयमस्माभिःसर्गयोजितैः ॥ इतिचिंतयतस्त
स्यब्रह्मणःसहसानघ ॥ वराहतोकोनिरगादंगुष्ठपरिमाणतः ॥ इतितृतीयेवक्ष्यति ॥ योवाराहःइताःसंसार्यपेक्षयाज्ञानिनोरताअनुरक्ताय
स्मिन्सइतरतः । ज्ञानिनामहमेवेष्टइतिगीतोपनिषदुक्तेः ॥ योऽर्थेषुभूम्युद्धरणदैत्यवधादिष्वभिज्ञःज्ञानवान् ॥ यःस्वेनैवप्रलयेराजतइ
तिस्वराट् ॥ ईक्षाज्योतिरित्युक्तेस्तदासूर्यादिप्रकाशोनास्तीतिप्रतीयते ॥ यःकेजलेवेतिगच्छतिप्रलयेइतिकविर्भूमिस्तस्यैआदिब्रह्म

वाराहपुराणरूपं । यद्वाआदौकेजलेवेतिगच्छतीत्यादिकविर्हिरण्याक्षस्तस्मै ब्रह्मएतेवयंन्यासहरारसौकसामित्यादिनानिजमहत्त्वं
तेने । अत्रब्रह्मशब्दोब्रह्ममहत्त्वपरोलक्षणयाबोध्यः । मुख्यार्थबाधेगौणार्थकल्पनंलक्षणेतिकेचित् । वस्तुतस्तुशक्यसम्बंधोलक्षणा ।
साद्विधाकेवललक्षणालक्षितलक्षणाचेति । आद्यात्रिधाजहल्लक्षणाऽजहल्लक्षणाजहदजहल्लक्षणाभेदात् । शक्यार्थपरित्यागेनतत्संबंध्यर्थां
तरेवृत्तिर्जहल्लक्षणा यथागंगायांघोषःप्रतिवसाति अत्रगंगापदस्यस्वसंबंधिनितीरेजहल्लक्षणा । शक्यार्थापरित्यागेनतत्संबंध्यर्थांतरेवृत्तिरजह
ल्लक्षणा यथामंचाः क्रोशंतीति अत्रमंचपदस्यस्वार्थापरित्यागेनमंचस्थपुरुषेषुअजहल्लक्षणा शक्यैकदेशपरित्यागेनैकदेशेनुवृत्तिर्जहदजहल्ल
क्षणा इयमेवभागत्यागलक्षणाचोच्यते यथासोयंदेवदत्तइत्यत्रसोयमितिपदयोः केवलदेवदत्तपिंडे । अत्रतच्छब्दस्तद्देशतत्कालविशिष्टदे
वदत्तापिंडवाचकः । इदमूशब्दत्स्वेतद्देशैतत्कालविशिष्टदेवदत्तपिंडवाचकः । तदुक्तंइदमस्तुसन्निकृष्टंसमीपतरवर्तिचैतदोरूपम् ॥ अदस
स्तुविप्रकृष्टंतदितिपरोक्षेविजानीयात्॥इतिमनोरमादौ ॥ यथातत्त्वमसीत्यत्रतत्त्वंपदयोरखंडचैतन्ये । अत्रचमायोपहितचैतन्यंतत्पदवा
च्यार्थः । स्थूलसूक्ष्मशरिरोपहितचैतन्यंत्वंपदवाच्यार्थः। ततश्चतत्पदवाच्यैकदेशोमायातत्परित्यागेनैकदेशेचैतन्येवृत्तिस्तत्पदस्य एवंत्वं
पदवाच्यार्थैकदेशस्थूलसूक्ष्मशरीरादिस्तत्परित्यागेनैकदेशेचैतन्येवृत्तिस्त्वंपदस्येतिभावः ॥ द्वितीयामाह।शक्यपरंपरासंबंधोलक्षितलक्ष
णा । यथाद्विरेफपदस्यमधुकरेद्विरेफपदस्यशक्यंरेफद्वयं तस्यभ्रमरपदेनसंबंधस्तस्यमधुकरेणसंबंधः तथाचद्विरेफपदस्यमधुकरेणपरंपरसंबं
धोलक्षितलक्षणेत्यर्थः।किंचगौण्यपिलक्षितलक्षणैव यथासिंहोदेवदत्तइति अत्रसिंहपदस्यसिंहमृगःशक्यस्तस्यक्रौर्येणसंबंधःक्रौर्यस्यदेवदत्ते
नसंबंधइतिलक्षणाबीजंतुक्वचिदन्वयानुपत्तिःक्वचित्तात्पर्यानुपत्तिरितिध्येयंमनीषिभिः । अत्रवक्तव्यंतुबह्वस्तिप्रकृतमधुनानुसरामः । यस्मि
न्वाराहेसूरयोमुनयोपिमुह्यंति किमेतत्सौकरव्याजंदिव्यंसत्वमवस्थितम् । इत्यादितर्करूपंमोहंप्राप्नुवंति । किंभूतंतेजोवारिमृदांदेवानांपरं
पालकंसर्वेश्वरत्वात् एषसर्वेश्वरइतिश्रुतेः । पुनःस्वेनधाम्नातेजसानिरस्तःकुहकःमायाविहिरण्याक्षेदैत्योयनतं । मैनंमायाविनंदृप्तंनिरंकुशम
सत्तममितिब्रह्मोक्तेर्दैत्यस्यमायावित्वंज्ञायते॥ इतिवाराहपक्षः॥ २० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



अथपरशुरामपक्षः ॥ वयंतंपरंपरशुरामंसदाहृदाधीमहि ॥नामैकदेशोच्चारणेनसर्वनाम्नोग्रहणंयथाभीमइतिकथनेनभीमसेनबोधस्तथात्रपर
शब्देनपरशुरामबोधइति।तंकंयत्रत्रयाणांवेदानांसर्गोजपोऽमृषा।कुतःयतःआद्यस्यवेदस्यजन्माविर्भावोभविष्यतीतिशेषः । यत्रयस्यास्थि
तिस्ततएवतदाविर्भावइतिन्यायेनपरशुरामेऽधुनास्थितएववेदोग्रेप्रकटीभविष्यतीतिभावः।आगामिन्यंतरेब्रह्मन्वर्तयिष्यतिवैबृहत् ॥ इति
नवमेवक्ष्यमाणत्वात् ।यःस्वेनधाम्नाप्रतापेनतेजोमरणावसरेपिदैन्याभावस्तद्वांतिगच्छंतीतितेजोवाःअरीन्मृदन्तीत्यरिमृदस्तेचतेतेजोवा
रिमृदःक्षत्रियास्तेषांतथा अन्वयंवशंमत्तिनाशयतीत्यन्वयात् । अत्तिरत्रनाशेऽनेकार्थत्वात् ॥ यद्वादनमपिनाशएवादर्शनसाम्यात् ।
दुष्टक्षत्रंभुवोभारमब्रह्मण्यमनीनशत् ॥ इत्यग्रेवक्ष्यति । योर्थेषुवेदार्थेषुदेवप्रयोजनेषुवायथायथावदभिज्ञः । यद्वार्थायथार्थाव्याघातरहिता
अरिच्छेदकराइतियावत् । यइषवोबाणास्तेषामभिज्ञः अत्रेषुशब्दःशस्त्रमात्रोपलक्षकः। यःस्वेनान्यानपेक्षतयाराजतेक्षत्रनाशादावितिस्व
राट् । यःकवयेभीष्मायइतरतोऽन्येभ्योपि । अत्रचतुर्थ्यर्थेतासिः । ब्रह्मधनुर्वेदंतेने । किंभूतंआदिसनातनंब्रह्ममुखोद्भूतत्वात् ॥ तदुक्तंतृती
ये आयुर्वेदंधनुर्वेदंगांधर्ववेदमात्मनः ॥ स्थापत्यंचासृजद्वेदंक्रमात्पूर्वादिभिर्मुखैः ॥ इति धनुर्वेदश्चदीक्षासंग्रहसिद्धप्रयोगभेदात्पादचतुष्टया
त्मकः । तत्रप्रथमपादेधनुर्लक्षणमधिकारिनिरूपणंचकृतं तत्रधनुःशब्दश्चापेनिरूढोपिचतुर्विधायुधेषुवर्ततेतच्चतुर्विधंमुक्तममुक्तंमुक्ता
मुक्तंमंत्रमुक्तंच तत्रमुक्तंचक्रादि अमुक्तंखड्गादि मुक्तामुक्तंशल्यावांतरभेदादि मंत्रमुक्तंशरादि तत्रमुक्तमस्त्रमुच्यते अमुक्तंशस्त्रमुच्यतेतद
पिब्राह्मवैष्णवपाशुपत्याग्नेयादिभेदादनेकविधं। एवंसाधिदैवतेषुसमंत्रेषुचतुर्विधायुधेषुयेषामाधिकारः क्षत्रियाणांतदनुयायिनांवातेसर्वेचतुर्वि
धाःपदातिरथतुरगगजारूढादीक्षाभिषेकसन्नहनमंगलकरणादिकश्चसर्वमपिप्रथमपादेनिश्चितं।सर्वेषांशस्त्रविशेषाणामाचार्यस्यचलक्षणपूर्व
कसंग्रहप्रकारोदर्शितोद्वितीयपादे । गुरुसंप्रदायसिद्धानांशस्त्रविशेषाणांपुनःपुनरभ्यासोमंत्रदेवतासिद्धिकरणमपिनिरूपितंतृतयिपादे ।
एवंदेवतार्चनाभ्यासादिभिःसिद्धानामस्त्रविशेषाणांप्रयोगश्चचतुर्थपादेनिरूपितः । क्षत्रियाणांस्वधर्माचरणंयुद्धंदुष्टदस्युचौरादिभ्यःप्रजा
पालनंचधनुर्वेदस्यप्रयोजनमित्यलमतिप्रसंगेन । यत्रधनुर्वेदेसूरयोपिविद्वांसोपिविनागुरूपदेशंइदमस्त्रंकथंप्रयोज्यंकथंवासंहार्यमित्येवंमुह्यं

ति ॥ यद्वायस्मिन्परशुरामेसूरयोपिक्षत्रियामारणीयोयंद्विजात्मजःकिमस्मत्तोगांग्रहीष्यत्यल्पबलइतिमुह्यंति ।किंभूताःविगतोनिमिरिक्ष्वा
कुतनयोनृपोयेषांतेविनिमयश्चंद्रवंशोद्भूतहैहयजाइत्यर्थः । निमिरिक्ष्वाकुतनयेपापेदुःखेचमारणे ॥ इतिधरणिदेवकोशा॑न्नि मिःसूर्यवंश्यः ॥
किंभूतंपरंनिरस्ताःकुहकादुष्टानृपायेनतथातं ॥ पुनःसत्यंचिरजीवित्वेनाद्यापिवर्त्तमानं ॥ चिरजीविनस्तु अश्वत्थामाबलिर्व्यासोहनूमां
श्चविभीषणः ॥ मार्कंडेयःपर्शुरामःकृपश्चचिरजीविनः ॥ इति ॥ इतिपरशुरामपक्षः ॥ २१ ॥ ॥ ॥ ॥ ॥
॥ अथसंकर्षणपक्षः ॥ वयंतंसंकर्षणंसदाहृदाधीमहि ॥ तंकंयत्रत्रयाणामस्योत्पत्तिस्थितिसंयमानांसर्गोनिश्चयोऽमृषा ॥ यद्वात्रया
णांगुणानांसर्गः संबंधोमृषा । यमाहुरस्यस्थितिजन्मसंयमंत्रिभिर्विहीनंयमनंतमृषयः ॥ इत्युभयव्याख्यानेमानं पंचमेवक्ष्यति । यथाते
जोवारिमृदांविनिमयोदेहादिमृषाऽमृषाचविचारभ्रांतिदशयोः । यतः संकर्षणादाद्यस्यब्रह्मणोजन्माभूदितिशेषः । यस्याद्यआसीद्गुणविग्र
होमहान्विज्ञानधिष्ण्योभगवानजःकिल ॥ इत्यग्रेपंचमेवक्ष्यति । यश्चअन्वयोजन्मादियेषांस्थितिक्लेशसंयमानांतेऽन्वयादयस्तांस्तरंतिसं
प्लवंतीत्यन्वयादितराविवेकिनस्तेषामन्वयादितरतः । अत्रषष्ठ्यर्थेतासिः । अर्थेषुमनोरथेष्वभिज्ञः तत्संपादकइत्यर्थः। विवेकिनांमनोरथो
हिहृदयग्रंथ्यादिभेदनरूपः । तदुक्तंयएषएवमनुश्रुतोध्यायमानोमुमुक्षूणामनादिकालकर्मवासनाग्रथितमविद्यामयंहृदयग्रंथिंसत्त्वरजस्त
मोमयमंतर्हृदयंगतआशुनिर्भिनत्तीत्यपितत्रैववक्ष्यति ॥ यः स्वराट् । तदुक्तं इतिश्रीदशमे अग्रतोभवितादेवःसहस्रवदनःस्वराट् ॥
इति ॥ यआदिकवयेसनत्कुमारायब्रह्मभागवतरूपं । इदंभागवतंनामपुराणंब्रह्मसंमितम् ॥ इत्युक्तेः । तेनेविस्तारितवान् । प्रोक्तंकि
लैतद्भगवत्तमेननिवृत्तिधर्माभिरतायतेन ॥ सनत्कुमारायसचाहपृष्टःसांख्यायनायांगधृतव्रताय ॥ इतितृतीयेवक्ष्यति ॥यस्मिन्भागवते
सूरयोविद्वांसोपिभक्तिंविनामुह्यंति । भक्त्याभागवतंशास्त्रंनव्युत्पत्त्यानटीकया ॥ गृहिण्यैवगृहंप्रोक्तंनपुंश्चल्यानवेश्यया ॥ इत्यभियु
क्तोक्तेः ॥ धनंजयेहाटकसंपरीक्षावपात्तकालेगृहिणीपरीक्षा॥महाहवेशस्त्रभृतांपरीक्षाविद्यावतांभागवतेपरीक्षा॥इत्युक्तेश्च ।यद्वायस्मिन्संक
र्षणेपियादवोयमितिवसुदेवसूनुरितिमोहंप्राप्नुवंतीत्यर्थः ॥ किंभूतं स्वेनधाम्नाश्रयेणकृष्णेनतेजसावानिरस्ताः कुहकाःप्रलंबाद्यायेनतं ।यद्वा



निरस्तंकुहकंमर्त्यलक्षणंयस्यश्रीकृष्णेनतं ॥ अहोअमीदेववरामरार्चितंपदांबुजंतेसुमनःफलार्हणम् ॥ नमंत्युपादायशिखाभिरात्मनस्तमो
पहत्यैतरुजन्मयत्कृतम् ॥ इत्यादिनाश्रीदशमेश्रीकृष्णोवक्ष्यति । पुनःकिंभूतं सत्यंयद्रूपंध्रुवमकृतमितिपंचमेवक्ष्यति । पुनःपरंसर्वोत्कृ
ष्टंशेषरूपेणभूगोलधारणादित्यर्थः ।मूर्द्धन्यर्पितमणुवत्सहस्रमूर्ध्नोभूगोलंसगिरिसरित्समुद्रम् ॥ आनंत्यादनिमितविक्रमस्यभूम्नःकोवीर्याण्य
धिगणयेत्सहस्रजिह्वः ॥ इति ।यद्वा सर्वेश्वरत्वात्परंसर्वेवयंयस्यवशेमहात्मनःस्थिताःशकुंताइवसूत्रयंत्रिताः ॥ सृजामसर्वेयदनुग्रहादिद
मितिशिवोक्तेः ॥ ॥ इतिसंकर्षणपक्षः ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
॥ अथबुद्धपक्षः ॥ ॥ वयंतबुद्धंधीमहि ॥ तंकं यत्रबुद्धे त्रयाणांवेदानांसर्गःयस्मात्सत्रिसर्गईश्वरः ॥ ऋचःसामानिजज्ञिरे । छंदांसिजज्ञिरे
तस्माद्यजुस्तस्मादजायत ॥ इतिश्रुतेः । तस्यनिरीश्वरवादित्वात्तन्मतेमृषैवेश्वरः । तन्मतंत्वित्थं । चत्वारः किलबुद्धस्यशिष्याः
सौत्रांतिकवैभाषिकयोगाचारमाध्यमिकभेदात् । तत्रबुद्धेनाद्ययोर्बाह्यार्थेष्वभिनिवेशमालोक्यतदाशयानुसारेणैवसर्वशून्यतालक्षणेतत्त्वेत
योर्बुद्धेरवतारायबाह्यार्थवादमभ्युपेत्यराद्धांतोभिहितः । तृतीयस्यत्वीषत्परिपक्वचित्तस्यविज्ञानमात्रास्तित्वमात्रेणाचतुर्थस्यमुख्याधि
कारिणस्तुसाक्षादेवशून्यवादउपदिष्टः । यथाहुः । देशनालोकनाथानांसत्त्वाशयवशानुगाः ॥ भिद्यंतेबहुधालोकेउपायैर्बहुभिःपुनः ॥
गंभीरोत्तानभेदेनक्वचिच्चोभयलक्षणा ॥ भिन्नापिदेशनाभिन्नाशून्यताद्वयलक्षणाइति । देशनाउपदेशः लोकनाथानांबुद्धानांपूजायांबहु
त्वं गांभीर्य्यंगूढाभिप्रायताउत्तानतास्फुटोक्तिरित्यर्थः । तत्रसौत्रांतिकमतेआंतरेविज्ञानेघटपटाद्याकारवैचित्र्यस्यानुभविकस्यतत्तदर्थसा
दृश्यातिरिक्तस्यदुर्वचत्वादसतिबाह्यार्थेज्ञानेर्थसादृश्योदयासंभवात्तन्निमित्तभूतोबाह्यार्थोविज्ञानवैचित्र्यादनुमीयते नत्वसौप्रत्यक्षः॥ इति ।
वैभाषिकमतेत्वसतिविज्ञानस्यबाह्यार्थसंबंधेतदाकारत्वासंभवात्सतिचप्रकाशसंबंधेबाह्यार्थप्रकाशस्यावर्जनीयत्वात्प्रत्यक्षगोचरोपीति ।यो
गाचारमतेक्षणिकमेवविज्ञानं । तत्द्विधाप्रवृत्तिविज्ञानमालयविज्ञानंच ।तत्रायंघटइतिप्रवृत्तिविज्ञानं । सुषुप्तावहमित्यालयविज्ञानं । सुखादि
कमस्यैवविकारस्तदतिरिक्तवस्तुनएवाप्रसिद्धेःइति । माध्यमिकमतेसुषुप्त्यवहितोत्तरक्षणेउत्थितस्यसुषुप्तावहंनासमित्यनुभवाच्छून्यमेवा

तएवसर्वमिथ्यैवेत्यलंप्रपंचेन । अथप्रकृतमनुसरामः । यथाद्यस्यवेदविहितस्यकर्मणोऽविनिमयोयाथार्थ्यंमृषाऽसत्यंतन्मतएवयतोवेदवि
हितमृषात्वनिश्चयाज्जन्मभवति।जन्मशब्दःसंसृतिपरः।वेदोक्तमेवकुर्वाणोनिःसंगोर्पितमीश्वरे ॥ नैष्कर्म्यांल्लभतेसिद्धिंरोचनार्थाफलश्रुतिः॥
इत्येकादशेवक्ष्यमाणत्वात् ॥ वेदविहिताचरणतोमोक्षोऽन्यथानेतिभावः ॥ योबुद्धइंकामंतरतीतीतरः । अत्रप्रथमार्थेतासिः । मारजिल्लोक
जिज्जिनइत्यमरात् । यश्चस्वेषुनिजानुवर्त्तिष्ववैदिकेषुराजतइतिस्वराट् । योर्थेषुदेवप्रार्थितवेदग्रहणादिष्वभिज्ञः पाखंडवेषेणैवश्रुतिविगाना
दिनादैत्यावंचनीयाइत्थंविज्ञइतिभावः । यश्चतेजोवारिमृदांधाम्नापुरेणचरद्धचोदैत्येभ्यइतिशेषः। धामस्याद्गृहतेजसोः। पुरेचपोषकेधामेति
व्याडिः। एकत्वंतुसामान्याभिप्रायेणधामभिरित्यर्थः ॥ अब्रह्मवेदविरुद्धंपाखंडं स्वर्गःकुत्रचकुत्रदैवतकुलंकुत्राथजन्मांतरमित्यादिरूपं ॥
यद्वायावज्जीवंसुखंजीवेन्नास्तिमृत्योरगोचरः । यतस्ततउपादायऋणंकृत्वाघृतंपिबेत् ॥ देहंविनानचात्मास्तिससेव्यःसर्वथानृणाम् ॥
भस्मीभूतस्यदेहस्यपुनरागमनंकुतः॥ इत्यादिरूपंतेनेवितस्तार। वेदाज्ञानोररीकार्यावंचनार्थःकृतोहिंसः॥ त्रयोवेदस्यकर्तारोमुनिभंडानि
शाचराइत्यादिरूपंवा। किंकर्तुंआदिकवयेआदिकविंवेदमपहर्तुं। तुमोऽप्रयुक्तस्यकर्मणिचतुर्थी। सुवर्णंतेजसोरूपंरजतंवारिरूपकम्॥ लोहं
तुश्यामंभूरूपंताम्रंत्वादित्यरूपधृक् ॥ इतिस्मृतिसंग्रहोक्तेस्तेजोवारिमृच्छब्दाःस्वर्णरूप्यलोहपराः । देवद्विषांनिगमवर्त्मनिनिष्ठिता
नांपूर्भिर्मयेनविहिताभिरदृश्यतूर्भिः ॥ लोकान्घ्नतांमतिविमोहमतिप्रलोभंवेषंविधायबहुभाष्यतऔपधर्म्यम् ॥ इतिद्वितीयस्कन्धा
त् ॥ यस्मिन्पाखंडेसूरयोपिमुह्यंति धर्मइत्युपधर्मेषुनग्नरक्तपटादिषु। प्रायेणसज्जतेभ्रांत्यापेशलेषुचवाग्मिषु॥ इतिचतुर्थेवक्ष्यति॥ किंभूतं
स्वेनहृदापरमसंगमवैदिकेभ्यइतिशेषः । पुनःसत्यंसातिसत्येतिष्ठतीतिसत्यस्तद्धितेण्यप्रत्ययःमत्वर्थीयोच्वा॥प्रमाणंसत्यलौकिकइतिकापि
लोक्तेः॥ सत्यशब्दोवेदपरः पुनःनिरस्तंदूरीकृतंकुहकंपाखंडोयमितिकपटंयेनस्वपृष्ठदर्शनादिनेतिनिरस्तकुहकस्तंवेदनिंदनानंतरंत्यक्तवे
देभ्योदैत्येभ्योगृहीतवेदैर्देवादिभिर्दर्शनार्थंप्रार्थितेनस्वपृष्ठमेवदर्शितंनतुस्वमुखंलोकसंग्रहार्थमितिभावः ॥ वेदंवेदोदितंयोनानिंदेतास्य
मुखंसदा ॥ ननिरीक्ष्यंनिरीक्षेच्चेत्प्रायश्चित्तीभवेन्नरः ॥ इतिस्मृतेः ॥ ॥ इतिबुद्धपक्षः ॥ २३ ॥ ॥ ॥ ॥ ॥

॥कल्किपक्षमाह ॥ वयंतंकल्किंसदाहृदाधीमहि ॥ तंकंयत्रत्रयाणांसाधुत्राणखलप्रहाणधर्मसंस्थापनानांसर्गः स्वभावोऽमृषा ॥
संरक्षणायसाधूनांविनाशायचदुष्कृताम् ॥ धर्मसंस्थापनार्थायकल्किरूपोभवाम्यहम् ॥ इतिकल्किपुराणात् । यद्वात्रयाणांलोकानांस
र्गोमोक्षोरक्षणंवामृषा। सर्गोरक्षणमोक्षयोरितिधरणिः । लोकानांसर्वतोविष्णुर्मोक्षदोरक्षकःसदेत्युक्तेः । यथातेजोवारिमृदामविनिमयस्ता
त्विकंरूपममृषा। यतः कल्केराद्यस्यचतुर्युगापेक्षयाप्रथमस्यकृतयुगस्यचतुर्वर्गापेक्षयाद्यस्यधर्मस्यचजन्माभूत् । यदावतीर्णोभगवान्क
ल्किर्धर्मपतिर्हरिः ॥ कृतंभविष्यतितदाप्रजासूतिश्चसात्विकीतिद्वादशेवक्ष्यमाणत्वात् । सत्वंधर्मोरजोऽधर्मस्तमोज्ञानमिहोच्यतेइत्येका
दशेश्रीमुखोक्तेः । सात्विकीधार्मिकीत्यर्थः । चतुर्युगंतुकृतंत्रेताद्वापरंतुकलिरितिचतुष्टयमितिवक्ष्यति । चतुर्वर्गस्तुत्रिवर्गोधर्मकामार्थैश्चतु
र्वर्गःसमोक्षकैः ॥ इत्यमरः । यश्च सिंहलइतिशेषः अन्वयात्ययौविवाहार्थंप्राप । द्वीपंसिंहलनामानंविवाहार्थंजगामह ॥ कल्किर्धर्मप
तिर्विष्णुरित्यपिकल्किपुराणे ॥ यश्चअर्थानिच्छंतीत्यर्थेषवस्तानभितोज्ञापयतिनियोजतीत्यर्थेष्वभिज्ञः। अर्थाअत्रधर्माद्याज्ञेयाः। यथा
धर्मादयश्चार्थामुनिवर्यानुकीर्तिताः॥ इहतत्रैवप्रयुक्तत्वात् दुष्टनाशितयथोक्तधर्मादिप्रवर्तकइत्यर्थः । ज्ञानियोगेऽतोडः ॥ यश्चस्वेनस्वकी
येनसत्वेनेतियावत्राजतइतिस्वराट् ॥ स्वःस्वकीयेधनेपिचेतिकोशात्स्वशब्दःस्वीये । कल्किरूपोजगद्भर्तानिजसत्वेनराजते ॥ रज
स्तमोविनाश्यैवकलेरंतेस्वराडतः ॥ इत्यपितत्पुराणे ॥ यश्चकवयेमरुसंज्ञराज्ञेदेवापयेचराज्ञेइतरतोऽन्येभ्योपिकलापग्रामवासिभ्यऋषि
भ्यआदिसदातनंब्रह्मधर्मंतेने । देवापिःशंतनोर्भ्रातामरुश्चेक्ष्वाकुसंभवः ॥ कलापग्रामआसातेमहायोगबलान्वितौ ॥ ताविहैत्यकलेरंते
वासुदेवानुशिक्षितं ॥ वर्णाश्रमयुतंधर्मंपूर्ववत्प्रथयिष्यतः॥ इतिअत्रचादन्यऋषयोज्ञेयाः । इतिद्वादशेवक्ष्यमाणत्वात् वासुदेवानुशिक्षि
तावित्यनेनपूर्वंकल्किनोपादिष्टंतेभ्यइतिभावः। इतरतइहचतुर्थ्यर्थेतसिः । यस्मिन्धर्मेसूरयोविद्वांसोपिमुह्यंति धर्मस्यातिसूक्ष्मत्वात् ।
तदुक्तमभियुक्तैः कानीनस्यमुनेःस्वबांधववधूवैधव्यविध्वंसिनोनप्तारःकिलगोलकस्यतनयाःकुंडाःस्वयंपांडवाः ॥ तेमीपंचसमानयोनिनि
रताःख्यातास्त्रिलोकीतलेतेषांकीर्तनमेवपापशमनंधर्मस्यसूक्ष्मागतिः॥ इति ।तत्कीर्तनस्यपापशमकत्वंपांडवगीतायां धर्मोविवर्धतियुधि

ष्ठिरकीर्तनेनपापंप्रणश्यतिवृकोदरकीर्तनेन ॥ शत्रुर्विनश्यतिधनंजयकीर्तनेनमाद्रीसुतौकथयतांनभवंतिरोगाः ॥ इति । किंभूतंतंस्वे
नधाम्नातेजसानिरस्ताःकुहकानृपलिंगच्छदाःशूद्राद्यायेनतं नृपलिंगछदोदस्यून्कोटिशोनिहनिष्यति ॥ इतिद्वादशोक्तेः । पुनःसत्यंसंसंसा
रंत्याजयातिभक्तानामितिसत्यस्तं । संसंसारेचसत्येचेत्येकाक्षरीनाममालायां। संसारंत्याजयिष्येहंभक्तानांनृपतेर्यतः॥अतःसत्यंममाख्यात्र
सत्यरूपतयातथा॥इतिपुराणात्।पुनःपरंसर्वनियंतारं परःसर्वनियंतास्यात्सर्वश्रेष्ठः परोमतः॥इत्यभिधानचिंतामणेः॥इतिकल्किपक्षः२४
॥ अथहयग्रीवपक्षः ॥ ॥ वयंतंहयग्रीवंसदाहृदाधीमहि ॥ तंकंयत्रत्रयाणांवेदानांसर्गोरचनाऽमृषा। तस्यछंदोमयत्वात् । तदुक्तंछंदो
मयोमखमयोखिलदेवतात्मावाचोबभूवुरुशतीःश्वसतोस्यनस्तः ॥ इतिद्वितीये । यथातेजोवारिमृदामविनिमयःस्वरूपममृषा । यआद्य
स्यब्रह्मणोयज्ञइतिशेषःजन्माविर्भावमन्वयात् ।यद्वा इःकामनासमूहस्तीर्यतेऽनेनेतीतरोयागः।स्वर्गकामोयजेत्कारीर्यावृष्टिकामोयजेदित्या
दिश्रुतेःतस्मिन्नितरतः।सप्तम्यर्थेतसिः । इःकामेकामनाव्यूहेलक्ष्मीरीचवसुंधरेतिनाममाला । तथाच सत्रेममासभगवान्हयशीरषाथोसा
क्षात्सयज्ञपुरुषस्तपनीयवर्णः ॥ इतिद्वितीयेब्रह्मावक्ष्यति । योहयग्रीवआदिकवयेब्रह्मणेब्रह्मवेदंतेने तस्मैभवान्हयशिरस्तनुवंचबिभ्रद्वेद
द्रुहावतिबलौमधुकैटभाख्यौ ॥ हत्वानयच्छ्रुतिगणांस्तुरजस्तमश्चसत्वंतवप्रियतमांतनुमामनंति ॥ इतिसप्तमेप्रल्हादोवक्ष्यति । यतो
येनब्रह्मणावेदेनस्वराट्ब्रह्माअर्थेषुजगद्रचनादिष्वभिज्ञोभूदितिशेषः । वेदंप्राप्यहरेर्धाताचक्रेविश्वंयथापुरा ॥ इतिपुराणात् । यस्मिन्वेदेसू
रयोऽन्याखिलशास्त्रप्रवीणागौतमादयोपिमुह्यंति ।अन्यथाव्याख्यातृत्वादन्यथाव्याख्यातृत्वंतेषांवास्तवभेदवादित्वात् । तत्त्वमसीत्यादि
षुतस्यत्वमसीत्यर्थात्तथैवदर्शनात् । किञ्चतदनुयायिनापंचाननभट्टेनापिमुक्तावल्यांभेदनाशेपिव्यक्तिद्वयंस्थास्यत्येवमुक्तावपिभेदोंगीकृत
इतिकिंबहुना ॥ किंभूतंस्वेनधाम्नातेजसानिरस्तौकुहकौमधुकैटभौयेनसतथातं । अनेनशाक्तिककल्पितःशक्त्याश्रयेणहरिणातौहताविति
प्रवादोनिरस्तः । अधिकरणस्यशाक्तिमतोऽपेक्षयाशक्तेराधेयत्वेनाल्पत्वादितिभावः । तावप्यतिबलोन्मत्तौमहामायाविमोहितौ ॥ इ
त्युक्तेर्दैत्यावेवभगवत्यामोहितौनतुकिञ्चिद्धरेस्तयाकृतमिति । पुनःकिंभूतंसत्यंनिजभाषितंपिपार्तिपालयतीतिसत्यंपरस्तं । तदुक्तंमार्कं




डेये आवांजहिनयत्रोर्वीसलिलेनपरिप्लुता ॥ इतिताभ्यामुक्तेनहरिणा तथेत्युक्त्वाभगवताशंखचक्रागदाभृता ॥ कृत्वाचक्रेणवैछिन्नेजघने
शिरसीतयोः ॥ इति ॥ ॥ इतिहयग्रीवपक्षः ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
॥ अथदत्तात्रेयपक्षः ॥ वयंतंदत्तात्रेयंसदाहृदाधीमहि ॥ तंकंयत्रत्रयाणामाध्यात्मिकाधिदैविकाधिभौतिकानांपापानांसर्गोनि श्चयोमृ
षा ॥ आध्यामिकादिभिर्दुःखैरविमुक्तस्यकर्हिचित् ॥ मर्त्यस्यकृच्छ्रोपनतैरर्थैःकामैःक्रियेतकिम् ॥ इतितदुक्तेर्मर्त्यस्यतेसंतिनतु
तस्यहरेरवतारत्वात्॥आध्यात्मिकाद्यास्तापास्तुविज्ञेपुंसिनसंतिचेत् ॥ श्रीविष्णोरवतारेषुकथंतेषांसमुद्भवः ॥ इत्याभियुक्तोक्तेः । यथाते
जोवारिमृदांविनिमयोव्यत्यासोमृषाआदेर्ब्रह्मणोऽपत्यमाद्योत्रिस्तस्याद्यस्य । पंचम्यर्थेषष्ठीयम् ॥ अत्रेःसकाशाज्जन्माविर्भावमन्वयात्
प्राप । यश्चात्रेयइतरतइतागताराातिर्विषयेषुयस्येतीतरतः । अत्रसमासांतोडः । विरागःसर्वकामेभ्यःशिक्षितोमेमधुव्रतात् ॥ इतिसप्त
मेसएववक्ष्यति । यश्चार्थेषुगुरुतःशिक्षणीयेषुपरितोषाभ्यासादिष्वभिज्ञः । कविःकल्पोनिपुणदृक्चित्रप्रियकथःसमः ॥ इतितंप्रतिप्रल्हा
दोक्तेः ॥ यःस्वस्मिन्नात्मस्वरूपेनित्यशुद्धचिद्रूपेराजतेनतुवर्णाश्रमादिनेतिस्वराट् ॥ अज्ञाज्ञेयइत्यर्थः ॥ तदुक्तंसप्तमे । कर्मणाकृतिभि
र्वाचालिंगैर्वर्णाश्रमादिभिः ॥ नविदंतिजनायंवैसोसावितिनवेतिवा ॥ इति । यःकवयेबुद्धिमतेअलर्कायनृपतयेआदिप्राक्तनंब्रह्मज्ञानंतेने ।
षष्ठमत्रेरपत्यत्वंवृतःप्राप्तोनसूयया ॥ आन्वीक्षिकमिलर्कायप्रल्हादादिभ्यऊचिवान् ॥ इत्यग्रेवक्ष्यति । यस्मिन्ब्रह्मणिज्ञानेऽद्वितीयत्व
रूपेसूरयोपिजैमिन्यादयोमुह्यंति । तैर्द्वैतस्यसत्यत्वेनस्वीकृतत्वात्आम्नायस्यक्रियार्थत्वादानर्थक्यमदर्थानांतद्भूतानांक्रियार्थेनसमाम्ना
यइतिजैमिनिसूत्राभ्यामिति । यन्नामाकृतिभिर्ग्राह्यंपंचवर्णमबाधितम् ॥ व्यर्थेनाप्यर्थवादोयंद्वयंपंडितमानिनाम् ॥ इत्यग्रेवक्ष्यमाणत्वा
च्च । किंभूतंस्वेननिजेनधाम्नाप्रकाशेननिरस्तंकुहकमज्ञानंमानापमानरूपंयेनतं ॥ नमेमानापमानौस्तोनचिंतागेहपुत्रिणाम् ॥आत्मक्री
डआत्मरतिर्विचरामीतितदुक्तेः । पुनःकिंभूतंपरमसंगम् । विचरामिमहीमेतांमुक्तसगोनहंकृतिः ॥ इतिसएववक्ष्यत्येकादशे ॥ इति
दत्तात्रेयपक्षः ॥ २६ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥ छ ॥

॥ अथकपिलपक्षः ॥ वयंतंकपिलंसदाहृदाधीमहि ॥ तंकंयआदेर्ब्रह्मणोजातआद्यःकर्दमस्तस्यगृहेजन्मान्वयात् । निजंवाक्यमृतंकर्तुमवतीर्णोसिमेगृहे ॥ इतिकर्दमोक्तेः गृहेइतिशेषः यतइहप्रथमार्थेतसिः । योर्थेषुसांख्यीयपदार्थेष्वभिज्ञः । यःस्वान्राजयतीतिस्वराट् । यःस्वानांपक्षपोषणइतिवक्ष्यातितदाख्याने । यःकवयेकंजलंवातिप्राप्नोतीतिकविर्देवहूतिः तस्यास्तद्योगविधुतंमार्त्यंमत्यम्भूत्सरित् ॥ इत्यग्रेवक्ष्यमाणत्वात् । तस्यै । कविरित्यत्रकशब्दस्यभावप्रधानत्वंर्नाव्यादित्वात् । प्रत्ययोडिरत्र । देवहूत्यैइतरतइतरस्मैआसुरिसंज्ञमुनयेआदिसनातनंब्रह्मसांख्यंतेने । पंचमःकपिलोनामसिद्धेशःकालविप्लुतम् ॥ प्रोवाचासुरयेसांख्यंतत्वग्रामविनिर्णयम् ॥ इतिवक्ष्यतिप्रथमे यद्वाइतरतइतरेभ्यऋषिभ्योब्रह्मयोगंतेने । तमिमंतेप्रवक्ष्यामियोगंसर्वांगनैपुणम् ॥ ऋषीणांश्रोतुकामानांयमवोचंपुरानघे ॥ इतितदीयोक्तेः । यद्यस्मिन्सांख्येसूरयोपिमुह्यंति । दुर्बोधंतत्वनिवहंसांख्यंकपिलभाषितम् । निपुणास्तत्रमुह्यंतिमादृशानांतुकाकथा ॥ इत्यभियुक्तोक्तेः । यत्रयस्मिन्सांख्येत्रयाणांप्रकृतिविकृतितदुभयानांसर्गोऽमृषासत्यः । यथातेजोवारिमृदामविनिमयःस्वभाविकाकारोऽमृषा । प्रकृतित्वंचाजन्यत्वेसतिजनकत्वं[1] । विकृतित्वंचतत्वविभाजकोपाध्यवच्छिन्नाजनकत्वेसतिजन्यत्वम्[2] । तदुभयत्वं प्रकृतिविकृतित्वं । तच्चतत्त्वविभाजकोपाध्यवच्छिन्नजनकत्वेसतिजन्यत्वम्[3] । तदुक्तंसप्तत्यां मूलप्रकृतिरविकृतिर्महदाद्याप्रकृतिविकृतयःसप्त ॥ षोडशकस्तुविकारोनप्रकृतिर्नविकृतिःपुरुषः ॥ इति । किंभूतंतंपरंबुद्धेरितिशेषः । इन्द्रियाणिपराण्याहुरिंद्रियेभ्यःपरंमनः ॥ मनसस्तुपराबुद्धिर्योबुद्धेःपरतस्तुसइतिश्रीमुखोक्तेः । पुनःस्वेननिजेनधाम्नाप्रकाशेननिरस्तादूरतएवविनाशिताःकुहकाःसगरात्मजायेनतं । यद्यपितेतेननहतास्तथापितदवज्ञयाहतत्वात्तत्रोपचर्यते । यद्वानिरस्तःकुहकःसंसारोयेनतं । यस्येरितासांख्यमयीदृढेहनौर्ययामुमुक्षुस्तरतेदुरत्ययम् ॥ इतिनवमोक्तेः । पुनःसत्यंब्रह्मरूपत्वात् । ब्रह्मसत्यंजगन्मिथ्येत्युक्तेः ॥ इतिकपिलपक्षः ॥ २७ ॥ ॥ ७ ॥



---

१ मूलप्रकृतेरेव । २ तत्वविभाजकोपाधयःपृथिवीत्वादयस्तदवच्छिन्नाःपृथिव्यादयस्तेषामजनकत्वमिंद्रियादेर्गुणेभ्योजन्यत्वंचास्तिततस्तेषांविकृतित्वम् ।
३ तत्वविभाजकोपाध्यवच्छिन्नपृथिव्यादिजनकत्वेनशब्दादीनामहंकारजन्यत्वेनचोभयत्वम् ।

अथसनकादिपक्षः ॥ ॥ वयंतंसनकादिव्यूहंधीमहि ॥ तंकंयत्रत्रयाणांकामक्रोधलोभानांसर्गोमृषानवस्तुतः । जयविजयशापेक्रोधस्तु । उष्णत्वमग्न्यातपसंनियोगाच्छैत्यंहियत्साप्रकृतिर्जलस्य ॥ इतिमहाकविवाक्यादागंतुकोबोध्योनतुस्वाभाविकः । कामलोभौतुतत्राश्रुतप्रायावेव । यथातेजोवारिमृदांविनिमयोविकृतिर्मृषा । योव्यूहआद्यस्यब्रह्मणःइःकामोवासनातीर्यतेऽनेनेतीतरंतपस्तस्मादितरतः । अत्रपञ्चम्यर्थेतसिः । सर्वेकामाअवाप्यंतेतपसैवसदाऽखिलैः ॥ इतिवचनात् । जन्मान्वयात्प्राप । तप्तंतपोविविधलोकसिसृक्षयामेआदौसनत्स्वतपसःसचतुस्सनोभूत् ॥ इतिद्वितीयेवक्ष्यति । योव्यूहोऽर्थेषुनैष्ठिककर्तव्यबृहद्व्रतेष्वभिज्ञः । चरंतिश्रद्धयाधीराबालाएवबृहंतिवा ॥ इतिचतुर्थेवक्ष्यति । योव्यूहःस्वमात्मानंहरिरटत्युच्चारयत्यहर्निशामितिस्वराट् । हरिःशरणमेवास्तिमुखेयेषांसदावचइतिपाद्मोक्तेः । तेषांहर्यवतारत्वात्स्वशब्दोत्रहारिपरः । यश्चादिकवयेनारदायब्रह्मज्ञानंतेने । तथाचश्रुतिः । तस्मैमृदितकषायायतमसःपारंदर्शयतिभगवान्सनत्कुमारः ॥ इति । तस्मैनारदायतमसोऽविद्यायाःपारमात्मतत्वमित्यर्थः । यस्मिन्नात्मतत्वेसूरयोभरद्वाजादयोपिमुह्यंति । तथाचश्रुतिः । त्वंहिनःपितायोस्माकमविद्यायाःपरंपारंतारयसिश्रुतंमेभगवद्दृशेभ्यस्तरतिशोकमात्मवित् ॥ इति । अस्यार्थः । पिप्पलादम्भरद्वाजादयःषडृषयएवमुचुरग्रेस्पष्टोऽर्थः । किंभूतंस्वेनधाम्नातेजसानिरस्तौवैकुण्ठात्पातितौकुहकौजयविजयौयेनतं । कोवात्मवत्कुहकयोःपरिशंकनीयःइत्यत्रजयविजययोःकुहकशब्दस्तेनैवव्यूहेनप्रयुक्तइतितृतीयेस्पष्टम् । पुनःसत्यंसत्यलोकेप्रायःस्थितं । सत्येतुब्रह्मणोलोकेप्रायास्तिष्ठंतितेसदा ॥ सनकाद्यास्तथावेदाःसांगाःस्मृतिगणादिभिः ॥ इतिसंहितोक्तेः । पुनःपरंपपरात्मतत्वंरातिनिजसेवकेभ्यइतिपरस्तं । इहपशब्दएकदेशन्यायेनपरात्मपरः । पंपालकंप्रभुंप्राहुरित्येकाक्षरीनाममालादावपि ॥ इतिसनकादिपक्षः ॥ २८ ॥ ॥ ७ ॥

अथगोवर्द्धनपक्षः ॥ ॥ वयंतंगोवर्द्धनंसदाहृदाधीमहि ॥ तंकंयत्रतेजोवारिमृदांविनिमयःप्रतीतिर्मृषा । प्रतीतौचविनिमयोऽन्यथाभानेस्थितौगतौ ॥ इतिकोशात् । तस्यरत्नमयत्वात् । रत्नमयत्वंतुगर्गसंहितायामुक्तं । राधाप्रार्थनयाकृष्णहृदयादुत्थितंजलम् ॥ पतितंरासभूमौतद्ववृधेपर्वताकृति ॥ रत्नधातुमयंदिव्यंसुनिर्झरदरीवृतम् ॥ इतिगिरिराजखंडे । किंचगोवर्द्धनोरत्नशिलामयोभूत्सुवर्णशृंगैःपरितःस्फु

रद्भिः ॥ इति । यथात्रिसर्गस्त्रिगुणप्रपंचोमृषा । यद्वात्रयाणामिंद्रद्रोणपुलस्त्यानांसर्गोनिश्चयोभेदनप्रदानवाराणसीनयनरूपोमृषा । यो
गोवर्द्धनःआद्यस्यस्थावरजंगमद्वयेजंगमापेक्षयाप्रथमस्यस्थावरस्यद्रोणगिरेःसकाशाज्जन्मान्वयात् । यश्चइंकामंतरतीतीतरोनैष्ठिकः।प्रथ
मार्थेतसिः । यद्वाअगादितीतः । गत्यर्थत्वादिणःकर्त्तरिक्तः । इतःसर्वगतःश्रीकृष्णःरतोनुरतोऽत्रेतीतरतःश्रीकृष्णक्रीडाश्रयः । तदुक्तं ।
परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्हरिः ॥ यस्मिन्नस्थितःसदाक्रीडामर्भकैःसहमैथिल ॥ करोतीतिगर्गेण । योर्थेषुनिजसपर्यापरायणार्थे
षुअभिज्ञःअभितोज्ञापयतिनियोजयतीत्यभिज्ञः । तत्तदर्थप्रदइत्यर्थः । गोवर्धनःसेवककामपूरोरराजराजन्व्रजभूप्रदेशे॥ इत्यपिसंहितायां।
यःस्वराट् गिरिचक्रवर्त्ती । तदुक्तं तदैवशैलाःकिलमूर्तिमंतःसोपायनामेरुहिमालयाद्याः ॥ नेमुर्गिरिंमंगलपाणयस्तंगोवर्द्धनंरूपधरंगिरीं
द्राः ॥ इतिसंहितायां । यद्वास्वेनस्वातंत्र्येणराजतेइतिस्वरःकृष्णःस्वरोटत्यत्रेतिस्वराट्कृष्णक्रीडाभूः । योगोवर्द्धनःआदिसनातनंपरमानं
दरूपंचतत्कंसुखंचेत्यादिकंयन्मित्रंपरमानन्दमित्याद्युक्तेः । तद्वातिप्राप्नोतीत्यादिकाविर्व्रजलोकः । आदिकंसुखमत्रेत्यादिकःकृष्णःसवस
त्यत्रेत्यादिकविः । यद्वाआदिकंयेषांतेआदिकाःकोककोकिलक्रौंचकलविंकादयस्तेवयः पक्षिणोऽत्रेत्यादिकविः तस्मैव्रजवासिनेब्रह्मसु
खंस्वेननिजेनधाम्नाश्रयेणश्रीकृष्णेनतद्वातिद्वारातेनेविस्तारितवान् ॥ व्रजस्थानामादिसुखवत्त्वंतुश्रीकृष्णरूपत्वादेव । तदुक्तमादिपुराणे ।
व्रजेनगोपिकाभिन्नामत्तःकाश्चनपक्षिणः ॥ गोपागावश्चवृक्षाश्चममैवानंदविग्रहम् ॥ येव्रजस्थानहोभिन्नान्मत्तःपश्यंतिकेचन ॥ नते
षांमूढबुद्धीनांगातिरिहपरत्रच ॥ इतिनारदंप्रतिश्रीकृष्णेन । यस्मिन्गोवर्द्धनेसूरयोविवेकिनोमुह्यंतिमोदंते । मुहिरत्रमोदेतुधातूनामने
कार्थत्वात् । मोदंतेमोदरूपत्वादत्रशैलेविवेकिनः ॥ गोवर्द्धनेव्रजत्राणकरेइतिसंहितायां । किंभूतंनिर्गतोऽस्तोनाशोयेषांतेनिरस्ताअमरा
स्तेषांगोपरूपाणांकुहकंविस्मापकंअहोविचित्रोयंगिरिर्येनरूपीभूत्वाबलिर्गृहतिइत्याश्चर्यकरं । पुनः सत्यंसत्यरूपाद्धरेराविर्भूतत्वात् । समु
त्थितोसौहरिवक्षसोगिरिर्गोवर्द्धनोनामगिरींद्रराडितिसंहितोक्तेः । पुनःपरंकृष्णरूपत्वात् । तथाहिगोवर्द्धनोनगिरिभिरन्यैस्तुल्योमहागि
रिः ॥ भृगोकृष्णस्वरूपोयंदर्शनस्पर्शनार्चनैः ॥ सर्वपापहरोज्ञेयःस्मरणादपिदूरतः ॥ इत्यादिपुराणेभृगुंप्रतिब्रह्मवाक्यादुत्तमतरं



सर्वतीर्थमयत्वाद्वाश्रेष्ठतरम् ॥ सर्वतीर्थमयत्वंत्वस्यगर्गेणोक्तंसंहितायां ॥ सर्वतीर्थमयःशैलोरत्नधातुविचित्रितः ॥ गोलोकादत्रसंजा
तोद्वीपेशाल्मलिसंज्ञके ॥ पुलस्त्येनसमानीतोव्रजेगोवर्द्धनाभिधे ॥ इतिगोवर्द्धनपक्षः ॥ २९ ॥
॥ अथश्रीराधापक्षः ॥ वयंसदाह्लदातद्राधारूपंतेजोधीमाहि ॥ तत्किंयत्रतेजोवारिमृदांविनिमयोदेहित्वेनप्रतीतिर्मृषा । तस्यब्रह्मरूपत्वात् ।
तस्माज्ज्योतिरभूद्द्वेधाराधामाधवरूपकम् ॥ इतिसंमोहनतंत्रोक्तेः । अथैवराधावृषभानुपत्न्यामाश्चर्यरूपंमहसःपराख्यम् ॥ इतिसंहितोक्तेश्च ॥
यतोयदर्थंश्रीराधार्थमितियावत् । चतुर्थ्यर्थेतासिः । अस्यवासुदेवस्यजन्मादि । अकारोवासुदेवःस्यादित्येकाक्षरकोशे । अत्रादिनाक्री
डाग्रहः । तदुक्तमादिपुराणे त्वदर्थंचागतःकृष्णःपरिपूर्णतमःप्रभुः ॥ गोलोकाद्राधिकेगोपवेषेणक्रीडतित्वया ॥ इति । किंच सर्वेश्वरो
प्यवततारश्रीराधाप्रियकारणात् ॥ गोलोकवासिगोपाद्यैर्गोलोकेनसहैवाहि ॥ इति । कुत्रजन्मादि । आयेव्रजेअयनमायस्तस्मिन् ॥
व्रजगतावित्यनेनसमानार्थत्वादयगतावित्यस्यतत्रयथाव्रजनंव्रजइतितथात्रापि ॥ चपुनःयस्यान्वयात्सेवनादितरतःनैष्ठिकोनारदोर्थेषुदेवै
रप्यलभ्यव्रजविनोदेष्वभिज्ञोजातः । एतच्चादिपुराणीयवृंदावनमाहात्म्येकन्यारूपेणनारदेननंदिनीसखीसमेतेनराधासेवनंकृतं । तत्कृप
यासर्वोव्रजानंदोनुभूतइतिस्फुटम् ॥ यत्तेजःस्वेनासाधारणरूपेणराजतइतिस्वराट् । तच्चनंदेनानुभूतं तदैवकोट्यर्कसमूहदीप्तिरागच्छ
तीवाचलतीदिशासु ॥ बभूवतस्यांवृषभानुपुत्रींददर्शराधांनवनंदराजः ॥ इतिसंहितायां । यत्तेजःकवयेशिवायआदिपूर्वमेवसत्ब्रह्मतन्त्रा
मसहस्रंतेने । अत्रनामनामिनोरभेदोपचारात् । तच्चोक्तंगोपालसहस्रनामस्तवे । कृष्णेनोक्तंराधिकायैमयिप्रोक्तंतयाशिवे ॥ इतिपा
र्वतींप्रतीशः । यद्यस्मिन्राधारूपेतेजसिसूरयोवैष्णवशास्त्रान्यशास्त्रज्ञामुह्यंतिनहिराधाविवाहादिभागवतादिशास्त्रेऽतःसाकथंकृष्णपट्ट
राज्ञीतिमुह्यंति । किंभूतंतेजः । स्वेनधाम्नानिरस्तःकुहकःश्रीदामाराख्योगोपोयेनतत्तथातयाकदाचित्कपटंकुर्वाणःश्रीदामाशापेनगो
लोकान्निरस्तःसएवशंखचूडोऽसुरोभूदितिब्रह्मवैवर्तादौ । तत्रत्यवाक्यानिविस्तरभियानोक्तानि । पुनःकिंभूतंसत्यंरमादिलयस्थानत्वात्स
दासत्यगोलोकवासित्वाच्च । रःशब्दस्तुरमावाचीलीलावाच्याऽऽध्वनिःस्मृतः ॥ धरावाचीधशब्दोत्रह्याकारोविरजापरः ॥ श्रीकृष्णस्यपरस्या

पिचतुर्धातेजसोभवन् ॥ श्रीलीलाभूश्वविरजाश्वतस्रःपत्न्यएवहि ॥ संप्रलीनाश्वताःसर्वाराधायांकुंजमंदिरे ॥ परिपूर्णतमांराधांतस्मादाहुर्म
नीषिणः॥ इतिसांहितायां । पुनःकिंभूतंपरंसर्वोत्कृष्टं।तदुक्तं त्रैलोक्येपृथिवीधन्याजंबूद्वीपस्तुतत्रवै॥तत्रापिभारतंखंडंयत्रवृंदावनंपुरम्॥तत्र
राधासखीवर्गस्तत्रराधाप्रियामम॥ इतिभागवतामृतेकृष्णवाक्यंसर्वेशश्रीकृष्णवशकर्तृत्वेनवापरं। तदुक्तमादिपुराणे यद्भीषावातिपवनोभा
नुस्तपतियद्भिया ॥ इंद्रश्वंद्रस्तथाकालःस्वेस्वेकार्येचरंतिहि ॥ सएवपरमोविष्णुःश्रीकृष्णाख्यस्तुयद्वशे ॥ साराधिकापरंदैवंनततोस्त्यधि
कंपरम् ॥ इतिकृष्णस्यपूज्यत्वादादावुच्चार्य्यत्वाच्च । गृहेराधावनेराधाराधिकाभोजनेगतौ ॥ रात्रौराधादिवाराधाराधैवाराध्यतेमया
॥ इत्यादिकाबहुश्लोकाब्रह्मांडेउक्ताः कृष्णाराध्यत्वेप्रमाणीभूताः । आदौराधांसमुच्चार्यपश्चात्कृष्णंवदेत्सुधीः ॥ अन्यथोच्चारणादे
वपातकीनाप्रजायते ॥ इतिसंहितोक्तेः । गौरतेजोविनायस्तुश्यामतेजःसमर्चयेत् ॥ जपेद्वाध्यायतेवापिसभवेत्पातकीशिव ॥ इति
संमोहनतंत्राच्चादावेवराधापूज्योच्चार्याचेतिप्रतीयते । किंबहुनावाग्जालेन ॥ इतिराधापक्षः ॥ ३० ॥

॥ अथवृन्दावनपक्षः ॥ वयंतद्वृंदावनंधीमहि । तत्किंयत्रत्रयाणांगोवर्धनबृहत्सानुनंदीश्वरगिरीणांसर्गोरचनास्थितिर्वाऽमृषासत्यः ।
तदुक्तंसंहितायां। यत्रगोवर्धनोनामगिरिराजोविराजते ॥ कालिंदीनिकटेयत्रपुलिनंमंगलायनम् ॥ बृहत्सानुगिरिर्यत्रयत्रनंदीश्वरोगिरिः ॥
क्रोशानांचचतुर्विंशद्भिस्तृतैःकाननैर्वृतम् ॥ पशव्यंगोपगोपीनांगवांसेव्यंमनोहरम् ॥लताकुंजवृतंतद्वैवनंवृंदावनंस्मृतमिति । यथातेजो
वारिमृदामविनिमयस्तात्विकंरूपममृषा। यत्रचाद्यस्यसर्वेषामादिकारणस्यश्रीगोलोकवासिनःपरिपूर्णतमस्यश्रीकृष्णस्यसदाजन्माविर्भा
वोस्ति । पादमेकंनगच्छामित्यक्त्वावृंदावनंमुने ॥इत्यादिपुराणेनारदंप्रतिश्रीमुखोक्तेः। यतःयस्यान्वयात्सेवनात्स्वराट्स्वयंश्रीकृष्णएव
भवति। तदुक्तमादिपुराणे । योगीनित्यंसमागत्यमाथुरंमंडलंसुधीः ॥ वृंदावनंसुषेवेतसस्यात्कृष्णस्वरूपभाक् ॥ इति । चपुनःयस्या
न्वयादर्थेष्वभिज्ञोभवति । अर्थाःनिखिलपदार्थाइषवइषुवद्दुःसहायेषांतेऽर्थेषवोविरक्तास्तैरभितोज्ञायतेपूज्यत्वेनेत्यर्थेष्वभिज्ञः । तदुक्तम्
मुमुक्षाविद्यतेयेषांनिर्विण्णानांचसंसृतेः ॥ पूज्यःस्यान्नात्रसंदेहोवृंदावननिषेवकः ॥ इत्यादिपुराणात् । यद्वृंदावनंसूरयोजन्मांतरकृतपु



ण्यपुञ्जास्तेमुह्यंतिपश्यंतियेइतरतइतरेऽकृतसुकृतास्तेआइत्याश्चर्येइतिवितर्केमुहिरत्रदर्शने धातूनामनेकार्थत्वात् । तासिरत्रप्र
थमार्थे । सूरिःस्याद्बहुपुण्येनाविदुषिबहुसंततौ ॥ उत्पत्तौपीडनैश्वर्येप्रेरकेरविकालयोः ॥ इतिधरणिदेवः । नीचेमूढेत्वकंदर्पेपुंसि
द्रव्ययुतेस्मृतः ॥ इतरोनास्तिकेपिस्यादितिच । किंकर्तुमादिकवयेआदिकविंद्रष्टुंतुमोऽप्रयुक्तस्येतिचतुर्थी। परप्रेम्णाद्दृश्यतेहिश्री
वृन्दाविपिनेहरिः ॥ प्रियानुरागरसिकोबल्लवीगणसंवृतः ॥ इतिसंहितोक्तेः । किंभूतंब्रह्मणापरमेष्ठिनाह्रियतेवत्सगोपगणोऽत्रेतिब्रह्मह्र
त् । एतच्चश्रीमद्दशमेविशदीभविष्यति । अंभोजन्मजनिस्तदंतरगतोमायार्भकस्येशितुर्द्रष्टुंमंजुमहित्वमन्यदपितद्वत्सानितोवत्सपान्
॥ नीत्वान्यत्रकुरूद्वहांतरदधाद्योवस्थितःखेपुराद्दृष्ट्वाघासुरमोक्षणंप्रथमतःप्राप्तःपरंविस्मयम् ॥ इत्यादिना। पुनःनिरस्ताःकुहकावृं
दावनममन्यमानानेदंवृंदावनमस्तिचेत्किंलक्षणमित्यादिजल्पनपरायेनतत्तथाकेनस्वधाम्नास्वस्यश्रीकृष्णस्यधाम्नाधामत्वेन । तत्र
हिगोविंददेवमदनमोहनराधावल्लभादिविग्रहाःश्रीकृष्णस्यसंतितेचमौशलावशिष्टवज्राभिधश्रीकृष्णप्रपौत्रेणस्थापितावृंदावने।एतच्चस्कंद
पुराणे। माथुरान्ब्राह्मणांस्तत्रवानरांश्वपुरातनान् ॥ विज्ञायमाननीयत्वंतेषुस्थापितवान्स्वराट् ॥ वज्रस्तुतत्सहायेनशांडिल्यस्याप्य
नुग्रहात् ॥ गोविंदगोपगोपीनांलीलास्थानान्यनुक्रमात् ॥ विज्ञाप्याभिधयास्थाप्यग्रामानावासयद्बहून् ॥ कुंडकूपादिपूर्त्तेनशिवादि
स्थापनेनच ॥ गोविंदहरिदेवादिस्वरूपारोपणेनच ॥ कृष्णैकभक्तिंस्वेराज्येततानप्रमुमोदच ॥इति। पुनःकिंभूतंब्रह्मब्रह्मरूपं । तदुक्तं
स्कांदे व्रजनंव्याप्तिरित्युक्त्वाव्यापनाद्व्रजउच्यते ॥ गुणातीतंपरंब्रह्मव्यापकंव्रजउच्यते ॥ सदानंदंपरंज्योतिर्मुक्तानांपदमव्ययम् ॥ इ
ति।आदिपुराणेपि। वृंदावनेभूर्नचभूर्विधेयाव्रजौकसोजीवसमानजीवाः ॥ नतत्रदेवांतरसंप्रवेशोनिरंतरंब्रह्ममयंसमंतात् ॥कलिंदपुत्र्याजलमं
गनोजलंचतुर्भजाकाकृतयोमनुष्याः ॥ खगामृगाश्वौषधयोनगाद्यास्तेब्रह्मदेहानहितत्रभेदः॥ इतिनारदंश्रीकृष्णः। यद्यप्यत्रवृंदावनंध्ये
यत्वेनाभिप्रेतंनतुव्रजस्तथापिवृंदावनस्यव्रजावयवेषुमुख्यत्वमस्ति । मुखंवृंदावनंव्रजेइत्युक्तेर्मुखस्यसर्वावयवित्वमप्युक्तंकामंदके । मु
खमर्धंशरीरस्यसर्वंवामुखमुच्यते ॥ इति। अवयवावयविनोरभेदएववायथागंगैकदेशेपीयंगंगेतिव्यवहारात्। पुनःकिंभूतंसत्यंत्रैकालिका

बाध्यम्।तदुक्तमादिपुराणे।अनादिनिधनंसत्यंवनंवृंदावनंमुने॥नचास्योत्पत्तिनाशौस्तःप्रलयेसर्वहारिणि॥इति।पुनःकिंभूतंपरंसर्वतीर्थेभ्यः
सर्वलोकेभ्यश्चश्रेष्ठं । सर्वेभ्यएवतीर्थेभ्यःश्रेष्ठंवृंदावनंपरम् ॥ पृथिवीतःपरंस्वर्गस्तस्माच्छ्रेष्ठंविधेःपुरम् ॥ शिवलोकंततःश्रेष्ठंततोवैकुं
ठमव्ययम् ॥ वैकुंठाच्चपरंलोकोगवांतस्मात्परंमुने ॥ वृंदावनंयत्रदेवःश्रीकृष्णोनन्दनंदनः॥इत्यादिपुराणात् । तथाचश्रुतिः । तावांवा
स्तून्युश्मसिगमध्यैयत्रगावोभूरिशृंगाअयासः॥अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरि॥ इति । अस्यार्थः । ताःतानिवांयुवयोःराम
कृष्णयोर्वास्तूनिरम्यस्थानानिगमध्यैगंतुंप्रभवामः । यत्रयेषुवास्तुषुभूरिशृंगामहाशृंगवत्योगावःअयासःसंचरंति । अत्रभूलोकेअहनिश्चितं
तत्गोलोकाख्यंपरमंपदंभूरि अत्यंतंमुख्यादपिविशिष्टमवभाति अत्यंतंशोभते । वृष्णःआनंदवर्षकस्योरुगायस्यमहाकीर्तेरित्यर्थः । एतेन
येवदंतिव्रजेनहिश्रुतिर्मानंतेपरास्ताः । श्रुतिरियंनीलकंठेनहरिवंशेकृष्णपर्वव्याख्यानेसार्थालेखि ॥ इतिवृंदावनपक्षः ॥ ३१ ॥ ॥
॥ अथहरिनामपक्षः ॥ वयंतद्धरिनामसदाहृदाधीमहि । ततकिंयत्रत्रयाणांतपोयज्ञदानानांसर्गोनिश्चयोऽमृषा । तदुक्तं संकीर्तितेहरेर्नाम्नि
दानयज्ञतपांसिवै ॥ कृतान्येवभवंतीहसत्यंसत्यंनसंशयः॥ इतिकौशिकसंहितायाम् । किंचसस्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः ॥ सचदा
नफलंप्राप्तोयस्तुसंकीर्तयेद्धरिम् ॥ इतिवैष्णवचिंतामणौनारदः । यद्वायत्रसतिपातकोपपातकमहापातकानांसर्गोमृषा । सहस्राणिपा
तकानामुपपातककोटयः ॥ महापातकसंघाश्चनश्यंतिहरिनामतः ॥ इतिब्रह्मसंहितोक्तेः । पातकानिमांसाशनादीनि । उपपातकानि
पतितसंभाषणादीनि । महापातकानिब्रह्महत्यादीनीतिविवेकः । कथंयथातेजोवारिमृदांविनिमयोऽमृषाव्यवहारे मृषापरमार्थतः। यतः
यस्यनाम्नोऽन्वयात्सेवनादर्थेष्वाद्यस्यधर्मादिषुप्रथमस्यधर्मस्यइतरतइतरेषांअर्थकाममोक्षाणांजन्मभवाति । तदुक्तं अंबरीषशुभंवाक्यंम
योक्तंशृणुभक्तितः ॥ धर्मार्थकाममोक्षार्थंकुरुगोविंदकीर्तनम्॥इति गारुडेशौनकः।यद्वाज्ञानाज्ञानयोर्मध्येआद्यस्यज्ञानस्यजन्मभवति ॥
तदुक्तंतत्रैव यदीच्छसिपरंज्ञानंज्ञानाच्चपरमंपदम् ॥ तदादरेणराजेंद्रकुरुगोविंदकीर्तनम्॥इतिच।पुनः यतोनाम्नःअर्थेषुसर्वपदार्थेषुऐहिकामु
ष्मिकार्थेषुअभिज्ञश्चभवति ॥ आमुष्मिकाऐहिकाश्चभोगाःसर्वेऽप्रयत्नतः ॥ प्राप्यंतेजपतांनित्यंकृष्णकृष्णेतिसत्तमाः ॥ इत्यादिपुराणात् ।



किंचयन्नामस्वराट्स्वेनैवराजतेनृणांशोधनेनत्वासनस्नानादिविधिनेतिस्वराट् । अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंड
रीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ इत्युक्तेः । यद्वास्वराट्सर्वधर्मेषुचक्रवर्तिसमं । तदुक्तं ॥ सामंतास्त्वखिलाधर्मास्तत्रनामहरेःस्वराट् ॥
इत्यभियुक्तोक्तेः । यन्नामादिकवयेऽजामिलायब्रह्मब्राह्मणजातिंवृषलीसंगतोनष्टांपुनस्तेनेप्रकाशितवान् । आदौकविर्विवेकीआदिकविस्त
स्मैअजामिलोपिपूर्वविवेक्यासीत्पश्चाद्वृषलीसंगाद्भ्रष्टोजातः पुनःसंकेतितभगवन्नामोक्त्याभगवत्पार्षदसंगेनगतंब्राह्मणत्वमापेत्यग्रेषष्ठेस्कं
धेस्फुटीभविष्यति । तत्रत्यवाक्यानिविस्तरभियानोक्तानीह । नामैवपरमंतपइत्यादिपुराणात्सृष्ट्याचादौभगवतापिब्रह्मणेतपतपेत्युक्त्याना
मैवबोधितं । निष्किंचनानांनृपयद्धनंविदुरित्युक्तेरपिनामैवप्रतीयते । निष्किंचनधनंनामश्रीहरेःशोधनंसदा ॥ इतिनाममाहात्म्यात् ।
आदिकवयेब्रह्मणेयन्नामब्रह्मसृष्ट्यादिज्ञानंतेनइतिवा । यद्वादिकवयेप्राचेतसायसप्तर्षिभिःपूर्वजन्मन्युपदिष्टंयद्विपरीतंमरेतिनामभाविज
न्मनिब्रह्मरामायणरूपंवेदंतेने ॥ इतिब्रह्मांडपुराणेस्पष्टं । वेदवेद्येपरेपुंसिजातेदशरथात्मजे ॥ वेदःप्राचेतसादासीत्साक्षाद्रामायणात्म
ना ॥ इतिरामीयतिलकोक्तेरामायणंब्रह्मैव । यद्यस्मिन्नाम्निसूरयोप्यापाततोऽधीतशास्त्राअपिमुह्यंतिअर्थवादोयमितिमोहंप्राप्नुवंति ।
तत्रार्थवादकल्पनातुनिरयदा ॥ तदुक्तंब्रह्मसंहितायां । यन्नामकीर्तनफलंविविधंनिशम्यनश्रद्दधातिमनुतेयदुतार्थवादम् ॥ योमानुष
स्तमिहदुःखचयेक्षिपामिसंसारघोरविविधार्तिनिपीडितांगाम् ॥ इति । कृष्णेनशौनकंप्रति ॥ अर्थवादंहरेर्नाम्निसंभावयतियोनरः ॥
सपापिष्ठोमनुष्याणांनरकेपततिस्फुटम् ॥ इतिकात्यायनसंहितायामपि ॥ किंचात्रनास्तिकोब्रूतेननुनामकीर्तनात्सद्यःपापक्षयप्र
तिपादकमंत्रार्थवादेतिहासपुराणोपपुराणसंहितागमादीनांकर्मानुष्ठानादिपराणांस्वार्थेप्रामाण्यमेवनास्तीतिचेन्मानांतरसंवादविसंवादवा
क्यानामग्निर्हिमस्यभेषजंसप्रजापतिरात्मनोवपामुदाखिदद्यजमानःप्रस्तरइत्यादीनामिवस्वार्थे उतमानांतरसंवादविसंवादरहितानामपि
आद्येइष्टापात्तिःद्वितीयस्तुनसंभवति । तादृशवाक्यानांस्वार्थेऽवांतरतात्पर्यस्यदेवताधिकरणादौव्यासादिभिर्भगवत्पूज्यपादादिभिश्चां
गीकृतत्वात्भट्टाचार्यैरपि । अथवामंत्रार्थवादेतिहासपुराणप्रामाण्यात्सृष्टिप्रलयावपीष्येतेइत्यादिग्रंथेनमंत्रार्थवादादीनांप्रामाण्यस्वीका

राच्च मंत्रार्थवादयोःस्वार्थेप्रामाण्यंनास्तीतिवदतोनहुषस्यानर्थप्राप्तिदर्शनाच्च । नामकीर्त्तनात्पापक्षयप्रतिपादकवाक्यानामपिमानांत
रसंवादविसंवादयोरभावात्स्वार्थेप्रामाण्यंस्वीकर्तव्यमेवान्यथानर्थप्राप्तिरेव । तदुक्तंनारदीये अहोहिवाक्येचतुरक्षरेद्वेपुण्यस्यपापस्यनि
दानभूते ॥ उच्चारणादेवनृणांमुनींद्रानारायणश्चेतितथार्थवाद इति ॥ अथप्रकृतमनुसरामः । किंभूतंनामनिरस्ताःकुहकानामा
पराधायस्मिंस्तत्तथानिरस्तकुहकंनामापराधरहितमेवनामयथोक्तफलदमन्यथानेतिभावः ॥ तदुक्तंभक्तिरसामृतसिन्धौसर्वापराधकृद
पिमुच्यतेहरिसंश्रयः ॥ हरेरप्यपराधान्यःकुर्याद्द्विपदपांशुलः ॥ नामाश्रयःकदाचित्स्यात्तरत्येवसनामतः ॥ नाम्नोपिसर्वसुहृदोह्य
पराधात्पतत्यधः ॥ इति ॥ नामापराधास्तु । सन्निंदाऽसतिनामवैभवकथाश्रीशेशयोर्भेदधीरश्रद्धाश्रुतिशास्त्रदेशिकगिरांनाम्न्यर्थवादोभ्र
मः ॥ नामास्तीतिनिषिद्धवृत्तिविहितत्यागौचधर्मांतरैःसाम्यंनाम्निचशंकरस्यचहरेर्नामापराधादश ॥ इतिवैष्णवसिद्धान्ते । पुनःकिंभू
तंसत्यंसारभूतं असारेखलुसंसारेसारभूतंविनिश्चितम् ॥ सर्वेभ्यएवधर्मेभ्योनामश्रीजगदीशितुः ॥ इतिनाममाहात्म्योक्तेः । पुनःस्वेनधा
म्नाश्रयेणाहरिणापरमुत्कृष्टम् ॥ आश्रयस्योत्कृष्टत्वादाश्रयिणोप्युत्कृष्टत्वंवैकुंठवैकुंठेशवद्बोध्यं ॥यद्वापरंपररूपंनामनामवतोरभेदोपचारात्
नाम्नोमंत्रत्वादपिभगवद्रूपत्वं । वक्ष्यतिहि ॥ इतिमूर्त्यभिधानेनमंत्रमूर्तिममूर्त्तिकम् ॥ यजतेयज्ञपुरुषंससम्यग्दर्शनःपुमान् ॥ इति मीमांसका
अपिमंत्ररूपामेवदेवतांमन्वते । नामब्रह्मेत्युपासीतेतिश्रुतेरपिनामब्रह्मरूपमेव ॥ इतिनामपक्षः ॥ ३२ ॥ ॥ छ ॥ ॥ छ ॥
॥ अथवायुपक्षः ॥ वायोरधीनंशास्त्रादिकथनंवक्तुर्वातादिव्याधिर्माभवेदित्येतदर्थंव्यासोवायुंध्यायति ॥ जन्माद्यस्योति ॥ वयंतंवायुंधी
महि । वायुश्चबाह्याभ्यंतरभेदेनद्विधा । बाह्यस्तुरूपरहितस्पर्शवान्वायुरित्युक्तलक्षणःप्रसिद्धः । आभ्यंतरःप्राणःसचशरीरांतःसंचार्येव ॥
तमुभयविधमेवधीमहि । तंकं यत्रयस्मिन्सतित्रयाणांदेहेंद्रियांतःकरणानांसर्गोऽमृषासत्यः । सत्येवप्राणरूपेवायौदेहःसत्योन्यथामृषैवए
वमिंद्रियांतःकरणयोःसत्यतापितत्सत्वेएवेतिभावः । तदुक्तं प्राणेसत्येवदेहस्यसत्तेंद्रियहृदोरपि ॥ तंविनाशृणुविप्रेंदयथास्नेहंविनाशिखी
॥इतिस्मृतेः । यथातेजोवारिमृदामविनिमयोनन्यथात्वममृषा ॥ योवायुराद्यस्यभूतेष्वाद्यस्याकाशस्यसकाशाज्जन्मान्वयात् ।आकाशाद्वा
युरितिश्रुतेः । यतोवायोरितरतइतरेअग्न्यादयस्त्रयः स्युरितिशेषः । प्रथमार्थेतासिः । वायोरग्निरग्नेरापोद्भ्यःपृथिवीतिश्रुतेः।योवायुःअर्थे
षुनिजानिजप्रयोजनेषुअभितोज्ञापयतिनियोजयतिसर्वानितितथा । तंविनानकुत्रापिकस्यचित्प्रवृत्तिरस्तीतिभावः । यश्चस्वेनैवराजत
इतिस्वराट्अनन्यापेक्षः । अनुप्राणंतियंप्राणाःप्राणंतंसर्वजंतुषु ॥ अपानंतमपानंतिनरदेवमिवानुगाः ॥ इत्यग्रेवक्ष्यति । योवायुरा
दिकवयेब्रह्मणेस्वेनहृदापुत्रेणहनुमतासहब्रह्मस्तुतिंतेने । तच्च ततःपितामहंदृष्ट्वावायुःपुत्रवधार्दितः ॥ शिशुकंतंसमादायउत्तस्थौधातुरग्र
तः ॥ लसत्कुंडलमौलिस्रक्तपनीयविभूषणः ॥ पादयोर्न्यपतद्वायुस्त्रिरुपस्थायवेधसः ॥ इत्यादिनावाल्मीकीयोत्तरकांडेस्फुटम् । हृ
दयादभिजायतइतिश्रुतेः । पुत्रस्यहृदयजत्वाद्गोभिःश्रिणीतमत्सरमितिवत्कारणेकार्यप्रयोगः । यद्यस्मिन्वायौसूरयोमुह्यंतिअप्रचलितेइ
तिशेषः । तच्चध्रुवोपाख्यानेस्फुटीभविष्यति वाल्मीकीयेपींद्रकृद्धनुमत्ताडनावसरेप्रसिद्धं । वायुप्रकोपाद्भूतानिनिरुच्छ्वासानिसर्वतः ॥
संधिभिर्भिद्यमानैश्चकाष्ठभूतानिजज्ञिरे ॥ प्रजापतिंसमाधावन्दुःखिताश्चसुखेच्छया ॥ ऊचुःप्रांजलयोदेवामहोदरनिभोदराः ॥ इत्यादि
ना । किंभूतंधाम्नातेजसानिरस्तंकुहकमपावित्र्यरूपंयेनसतथातं पावनात्पवनःप्रोक्तःसर्वेषांजगतामयम् ॥वायुनायन्नसंस्पृष्टंतत्सर्वमशुचि
ध्रुवम् ॥ इत्युक्तेः । पुनःसत्यंब्रह्मरूपत्वात् । वायुःप्राणःसुखंवायुर्वायुर्ब्रह्ममयोध्रुवम्॥ इत्यादिवाल्मीकीये। प्राणस्तथानुगमादितिन्याया
च्च प्राणोब्रह्मैवकुतःतथाब्रह्मपरत्वेनानुगमादवगमादित्यर्थः । पुनःपरंसर्वोत्कृष्टंसर्वोत्कृष्टत्वंप्राणसंवादेश्रूयते । वागादयःसर्वेप्राणाःप्रत्येकंश्रे
ष्ठतामात्मनोमन्यमानास्तन्निर्दिधारयिषयाप्रजापतिमुपजग्मुः सचतानुवाचयस्मिन्नुत्क्रांतेशरीरंपापिष्ठतरमिवभवतिसयुष्माकंमध्येश्रेष्ठ
इतितस्मिन्प्रजापतावेवमुक्तवतिवागादिषूत्क्रांतेष्वपिमूकादिभावेनशरीरंस्वस्थमस्थात्। मुख्यप्राणस्योच्चिक्रमिषायांतुवागादीनांव्याकुल
त्वात्तान्प्रतिप्राणउवाचमामोहमापद्यथयतोहमेवैतत्करोमि ॥ किंतत्पञ्चधाप्राणापानादिभेदेनस्वात्मानंविभज्यएतद्बाणंशरीरंवातिग
च्छतीतिवानंवानमेववाणमस्थिरंशरीरमितियावत् । तदवष्टभ्यविधारयामीतिश्रवणात् । अर्थतोनुक्रांताश्रुतिस्तुमामोहमापद्यथाहमेवैत
त्पञ्चधात्मानंविभज्यैतद्बाणमवष्टभ्यविधारयामीतिप्राणाभिन्नत्वम् ॥इतिवायुपक्षः ॥ ३३ ॥ ॥ छ ॥ ॥ छ ॥

॥ अथेन्द्रपक्षः ॥ वयंतंसदाह्वदास्वराजमिंद्रंधीमहि । तंकंयत्रत्रिसर्गस्त्रयाणांलोकानांसर्गःपालननिश्चयोऽमृषा । इंद्रोभगवतादत्तांत्रैलो
क्याश्रियमूर्जिताम् ॥ भुंजानःपातिलोकांस्त्रीनित्यग्रेवक्ष्यमाणत्वात् । यथातेजोवारिमृदामविनिमयोयाथार्थ्यममृषा यःस्वराट् इंद्र आद्य
स्यवामनरूपस्यभगवतोऽन्वयात्संबंधादर्थेषुस्वर्गादिभोगेष्वभिज्ञोजातः । बलिगृहीतस्वर्गस्तुवामनेनैवसंपादितस्ततस्तदर्थाभिज्ञताजा
तैव । योजन्माजनयतिसर्ववृष्टिद्वारेतिजन्मा ॥ कामंलोकेप्रवर्षतीत्युक्तेः॥इंद्रआदिकवयेआदौकूयतेउच्चार्यतेनृपत्वेनेत्यादिकविरादिराजःपृ
थुस्तस्मैअब्रह्मवेदविरुद्धंपाखंडंइतरतः इःकामस्तीर्यतेऽनेनेतीतरस्तस्मिन्नितरतः । सप्तम्यर्थेतसिः । यज्ञेतेने । यद्यस्मिन्पाखंडेसूर
योविद्वांसोपिमुह्यंति । पाखंडस्यापातरम्यत्वात् । इत्यग्रेचतुर्थस्कंधेविशदीभविष्यति । वाक्यानितुविस्तरभियानोक्तानि । किंभूतंस्वे
नधाम्नातेजसानिरस्ताःकुहकामायाविदैत्यायेनतं । पुनःसत्यंसत्यरूपहरेर्विभूतित्वात् । तदुक्तं देवानामस्मिवासवइतिगीतोपनिषदि ॥
पुनःपरंसर्वामरेशत्वाच्छ्रेष्ठम् ॥ इतीन्द्रपक्षः ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ अथवरुणपक्षः ॥ वयंतंवरुणंसदाह्वदाधीमहि । तंकंयत्रत्रयाणांदैत्यदानवासुराणांसर्गो वयंवरुणंजयेमेतिनिश्चयोमृषा ॥ किंतुते
नैवतेजिताः । विजित्यलोकेखिलदैत्यदानवान्यद्राजसूयेनपुरायजत्प्रभो । इत्यग्रेवरुणंप्रतिहिरण्याक्षोवक्ष्यति । कथंयथातेजोवारिमृदांवि
निमयोऽतात्विकावस्था । यश्चादिकवयेभृगवेब्रह्मज्ञानंतेने । भृगुर्वैवारुणिर्वरुणंपितरंपप्रच्छेतिश्रुतेर्भृगुप्रश्नानंतरंसतस्मैप्रोवाचेति ।
यद्वायोवरुणः । अंगादंगात्संभवतिहृदयादभिजायते ॥ आत्मावैपुत्रनामासीतिश्रुतेः । यःपितासचवैपुत्रइतिस्मृतेश्च । सएषभगवान्द्रोणः
प्रजारूपेणवर्त्तते ॥ इतिवक्ष्यमाणत्वाच्च । वाल्मीकिरूपेणादिकवयेभरद्वाजायादिसनातनंब्रह्मश्रीरामायणरूपंतेने । वाल्मीकिर्वरुण
स्यासीदित्यग्रेषष्ठेवक्ष्यति । यश्चाद्यस्यश्रीकृष्णस्यान्वयात्संसर्गादर्थेषुज्ञातव्यार्थेष्वभिज्ञोजातः । अद्यमेनिभृतोदेहोद्यद्यार्थोधिगतः
प्रभो ॥ इतिश्रीदशमेवरुणोनंदानयनेश्रीकृष्णंवक्ष्यति ॥ अत्रार्थशब्देएकत्वंसामान्याभिप्रायेणबोध्यम् ॥ यश्चस्वराट्कृतराजसूयत्वा
त् । येनेष्टंराजसूयेनसस्वराडितिकथ्यते इत्यभिधानात् । यश्चेतरतःद्वादशसूर्येभ्यइतरत्रापिजन्माभूल्लोकपालेष्वितिभावः । यद्यस्मि



न्ब्रह्मणिसूरयोविद्वांसोपिमुह्यंति दुर्ज्ञेयत्वात् । किंभूतंस्वेनधाम्नातेजसानिरस्ताःकुहकायुद्धावसरेयेनसतथातं । पुनःकिंभूतंसत्यंपरंश्रेष्ठंयस्य
तंसत्यसंभाषणपरं । तच्चतदुक्तेर्ज्ञायते । पश्यामिनान्यंपुरुषात्पुरातनाद्यःसंयुगेत्वांरणमार्गकोविदम् । आराधयिष्यत्यसुरर्षभेहितंमन
स्विनोयेगृणतेभवादृशाः ॥ तंवीरमारादभिपद्यविस्मयःशयिष्यसेवीरशयेश्वभिर्वृतः ॥ इत्यादितृतीयेवरुणोवक्ष्यति । सत्यसंभाषणाद्द
तेशत्रुमित्थंकथनंसंमुखेनसंभवतीतिभावः ॥ ॥ इतिवरुणपक्षः ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ अथधर्मराजपक्षः ॥ वयंतंधर्मराजंधीमहि । तंकं यत्रत्रयाणांवराणांपितृसौमनस्याग्निविद्यात्मविद्यारूपाणांसर्गोऽस्मैदास्यामीतिनिश्च
योऽमृषा । यथातेजोवारिमृदामविनिमयोऽमृषा । एतच्चकठवल्ल्यांस्फुटं । तथाहि पितुःकोपाच्छप्तोनचिकेताधर्मराजपुरंगत्वाधर्मराजमद्द
ष्ट्वोपवासत्रयंचकारब्रह्मलोकादागत्ययमेनोक्तोवरत्रयंगृहाणसचाहमेपितुःसौमनस्यमस्त्वितिप्रथमोवरः । सत्वमग्निंस्वर्ग्यमध्येषिमृत्योप्रब्रू हि
श्रद्दधानायमह्यमित्यग्निविषयःप्रश्नः । येयंप्रेतेविचिकित्सामनुष्येस्तीत्येकेनास्तीतिचैकेएतद्विद्यामनुशिष्टस्त्वयाहंवराणामेषवरस्तृती
यइतिजीवप्रश्नः । अन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ॥ अन्यत्रभूताच्चभव्याच्चयत्तत्पश्यसितद्वद ॥ इतिपरमात्मप्रश्नइहक
ठवल्लीग्रंथे जीवपरमात्मनोःकल्पितभेदत्वात्पृथक्प्रश्नोन । वरान्वृणीष्वेतिमृत्युनाप्रेरितेननचिकेतसापितुःसौमनस्याग्निविद्यात्मकवरत्रय
मेवपृष्टमितिवराणामेषवरस्तृतीयइतिलिंगान्निश्चितत्वात्तथापिजीवात्मनोःकल्पितभेदापेक्षयासूत्रकारैरपित्रयाणामेवचैवमुपन्यासःप्रश्नश्चे
तिसूत्रेत्रयाणामित्युक्तम् यद्वासदवनासुजनशासनाश्रितभरणरूपाणांत्रयाणांधर्माणांसर्गःस्थितिर्यत्रधर्मराजेऽमृषा । यश्चस्वस्मिन्राजतइ
तिस्वराट्प्राप्तात्मतत्त्वः यश्चाद्यस्यसूर्यआत्मादिकृद्धरिरित्युक्तेःसूर्यस्यसकाशाजन्मायेप्राप । यश्चार्थेषुवेदस्यार्थेष्वभिज्ञः । वेदैर्यद्धि
हितंन्याय्यंतत्करोतिसदायमः ॥ इत्यादिपुराणात् । किंचयस्यान्वयात्सेवनादितरतस्तादितरश्चित्रगुप्तोप्यर्थेष्वभिज्ञः । ननुकोयं
चित्रगुप्तइतिप्रश्ने । दृग्गोचरोभूदथचित्रगुप्तःकायस्थउच्चैर्गुणएतदीयः ॥ इतिनैषधीये ॥ कायस्थउक्तस्तस्यकाजातिर्यतोधर्मसभायां
प्रवेशइतिप्रश्नेपद्मपुराणवाक्यान्याह । सृष्टयादौसदसत्कर्मज्ञप्तयेप्राणिनांविधिः ॥ क्षणंध्यानेस्थितस्तस्यसर्वकायाद्विनिर्गतः ॥ दि

व्यरूपः पुमान्हस्तेमषीपात्रंचलेखिनीम् ॥ दधानश्चित्ररूपेणरक्षितोदैवतैर्हृदि ॥ चित्रगुप्तइतिख्यातो धर्मराजसमीपतः ॥ प्राणिनां
सदसत्कर्मलेखनायनियोजितः ॥ ब्रह्मणातींद्रियोज्ञानीदेवाग्न्योयज्ञभुक्सदा ॥ भोजनाच्चसदातस्मादाहुतिर्दीयतेद्विजैः ॥ ब्रह्मकायो
द्भवोयस्मात्कायस्थोजातिरुच्यते ॥ तस्यपुत्राःसमुद्भूताश्चत्वारोबहुवित्तमाः ॥ माथुरोगौडसंज्ञश्चनागरोनैगमस्तथा ॥ तेषांनामा
निचत्वारिचतुर्णांचयथाक्रमम् ॥ नानागोत्राश्चतद्वंश्याः कायस्थाभुविसंतितेइति । एवंहत्वार्जुनंरामःसंधायनिशितान्शरान् ॥ अ
न्वधावत्सतान्हंतुंसर्वानेवातुरान्नृपान् ॥ ततःक्षत्रवराःसर्वेप्राद्रवंतचतद्भयात् ॥ केचिद्गहनमाश्रित्यकेचित्पातालमाविशन् ॥ सगर्भाचं
द्रसेनस्यभार्यादाल्भ्याश्रमंययौ ॥ ततोरामःसमायातोदाल्भ्याश्रममनुत्तमम् ॥ पूजितोमुनिनारामोह्यर्घपाद्यासनादिभिः ॥ द
दौमध्याह्नसमयेतस्मैभोजनमादरात् ॥ रामस्तुयाचयामासहृदिस्थंस्वमनोरथम् ॥ याचयामासरामाच्चकामंदाल्भ्योमहामुनिः ॥ त
तोद्वौपरमप्रीतौभोजनंचक्रतुर्मुदा ॥ भोजनानंतरंदाल्भ्योराममूचेमहामुनिः ॥ यत्त्वयाप्रार्थितंदेवतत्त्वंशंसितुमर्हसि ॥ रामउवाच ॥ तवा
श्रमेमहाभागसगर्भास्त्रीसमागता ॥ चंद्रसेनस्यराजर्षेःक्षत्रियस्यमहात्मनः ॥ तन्मेत्वंप्रार्थितंदेहिहिंसेयंतांमहामुने ॥ ततोदाल्भ्यःप्रत्यु
वाचददामितववांछितम् ॥ यन्मयाप्रार्थितंदेवतन्मेत्वंदातुमर्हसि ॥ ततस्त्रियंसमाहूयचंद्रसेनस्यवैमुनिः ॥ रामायप्रददौभीतांरामः प्रीतम
नाअभूत् ॥ रामउवाच ॥ यत्त्वयाप्रार्थितंदेवभोजनावसरेपुरा ॥ तन्मेशंसमहाभागददामितववांछितम् । दाल्भ्यउवाच ॥ स्त्रियागर्भममुं
बालंतन्मेत्वंदातुमर्हसि ॥ ततोरामोब्रवीद्दाल्भ्यंयदर्थमहमागतः ॥ क्षत्रियांतकरश्चाहंतंत्वंयाचितवानसि ॥ प्रार्थितश्चत्वयाविप्रकायस्थोग
र्भउत्तमः ॥ तस्मात्कायस्थइत्याख्याभविष्यतिशिशोःशुभा ॥ दुष्टादेनंक्षात्रधर्माद्वारितुंचत्वमर्हसि ॥ ततोदाल्भ्यःप्रत्युवाचभार्गवंप्रति
हर्षितः ॥ माकुरुष्वात्रसंदेहंदुर्बुद्धिर्नभविष्यति ॥ एवंरामोमहाबाहुर्हित्वातांगर्भमुत्तमम् ॥ निर्जगामाश्रमात्तस्मात्क्षत्रियांतकरःप्रभुः ॥
कायस्थएषउत्पन्नःक्षत्रिण्यांक्षत्रियात्ततः ॥ रामाज्ञयासदाल्भ्येनक्षत्रधर्माद्बहिष्कृतः ॥ ततःकायस्थधर्मोस्मैचित्रगुप्तस्ययःस्मृतः ॥ प्राप्त
कायस्थनामत्वाल्लेख्यावृत्तिश्चभूभृताम् ॥ तस्यभार्याकृताचित्रगुप्तकायस्थवंशजा ॥ तद्गोत्रजाश्चकायस्थादाल्भ्यगोत्रास्ततोभवन् ॥ दा

ल्भ्योपदेशतस्तेवैधर्मिष्ठाःसत्यवादिनः ॥ सदाचारपरानित्यंरताहरिहरार्चने ॥ देवर्षिपितृणांचैवह्यतिथीनांचपूजकाइति । चंद्रसेनीयानांक्ष
त्रियत्वंचित्रगुप्तवंश्यानांतुक्षत्रियत्वंचंद्रसेनीयैर्योनिसंबंधादेव तस्यभार्याकृताचित्रगुप्तकायस्थवंशजाइतिवाक्येनबोध्यते भविष्येतु चित्र
गुप्तस्यब्राह्मणत्वंप्रतिभाति । विसृज्यधर्मराजानंब्रह्माध्यानमकल्पयत् ॥ दिव्यवर्षसहस्रंतुतपःकृत्वाब्रवीदिदम् ॥ संनिधौपुरुषंदृष्ट्वाश्यामंक
मललोचनम् ॥ कंबुग्रीवंगूढशिरंपूर्णचंद्रनिभाननम् ॥ लेखिनीपाटिकाहस्तमषीभाजनसंयुतम् ॥ ममकायात्समुत्पन्नःस्थितःकायेभवद्यतः ॥
कायस्थइतितस्याथनामचक्रेपितामहः ॥ चित्रवाचामयागुप्ताश्चित्रगुप्तःस्मृतोबुधैः ॥ सगत्वाकोटिनगरेचंडीपूजनतत्परः । इत्यारभ्यनमस्ते
स्तुजगद्धात्रीत्यादिबहुश्लोकैःस्तुत्वाततोवरत्रयंप्राप्तंदुर्गातः । चित्रगुप्तत्वयापुत्रकृतमाराधनंमम ॥ तस्मात्तेद्यमयादत्तंवराणांत्रयमुत्तमम् ॥
परोपकारेकुशलश्चाधिकारेसदास्थिरः ॥ भविष्यसिचिरायुस्त्वंदत्वासांतरधीयत ॥ चित्रगुप्तस्ततोयातोधर्मराजेनसंगतः ॥ एकस्मिन्ने
वकालेतुधर्मशर्माद्विजोत्तमः ॥ अपत्यार्थंविधातारमाराध्यसोभजत्तदा ॥ परमेष्ठिप्रसादेनलब्ध्वाकन्यामिरावतीम् ॥ चित्रगुप्तायतांदत्त्वा
विवाहमकरोत्तदा ॥ इतिवाक्यजातेनविप्रकन्याविवाहाद्विप्रत्वंप्रतिभाति । अत्रधर्मशर्मणापिसाकन्याक्षत्रियायामुत्पादितातेनचित्रगुप्ताय
दानेपिनदोषः । नह्येतेनविप्रत्वंचित्रगुप्तस्यसेत्स्यति । चित्रगुप्तेनतस्यामष्टौपुत्राउत्पादिताश्चार्वादयइतिअपरस्यांभार्यायांचत्वारोभान्वाद
यःपुत्राउत्पादिताइति मांडव्यशापतस्तद्वंश्यानांमद्यादौप्रवृत्तिः । पुनस्तदनुग्रहेण । वंशेवृद्धिःसुवृत्तानांदुर्वृत्तानांभवेत्क्षयः ॥ द्विजातीनांय
थादानंयजनाध्ययनंतथा ॥ वैश्याद्युच्चाहितवृत्तिर्ब्राह्मणक्षत्रियादधइत्यादिवरोपिजातः । किंबहुनाक्षात्रियत्वमेवैतेषांसिद्धम् । यत्तुमाहिष्यव
नितासूनुंविदेहाद्यंप्रसूयते ॥ सकायस्थइतिप्रोक्तस्तस्यकर्मविधीयते ॥ लिपीनांदेशजातानांलेखनंचसमाचरेत् ॥ गणकत्वंविचित्रंचबीजपाटी
प्रभेदतः ॥ अधमःशूद्रजातिभ्यइतिशूद्रकमलाकरवाक्येनशूद्राधमत्वंतद्भिन्नजातिपरं । तत्रकायस्थपदप्रयोगस्तुकायस्थवृत्तिसाधारण्येन
गौणएव । सृष्ट्यादौब्रह्मणाचित्रगुप्तस्यैवसंपादितत्वात् । ब्राह्मण्यांक्षत्रियात्सूतोवैश्याद्वैदेहिकस्तथा । माहिष्यःक्षत्रियाज्जातोवैश्यायामितिको
शात् । अलंप्रकृतानुपयुक्तेन । यश्चधर्म्मराट्आदिसन्तनंब्रह्मकवयेनचिकेतेसतेने । तंदुर्दर्शंगूढमनुप्रविष्टंगुहाहितंगह्वरेष्ठंपुराणम् ॥ अध्यात्म

योगाधिगमेनदेवंनत्वाधीरोहर्षशोकौजहाति ॥ इत्यादिरूपंप्रकाशितवान्। यद्वेतरतोभगीरथायादिसनातनंब्रह्मज्ञानंतेने । तच्चबृहन्नारदी
येस्पष्टम्। यद्यस्मिन्ब्रह्मणिसूरयोविद्वांसोमुह्यंति । किंभूतं स्वेनधाम्नातेजसानिरस्ताःकुहकाअधर्मवर्तिनोयेनतं । पुनःसत्यंसमदर्शिनम् ।
सत्यंचसमदर्शनमित्येकादशोक्तेः । सत्यमस्यास्तीतिसत्यः । मत्वर्थीयोच् । तंसत्यम् । समदर्शित्वंतुतस्य पंडितेचैवमूर्खेचबलवत्यपिदुर्बले॥
ईश्वरेचदरिद्रेचमृत्योःसर्वत्रतुल्यता ॥ इतिगरुडोक्तेः।पुनःपरंश्रीकृष्णरूपत्वात् । यमःसंयमतांचाहमितिगीतोक्तेरितिधर्मराजपक्षः॥३६ ॥
अथकुबेरपक्षः ॥ ॥ वयंतंकुबेरंसदाहृदाधमिहि । तंकंयत्रत्रयाणांश्रीदत्वयक्षेश्वरत्वमनुष्यधर्मत्वानांसर्गोनिश्चयोऽमृषासत्यः । यथातेजआ
दीनांवास्तवंरूपम् । श्रीदोयक्षेश्वरस्त्वेषनरधर्माहरप्रियः ॥ इत्यभिधानात्त्रिसर्गाधिकरणत्वंतत्रसत्यम् । यःकुबेरआद्यस्यब्रह्मणोऽन्वया
द्वरादर्थेषुधनेष्वभिज्ञोनियोक्तास्वामीतियावत् । सेवनादन्वीयतेप्राप्यतइत्यन्वयोवरः । कुबेरेणवर्षसहस्रंतपःकृतंततस्तुष्टेनब्रह्मणातस्मैध
नेशतादत्ता । तदुक्तंश्रीवाल्मीकीयोत्तरकांडे । सतुवैश्रवणस्तत्रतपोवनगतस्तदा ॥ इत्यारभ्य ब्रह्मासुरगणैःसार्द्धंबाढमित्येवहृष्टवत्॥अहं
वैलोकपालानांचतुर्थंस्रष्टुमुद्यतः ॥ यमेन्द्रवरुणानांचपदंयत्तवचोप्सितम् ॥ तद्गच्छबतधर्मज्ञनिधीशत्वमवाप्नुहि ॥ इत्यंतेनग्रन्थेन । यश्चकु
बेरआद्यस्यब्रह्मणोऽन्वयाद्वंशाज्जन्मलेभइतिब्रह्मणःपुलस्त्यःस्ततोविश्रवास्ततःकुबेरः इहाद्यस्यान्वयादितिपदद्वयमावृत्त्यायोज्यं किंभू
तइतरतःइःकामस्तीर्यतेऽनेनेतीतरंतपस्तत्तनोतिविस्तारयतीतीतरतः। तनोतेर्डःतपस्वी॥पुनःस्वेनधनेनराजतेइतिस्वराट् धनेशत्वात्।
यआदिप्राक्तनंकवयेनिपुणायध्रुवायब्रह्मतेनेज्ञानंप्रकाशितवान् । भोभोक्षत्रियदायादपरितुष्टोस्मितेनघ ॥ यस्त्वंपितामहादेशाद्वैरंदुस्त्य
जमत्यजः॥ नभवानवधीद्यक्षान्नयक्षाभ्रातरंतव ॥ कालएवहिभूतानांप्रभुरप्ययभावयोः ॥ इत्यादिनातेनेइत्यर्थः । यद्यस्मिन्कुबेरेसूरयोमु
ह्यंति । ईशश्चेत्कथमयंकुबेरोजातःकुत्सितंसरोगंबेरंशरीरमस्येतिकुबेरइतिशंकांकुर्वंति । बेरंमूर्त्तौचक्लीबेरइतिधरणिः । तेनकदाचित्पार्वतींप्र
तिमन्दहृष्टिःकृतातेनैकपिंगोजातइतिरामायणेप्रसिद्धम् । कुत्सायांकितिशब्दोयंशरीरंबेरमुच्यते ॥ कुबेरःकुशरीरत्वान्नाम्नातेनैवकीर्त्तितः ॥
इतिवायुपुराणात्। किंभूतंस्वेनधाम्नातेजसानिरस्ताःकुहकारावणाद्याःसेवकदारिद्र्यंवायेनसतथा । पुनःकिंभूतंसत्यंसत्यरूपंहरेर्विभूतित्वात्



वित्तेशोयक्षरक्षसामितिश्रीमुखोक्तेः । पुनःपरमुत्कृष्टमन्यत्राविद्यमानपुष्पकनिधीशत्वात् । पुष्पकंविमानं । निधयस्तु महापद्मश्चपद्मश्च
शंखोमकरकच्छपौ ॥ मुकुन्दकुन्दनीलाश्चखर्वश्चनिधयोनव ॥ ॥ इतिकुबेरपक्षः ॥ ३७ ॥ ॥ ॥ ॥ ॥
अथाग्निपक्षः ॥ ॥ वयंतमग्निंसदाहृदाधीमहि । तंकंयत्रत्रयाणांदाक्षिणात्यगार्हपत्याहवनीयानांसर्गोनिश्चयोऽमृषासत्यः । यथातेजोवा
रिमृदामविनियःस्वाभाविकावस्थाऽमृषा । दक्षिणादिशातःसमानीतस्तत्रस्थापितोवादाक्षिणात्यः।गृहपतिनासंयुक्तोगार्हपत्यः । आहूय
तेप्रक्षिप्यतइत्याहवनंहविस्तदर्हतीत्याहवनीयइतिविवेकः । यद्वात्रिभिर्ऋग्यजुःसाममंत्रैस्सृज्यतेविसृज्यतेहविरत्रेतित्रिसर्गः ।यद्वायत्राग्नौ
सतित्रयाणांहोत्रध्वर्यूद्गातॄणांसर्गोरचनाऽमृषाअग्निमृतेतेषामसिद्धेः । यश्चाग्निराद्यस्यशिवस्यान्वयादेवकृतस्तवनाज्जन्मतन्नेत्रादाविर्भा
वमाय । अयगतावतोलिट् । यश्चार्थेषुभिःसकामैरभितोज्ञायतेसेव्यतेइत्यर्थेष्वभिज्ञः । सर्वेकामाअवाप्यंतेवह्निसाध्येनकर्मणा ॥ वह्नावा
हुतिप्रक्षेपःश्रद्धयार्थप्रपूरकः ॥ इतिस्मरणात् । यश्चाग्निरितरतोन्येभ्यःसर्वेभ्यःस्वेनैवराजतेनत्वन्यमपेक्ष्येतिस्वराट् स्वयंप्रकाशः । इतरेप
दार्थास्तमसिवन्हिनाप्रकाश्यंतेवन्हिस्तुस्वयमेवप्रकाशतइतिभावः। स्वराट्सम्राडितिवार्थः । सम्राजमतिथिंजनानामितिश्रुतेः । किंकर्तु
मादिकविंहंतुंअदनमादिर्भोजनमादेःकंसुखमादिकंतद्वायतेतन्यतेऽनेनेत्यादिकविरुदरेरुच्यजनकरोगविशेषस्तस्मैतथा । इहात्तेर्भावे इञ
वातेश्चडिरौणादिकःकर्मणि । आदिकवयइति "तुमोप्रयुक्तस्ये" तिकर्मणिचतुर्थी । यद्वादिकविमग्निंद्रष्टुंवयमग्निंधीमहि । अग्नेरादिकवि
त्वंतुमंत्रवर्णात् । आजातमग्निं कविꣳसम्राजामितिश्रुतेः। वन्हिस्मृतेरुदरादिरोगक्षयेप्रमाणंस्कांदवाक्यजातम् । तथाहि ॥ ॥ देवाऊचुः ॥
अग्निर्वैश्वानरोवन्हिःकृष्णवर्त्माभयानकः ॥ प्रभवोविभवश्चैववीतिहोत्रस्तनूनपात् ॥ भवोभीमोभीमनेत्रसमुत्थोदेहसंस्थितः ॥ त्रैलोक्यदी
पकोभानुःस्वर्भानुःसर्वगस्तथा ॥ चित्रभानुःशीतहंताशीतसंस्थःकृपाकरः ॥ धेनुकोवडवाजन्माजाठरोजठरस्थितः ॥ यज्ञनेतायज्ञभो
क्ताभक्तिगम्योलयंकरः ॥ कृपीटयोनिःशोचिष्माञ्ज्वलनोजातरूपदः ॥ जातवेदावेदसंस्थोऽथाश्रयाशोमहाप्रभुः ॥ दानवारिर्ज्वलत्केशोम
दनोदीनवत्सलः ॥ ॥ स्कन्दउवाच ॥ ॥ अग्नेरेतानिनामानियःपठेत्प्रयतोनरः ॥ सर्वसिद्धिमवाप्नोतिशतयज्ञफलंलभेत् ॥ मंदाग्निर्यो

नरोविप्रसुभक्त्याप्रतिपत्तिथौ ॥ नामामृतंपिबेनित्यंत्रिवारंनियतःशुचिः ॥ मन्दाग्निस्तस्यनश्येतसर्वरोगक्षयस्तथा ॥ धन्योभव
तिलोकेषुपूतात्मानात्रसंशयः ॥ इति । यतोयेनवन्हिनाब्रह्मयज्ञस्तेनेविस्तारितंतमृतेतदसिद्धेःसएवतत्तानकइति । यद्यस्मिन्य
ज्ञेसूरयोविद्वांसोमुह्यंतियज्ञस्यसर्वथाकर्मरूपात्वाद्दुर्ज्ञेयत्वं । किकर्मकिमकर्मेतिकवयोप्यत्रमोहिताः ॥ इतिस्मृतेः। किंभूतंस्वेननिजेनधाम्ना
तेजसानिरस्तंकुहकंतमोरूपंयेनसतथातंपुनः । सत्यंसत्यरूपंविष्णुरूपत्वाद्वसूनामस्मिहव्यवाडितिस्मृतेः । पुनःपरंमुख्यंआग्निरेतुप्रथमोदे
वतानामितिश्रुतेः ॥ ॥ इतिवह्निपक्षः ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
॥ अथविष्णुशिवाभेदपक्षः ॥ वयंतंविष्णुशिवंधीमहि । तंकंयत्रत्रयाणांगुणानांसर्गोदेहादिर्मृषा । यथातेजोवारिमृदांविनिमयोन्यथाभावोमृ
षा । अशरीरंवावसंतंमितिश्रुतेरुभयोर्ब्रह्मरूपत्वेनाशरीरित्वं । त्वमकरणःस्वराडखिलकारकशक्तिधरः। इतिवक्ष्यमाणात्वाच्च । अनिं
द्रियोपियोदेवइतिश्रीधरोक्तेश्चानिंद्रियत्वंविष्णोः ॥ शिवस्याप्यनिंद्रियत्वं । त्वंब्रह्मपरमंसाक्षाद्देहेंद्रियविवर्जितः ॥ अनुग्रहायभक्ता
नांतद्धानिवचदृश्यते ॥ इतिपुराणात् । मृडनायहिलोकस्यव्यक्तिस्तेव्यक्तकर्मणः ॥ इतिवक्ष्यमाणत्वाच्च । यतोविष्णोःशिवाद्वाद्य
स्यब्रह्मणोवेदस्यवाजन्म । एतस्यमहतोभूतस्यनिश्श्वसितंयदृग्वेदोयजुर्वेदःसामवेदइतिश्रुतेः ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥
इतिश्रुत्यंतराच्चवेदस्य । किंत्वीश्वरत्वान्नाविनिर्गतोस्मीतिब्रह्मवाक्याद्वेधसश्चजन्मविष्णोःप्रतीयते ॥पुरारेर्वेदवेद्यत्वंवेदाविर्भावमेदिनी ॥
इतिस्मृतेर्वेदावेदांगैःसहितास्त्वत्प्रसूतायज्ञोदीक्षाचदक्षिणाचाभिरूपेतिहरिवंशेहर्युक्तेश्चत्वत्तोजातोमहादेवब्रह्मासृष्टिप्रवृत्तयेइत्यादिपुरा
णात् । शिवादपिब्रह्मणोवेदस्यचजन्मप्रतीयते । चपुनःयतोयस्यशिवस्यविष्णोर्वान्वयात्सेवनादर्थेषुधर्मादिष्वभिज्ञस्तत्प्रसादाल्लब्धज्ञानः
सन्नितरतोभवतिइतागतारतिर्यस्येतीतरतः । समासांतोडः । विरक्तोभवतीत्यर्थः । तद्वक्ष्यति यदायस्यानुगृह्णातिभगवानात्मभावितः
॥ सजहातिमतिंलोकेवेदेचपरिनिष्ठिताम् ॥ इति । यःउभयरूपएवस्वान्भक्तान्जयतिप्रकाशयतिलोकेलोकांतरेचेतिस्वराट् । स्वं
स्वानत्रपरत्राथराजामिराजयामिच ॥ यतःस्वराडहंतेनप्रथितोलोकशास्त्रयोः ॥ इत्यभियुक्तोक्तेः । योविष्णुरादिकवयेब्रह्मवेदंहृदातेने ।

॥२९॥

योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै ॥ इतिश्रुतेः । यः शिवोपिकवयेनारदायादिसनातनंब्रह्मतेने । कृत्वोरौदक्षिणोसव्यंपा
दपद्मंचजानुनि ॥ बाहुंप्रकोष्ठेक्षमालामासीनंतर्कमुद्रया ॥ नारदायप्रवोचंतंपरंब्रह्मसनातनम् ॥ इतिवक्ष्यमाणत्वात्। यद्यस्मिन्ब्रह्मणिसूरयो
जैमिन्यादयोपिमुह्यंतिसुदुर्बोधत्वात् । तदुक्तं शब्दब्रह्मसुदुर्बोधंदुर्विगाह्यंसमुद्रवत् ॥ इत्येकादशे । किंभूतंमुभयंस्वेनधाम्नातेजसानिरस्ताकुह
कामायाविनस्त्रिपुरांधकाद्यामुरकंसाद्यावायेनसतथातं । पुनःसदासत्यंत्रैकालिकाबाध्यं । ज्ञानांतरेणाविषयासत्यत्वप्रतीतिर्बाधस्तद्योग्यो
बाध्योनबाध्योऽबाध्यस्त्रैकालिकश्चासावबाध्यस्सतथातं । आविर्भावतिरोभावौभवतस्तुहरीशयोः॥अन्येषामादिदेवानांनहिनाशःकदाच
न ॥ इतिस्मरणात् । पुनः परंसर्वेश्वरं । परःसर्वेश्वरान्ययोरितिधरणिधरः । नहिद्वौसर्वेश्वरौभवितुंशक्यावुभयोरनैकमत्याजगदांध्यप्रसंगा
दितिशंक्यं । तयोर्द्विरूपत्वेप्यैक्यमेव । द्विरूपत्वंतुभक्तेच्छयैव । हरहर्योःप्रकृत्यैक्यंसाधनैक्यंतथापितौ ॥ तथापिभजतांरुच्यासंप्राप्तौभि
न्नरूपताम् ॥ इतिपुराणांतरात् । माधवोमाधवावीशौसर्वसिद्धिविधायिनौ ॥ वंदेपरस्परात्मानौपरस्परनुतिप्रियौ ॥ इतिश्रीधरोक्ते
श्च । रामेश्वरस्थापनावसरेमुनिभिरपितदैक्यमेवनिश्चितम् ॥ रामेश्वरपदेप्राप्तेबहुव्रीहिंमहेश्वरः ॥ रामस्तत्पुरुषंब्रूतेमुनयःकर्मधारय
म् ॥इत्यभियुक्तोक्तेः । यःशिवःसचवैविष्णुर्योविष्णुःसचवैशिवः ॥ इतिहरिवंशाच्च । शिवस्यहृदयंविष्णुर्विष्णोश्चहृदयंशिवः ॥ ईषदप्यं
तरंकृत्वारौरवंनरकंव्रजेत् ॥ इतिवचनेनभेदेनिंदाश्रवणाच्च। वेदेशास्त्रेपुराणेचदृश्यतेनाभिदातयोः ॥ इतिचिरंजीविभट्टोक्तेश्च। सब्रह्मासशिवः
सेंद्रःसोक्षरःपरमःस्वराट्॥सएवाविष्णुःसप्राणःसकालोग्निसचंद्रमाः ॥ सएवसर्वंयद्भूतंयच्चभाव्यंसनातनमितिकैवल्योपनिषादिसर्वात्मत्वश्रु
तेरभेदएवतयोः । किंबहुनावाग्जालेन ॥ ॥ इतिशिवविष्णुपक्षः ॥ ३१ ॥ ॥ ॥ ॥
॥ अथदुर्गापक्षः ॥ वयंतद्दुर्गारूपंतेजोहृदासदाधीमहितत्किंयत्रतिसृणांमहाकालीमहालक्ष्मीमहासरस्वतीनांसर्गोरचनाऽमृषासत्यः । कथं
यथाऽविनिमयोऽमृषा । यतोयेनतेजसाद्यस्यविष्णोरितरतइतरयोर्ब्रह्मरुद्रयोश्चजन्मदेहसंबंधस्तेनेप्रकाशितः । विष्णुःशरीरग्रहणमह
मीशानएवच ॥ कारितास्तेयतोतस्त्वाकःस्तोतुंशक्तिमान्भवेदितिमार्कंडेयेब्रह्मवाक्यात् । यच्चारिमृदांशूराणांदैत्यानामन्वयात् अ

न्वयंवंशमत्तिभक्षयतीत्यन्वयात् इत्थंयदायपदाबाधादानवोत्थाभविष्यति । तदातदावतीर्याहंकरिष्याम्यरिसंक्षयम् ॥ इतिश्रीमुखोक्तेः । स्वराडिन्द्रःअभिज्ञोऽन्योपिदेवःअर्थेषुसत्सुयतश्चयस्यतेजसोब्रह्मकोर्थःस्तुतिमायेचकार । इहायगत्यर्थोपिकरणेधातूनामनेकार्थत्वाद्बोध्यः । तच्चस्फुटंसप्तशतीचरिते । देव्याहतेतत्रमहासुरेन्द्रेसेंद्राःसुरावह्निपुरोगमास्ताम् ॥ कात्यायनींतुष्टुवुरिष्टलाभादित्यादिना । शक्रादयःसुरगणानिहतेतिवीर्येइत्यादिनाच । किंकर्त्तुंधीमहिआदिकवयेआदिकविंविष्णुंप्राप्तुं । तदुक्तंब्रह्मवैवर्त्ते अनाराध्यमहेशानीं नैवाप्नोतिहरिंनरः ॥ इति । आदिपुराणेपि । योनाराधामनाश्रित्यसेवतेमांमुनीश्वर ॥ नकदापिसचाप्नोतिमांराधारहितंखलु ॥ इति । यद्यस्मिन्दुर्गारूपेतेजसिसूरयोपिशुंभाद्यामुह्यंति । मांवाममानुजंवापिनिशुंभमुरुविक्रमम् ॥ भजत्वंचंचलापांगीत्यादिमोहंप्राप्नुवंति । किंभूतंतत्स्वेनधाम्नातेजसानिरस्ताःकुहकारक्तबीजाद्यायेनतत्तथा । यद्वानिरस्तःकुहकःस्मर्त्तॄणामापल्लक्षणोयेनतत्तथा । दुर्गेस्मृताहरसिभीतिमशेषजंतोःस्वस्थैःस्मृतामतिमतीवशुभांददासि ॥ दारिद्र्यदुःखभयहारिणिकात्वदन्यासर्वोपकारकरणायसदार्द्रचित्ता ॥ इति मार्कंडेयोक्तेः । पुनःसत्यंनित्यंनित्यैवसाजगन्मूर्त्तिर्ययासर्वमिदंततम् ॥ इत्यादिपुराणात् । पुनःपरंसर्वसेव्यत्वात् । सर्वस्वरूपेसर्वेशेइत्युक्तेः । मुक्तिहेतुत्वाद्वापरं । यामुक्तिहेतुरविचिंत्यमहाव्रताचेतिमार्कंडेयोक्तेश्च । सैषाब्रह्मविष्णुरुद्रस्वरूपाणिसैषाप्रजापतींद्रमनवइत्यादि तामहंप्रणौमिनित्यंदेवींपापहारिणींभुक्तिमुक्तिप्रदायिनीमित्यंताथर्वश्रुतेःसापरैवेत्यलंप्रपञ्चेन ॥ इति दुर्गापक्षः ॥ ४० ॥

अथश्रीभागवतपक्षः॥वयंतत्श्रीभागवतंमहापुराणंसदाहृदाधीमहि। ननुभागवतस्याधुनाप्रारब्धत्वेनकथमादौविनातन्निष्पत्तिंतद्ध्यानमितिचेन्न नहिभागवतंश्रीव्यासदेवेनरचितंकिंतुपूर्वंसदेवाविष्कृतमन्यथातस्यइदंभागवतंनामपुराणंब्रह्मसंमितइतिवाक्येनब्रह्मरूपत्वाद्ब्रह्मणोप्यनित्यतास्यात् । पिबतभागवतंरसमालयमित्यग्रेवक्ष्यमाणत्वादप्यस्यानागताख्यानेनैवप्रवृत्तेः । पुराणांतरेप्रशंसाश्रवणादपिनित्यत्वमेवास्यसेत्स्याति । तथाचगरुडपुराणे । अर्थोयंब्रह्मसूत्राणांभारतार्थविनिर्णयः ॥ गायत्रीभाष्यभूतोसौवेदार्थपरिबृंहितः ॥ ग्रंथोष्टादशसाहस्रोद्वादशस्कंधसंमितः ॥ पठनात्पाठनाद्ध्यानात्स्पर्शनादर्चनाद्दृशेः ॥ सर्वपापहरःकृष्णरूपीचैवनसंशय ॥ इति ब्रह्मवैवर्तेपि पुराणे



षुभागागवतामितिविभूतिषुश्रीभागवतस्यगणितत्वादपिब्रह्मरूपतास्यासिद्धेत्यतोनित्यमेवेदंपुराणमथाग्रेऽस्यवैभवंवक्ष्यामः। तत्किं । यत्रत्रयाणांकर्मोपासनाज्ञानकांडानांसर्गोरचनाऽमृषासत्यः । इहकांडत्रयस्ययथावत्प्रतिपादनात् । कर्मकाण्डस्तुविधिनिषेधात्मकः । तत्र संक्षिप्यविधिभेदानाह । अप्राप्तंफलवन्तंचार्थंयःस्वसामर्थ्येनप्रकाशयतिसविधिरुत्पत्त्यादिधर्मैर्युक्तः । सचोत्पत्तिविधिर्विनियोगविधिःप्रयोगविधिरधिकारविधिश्चेतिचतुर्द्धाभवति । तत्रकर्मस्वरूपमात्रबोधकोविधिःप्रथमः यथाग्निहोत्रंजुहोतीति । अंगसंबंधबोधकोविधिर्विनियोगविधिः। यथादध्नाजुहोतीति सहितृतीयाप्रतिपन्नांगभावस्यदध्नोहोमसंबंधंविधत्तेदध्नाहोमंभावयेदितिदध्यादीनामंगत्वंनामपरोद्देश्यप्रवृत्तकृतिव्याप्यत्वंपारार्थ्यं । तच्चानेनविधिनाज्ञाप्यते । प्रयोगआशुभावबोधकोविधिःप्रयोगविधिः । सचांगवाक्यैक्यतामापन्नःप्रधानविधिरेवसांगंप्रधानमनुष्ठापयन्विलम्बेमानाभावादविलम्बापरपर्यायंप्रयोगआशुभावंविधत्तेनचाविलम्बवदाविलम्बेपिमानाभावः। विलंबेंगप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तेः । नहिविलम्बेनकृतयोःपदार्थयोःसहकृतमितिसाहित्यंव्यवहरंति । सचाविलम्बोनियतेक्रमेआश्रयमाणेभवति। अन्यथाकिमेतदनन्तरमेतत्कर्त्तव्यमेतदनन्तरंवेतिप्रयोगविक्षेपापत्तेः। अतःप्रयोगविधिरेवस्वविधेयप्रयोगआशुभावसिद्ध्यर्थंनियतंक्रममपिपदार्थविशेषणतयाविधत्ते । तत्रक्रमोनामवितातिविशेषःपौर्वापर्यरूपोवा । फलस्वाम्यबोधकोविधिरधिकारविधिः । फलस्वाम्यंचकर्मजन्यफलभोक्तृत्वं । सचयजेतस्वर्गकामइत्येवंरूपः । अनेनहिस्वर्गमुद्दिश्ययागंविदधतास्वर्गकामस्ययागजन्यफलभोक्तृत्वंबोध्यते । तच्चस्वाम्यंतस्यैव योधिकारविशेषणाविशिष्टः । अधिकारविशेषणंचतदेव यत्पुरुषविशेषणत्वेनश्रुतमतएव । राजाराजसूयेनस्वाराज्यकामोयजेतेत्यनेनस्वाराज्यमुद्दिश्यराजसूयंविदधतापिनस्वाराज्यकाममात्रस्यतत्फलभोक्तृत्वंबोध्यते । किंतुराज्ञःसतस्तत्कामस्य । किंचित्तुपुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणंभवति । यथाध्ययनविधिसिद्धाविद्या । अग्निसाध्येषुचकर्मस्वाधानसिद्धाऽग्निमत्ता । एवंसामर्थ्यस्याप्यधिकारिविशेषणत्वं । आख्यातानामर्थंब्रुवतांशक्तिःसहकारिणीतिन्यायात् । अर्थीसमर्थोविद्वान्यजेदिति असमर्थंप्रातिविध्यप्रवृत्तेश्च। एवमर्थितादेरपिबोध्यमितिदिक्। तत्सिद्धफलस्वाम्यबोधकोविधिरधिकारविधिरितितदेवंनिरूपितोविधि

भेदश्चतुर्द्धेति। चतुर्धाप्ययंपुनः प्रकारांतरेणात्रिविधः सच विधिर्वास्यादपूर्वत्वाद्वादमात्रंह्यनर्थकम् ॥ उदक्कंचापूर्वत्वाद्विधिस्तुधारणे ऽपूर्वत्वात्नियमार्थवापुनः श्रुतिरुच्यतेपरिसंख्येत्येवमादिषुभगवतोजैमिनेःसूत्रेष्वभिहितः । भट्टपादैश्चान्योन्यासंकीर्णतयासलक्षणो विशिष्टमुपपादितः । विधिरत्यंतमप्राप्तौनियमःपाक्षिकेसति ॥ तत्रचान्यत्रचाप्राप्तौपरिसंख्येतिगीयते ॥ इति। अस्यार्थः यस्ययदर्थत्वं मानांतरेणाप्राप्तंतस्यतदर्थत्वेनयोविधिःसोपूर्वविधिः। यथायजेतस्वर्गकामःव्रीहीन्प्रोक्षतीत्यादिनात्रयागस्यस्वर्गार्थतायाव्रीहीणांप्रोक्षण स्यचसंस्कारकर्मणोविधिंविनाकथमपिप्राप्तिरस्तिअतोयमपूर्वविधिः । पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलोविधिर्नियमविधिः । यथाव्री हीनवहंतीति । अत्रविध्यभावेपिपुरोडाशप्रकृतिद्रव्याणांतंडुलनिष्पत्त्याक्षेपादेवावहननाप्राप्तांशसम्भवात्तदंशपरिपूरणफलः। उभयत्रैक स्योभयोर्वैकत्रयुगपत्प्राप्तावन्यतरनिवृत्तिफलोविधिःपरिसंख्याविधिः । यथाचयनेऽश्वगर्दभरशनयोर्ग्रहणेयुगपदनुष्ठेयेसामर्थ्याविशेषा त्प्राप्तस्य । इमामगृभ्णन्रशनामृतस्येतिमन्त्रस्याश्वाभिधानीमादत्तेइतिगर्दभरशनाग्रहणव्यावृत्तिमात्रफलकोविधिः । एवंपञ्चपञ्चनखाभ क्ष्याइत्यपिपरिसंख्याविधिः। इदंहिनभक्षणपरंतस्यरागतःप्राप्तत्वात्। किंतुपञ्चेतरपञ्चनखभक्षणनिवृत्तिपरमिति। नचनियमपरिसंख्य योःफलतोनाविशेषः। यतोनियमस्यविधेयावघातनिष्ठत्वात्सन्निहितमप्राप्तांशपूरणमेवफलं नखविदलनादिनिवृत्तिस्त्वार्थिकीतिविधिपक्षे वक्तव्यं बह्वस्तितदन्यत्रानुसंधेयम् । विधेर्यथाविधेयार्थपरिच्छेदकत्वेनार्थवत्त्वंतथानर्थहेतुकर्मणःसकाशात्पुरुषस्यनिवृत्तिकरणत्वेननिषेध स्यापिपुरुषार्थानुबंधित्वंबोध्यं। तथाहि विधयोयथाप्रवर्त्तनामभिदधंतःस्वनिर्वर्त्तकत्वनिर्वाहार्थेविधेयस्ययागादेःश्रेयःसाधनत्वमाक्षिपंतः पुरुषंतत्रप्रवर्त्तयंति एवंनकलंजंभक्षयेदित्यादयोनिषेधाअपिनिवर्त्तनामभिदधंतःस्वनिवर्त्तकत्वनिर्वाहार्थंनिषेधस्यकलंजभक्षणादेरनर्थहेतु त्वमाक्षिपंतःपुरुषंततोनिवर्त्तयंतीति। किंचनिषेधस्यक्रतुवैगुण्यप्रतिपादकत्वेनहेयतयायागार्थतापिसिद्धा । अर्थवादवाक्यंहिस्वार्थप्राति पादनेप्रयोजनाभावाद्विधेयनिषिध्यमानयोःप्राशस्त्यनिंदितत्वेलक्षणयाप्रतिपादयति। तल्लक्षणंतुप्राशस्त्यनिंदान्यतरपरंवाक्यमर्थवादः। सद्विधा विधिशेषोनिषेधशेषश्चेति । तत्रवायव्यंश्वेतमालभेतभूतिकामइत्यादिविधिशेषस्यवायुर्वैक्षेपिष्ठादेवतेत्यादेर्विधेयार्थप्राशस्त्यबो



धकतयार्थवत्त्वं । बर्हिषिरजतंनदेयमित्यादिनिषेधशेषस्यसोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वमित्यादेर्निषेध्यानिंदितत्वबोधकतयार्थवत्त्वंनचप्रा शस्त्यादिबोधस्यनिःप्रयोजनत्वेननार्थवादस्यार्थवत्त्वमितिवाच्यं। आलस्यादिनाऽप्रवर्तमानस्यपुंसःप्रवृत्त्यादिजनकत्वेनतद्बोधस्योपयो गात्। सपुनस्त्रेधा। तदुक्तं विरोधेगुणवादःस्यादनुवादोवधारिते। भूतार्थवादतद्धचानादर्थवादस्त्रिधामतः॥ इति। प्रमाणांतरविरोधेसत्यर्थ वादोगुणवादः।यथादित्योयूपइतियूपेआदित्याभेदस्यप्रत्यक्षबाधितत्वादादित्यवदुज्ज्वलत्वरूपगुणोनेनलक्षणयाप्रतिपाद्यते।प्रमाणांतराव गतार्थबोधकोनुवादः । यथाग्निर्हिमस्यभेषजमित्यादि । हिमविरोधित्वस्याग्नौप्रत्यक्षावगतत्वात् । प्रमाणांतरविरोधतत्प्राप्तिरहितार्थबोध कोभूतार्थवादः । यथेंद्रोवृत्रायवज्रमुदयच्छदित्यादि । नह्यत्रप्रमाणांतरविरोधतत्प्राप्तीस्तः। एवंसर्वःकर्मकांडोविधिनिषेधांतर्गतएव। अत्रै वधर्मशास्त्रमपिगतार्थंतत्प्रतिपादकमितिबहुवक्तव्यत्वादत्रोपरम्यतेहि। उपासनाकांडेउपासनास्वरूपमाह।वस्तुस्वरूपानपेक्षंपुरुषेच्छा मात्रतंत्रंमानसंप्रवाहरूपमुपासनम् ॥ यथा यस्यैदेवतायैहविर्गृहीतंस्यात्तांध्यायेद्वषट्करिष्यन्नित्यादिरूपम्। उपासनाहिपरमेशस्यकार्या तत्रचपरमेशोऽनेकधाययथामतिदार्शनिकैःस्वीकृतस्तस्यचोपासनाकर्त्तुमशक्याऽतःसर्वाविरुद्धएवोपास्यः। सचौपनिषदाभिमतःकथंतदु पगमेसर्वाविरोधइतिचेदत्रपातंजलमतमाह। क्लेशकर्मविपाकाशयैरपरामृष्टःपुरुषविशेषईश्वरस्सोपिजीववदसंगश्चिद्रूपश्चपरश्चजीवेभ्यस्त न्नियंतृत्वात्। प्रधानक्षेत्रज्ञपतिर्गुणेशइतिश्रुतेः। ननुनियंतृत्वंनामकारयितृत्वं। तच्चासंगस्यानुपपन्नं। यःकारयतिसकरोत्येवेतिन्यायेन कर्तृत्त्वस्यदुर्वारत्वात्। दृश्यतेहियोधयितृषुनृपेषुदानादिकर्तृत्वंस्वयंयोद्धृत्वंच । लोहचुम्बकन्यायेनासंगस्यापिप्रेरकत्वोपपत्तेः। नचत न्निःप्रमाणं भिषास्माद्वातःपवतेइत्यादिश्रुतिसिद्धत्वात्। बंधमोक्षादिव्यवस्थापृथिव्यवस्थित्यनुपपत्तिसिद्धत्वाच्च । जीवानामपिस्वतःक्ले शादिराहित्येपिबुद्ध्यासहविवेकाग्रहेणक्लेशादिसत्वांगीकारात् । ईशस्तुसदातैरसंसृष्टइतिविशेषः। एतेनसेश्वरसांख्यवादोपिव्याख्यातः। एतत्तुल्ययोगक्षेमत्वात्। तार्किकास्त्वसंगस्यनियंतृत्वमसहमानानित्यबुद्धीच्छाकृतिमान्पुरुषविशेषईश्वरः। पुंविशेषत्वमप्यस्यनित्यबु द्ध्यादिगुणकत्वादेव। नान्यथानित्यज्ञानादिमत्वात्। अनित्यज्ञानादिमज्जीवेभ्यस्तद्वैलक्षण्यमपिसिद्ध्यति। क्षित्यादिसकर्तृकंकार्यत्वादि

त्यनुमानंतत्रमानं । सचलाघवादेकःसर्वत्रकार्योपलब्धेर्विभुश्च । ज्ञानादेर्निष्कर्षवदुत्कर्षोप्यंगीकार्योबाधकाभावादितिन्यायेनभ्वाद्युपादा
नसर्वसूक्ष्मदर्शित्वात्सर्वज्ञश्चसत्यकामःसत्यसंकल्पः । यःसर्वज्ञःसर्वविदित्यागमोपितत्रमानमित्याहुः । यद्यप्यकामकर्माद्यभावाज्जन्यंसु
खमीश्वरेनसंभवति । तथापिनित्यसुखांगीकारेबाधकाभावात्। आनंदंब्रह्मणोविद्वानित्यादिश्रुतेश्चनित्यसुखाश्रयत्वमपीशस्यान्यत्सर्वंस
मानमितितदेकदेशिनः। नित्यज्ञानादिमत्त्वेसदासर्गप्रसंगान्नित्यजिहीर्षावत्त्वेसदाप्रलयापत्तेश्चनैतन्मतंसाधु। अतोलिंगदेहसमष्ट्युपहितो
हिरण्यगर्भईशः। नचदेहयोगेजीवत्वंशंक्यं । तत्समनियताविद्याद्यभावेनतस्यासंभवात्। कथंतर्हिशरीरपरिग्रहः। लीलयैवेतिगृहाण। नच
तदीश्वरत्वेमानाभावः। उद्गीथब्राह्मणस्यतत्रमानत्वादितिहैरण्यगर्भाः। स्थूलदेहंविनासूक्ष्मस्यानुपलब्धेःस्थूलसमष्ट्युपहितोविराडेवेशः ।
सचसर्वतोमस्तकादिमान्सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपादित्यादिश्रुतेः । सर्वतःपाणिपादंतदित्यादिस्मृतेश्च । सदेहत्वेपिजीवत्वाभा
वादिकंपूर्ववदितिवैराजाः। विधिमुपासीनास्तुबहुपाणिपादत्वंनेशत्वप्रयोजकमन्यथाक्रमिविशेषस्यसहस्रपद्यादेरपीशत्वप्रसंगात् । तस्मा
च्छ्रुतिस्मृत्यादिसर्ववाङ्मयशरीरयासरस्वत्यासदोपासितःसत्यलोकाधिपोब्रह्मैवेशः ।यतोवेत्यादिसामान्यवाक्यान्यप्याग्नेयंचतुर्द्धाकरोती
तिविशेषवाक्येनपुरोडाशचतुर्द्धाकरणवाक्यवत्प्रजापतिःप्रजाअसृजतेत्यादिविशेषवाक्यात्तत्परतयैवनेयानि । सचरुद्रस्यललाटादाविःक
र्त्ताहरेरप्यसुरवधार्थमवतारेषुनियोजकः । क्वचित्तयोःस्तुत्यादौप्रवृत्तिस्तुलोकसंग्रहाय। साचविधेःस्वीयैवतयोःस्वांशत्वादित्याहुः । श्रीवि
ष्णुनाभ्युद्भूतपद्मोन्यन्नोहिविधिःसचैतत्क्वतिष्ठतीविचारितवान्सोपश्यत्पुष्करपर्णंतिष्ठन्सोमन्यतअस्तिचैतद्यस्मिन्निदमाधितिष्ठतीतिश्रु
तेः। ततोयदस्याधिष्ठानंतन्मेमूलमितितन्निश्चयार्थंचिरंभ्रमन्नापिनापश्यत्पश्चात्समाधावपश्यत्तदाज्ञप्ताश्चिरंतप्त्वाप्रजासृष्टौसमर्थोबभूवतत
एववेदानवाप्यसार्वज्ञ्यमापेतिसर्वमग्रेवक्ष्यति। अतोविष्णुरेवेशः । सचस्वकृतमर्यादावनायस्वेच्छयावतरति । यदायदाहिधर्मस्येत्यादि
स्मृतेः। महोपनिषद्यपिएकोहवैनारायणआसीन्नब्रह्मानेशानइत्यादिना । पुनरेवनारायणःसोन्यत्कामोमनसाध्यायततल्ललाटात्स्वेदोपत
त्ताइमाआपस्तासुतेजोहिरण्मयमंडमभवत्तत्रब्रह्माचतुर्मुखोजायतेत्यादिना । अथपुनरेवनारायणःसोन्यत्कामोमनसाध्यायततस्यललाटा

त्त्र्यक्षःशूलपाणिःपुरुषोजायतेत्यादिनाच ब्रह्मरुद्रयोस्तत्स्रष्टृत्वोपवर्णनंदृश्यतेतस्माद्विष्णुरेवेशइतिवैष्णवाःशैवास्तु ब्रह्माद्याःस्थावरांता
श्चदेवदेवस्यशूलिनः॥ पशवःपरिकीर्त्यंतेसंसारवशवर्त्तिनः। तेषांपतित्वाद्देवेशःशिवःपशुपतिःस्मृतः॥ मलमायादिभिःपाशैःसबध्नातिप
शून्पतिः॥ सएवमोचकस्तेषांभक्त्यासम्यगुपासितः॥ इत्यादिशिवधर्मे । अथर्वशिरसि योवैरुद्रःसभगवान्भूर्भुवःस्वर्यश्चब्रह्मायश्चविष्णुरि
त्यादिना तस्यसर्वात्मत्वंदर्शितं । शिवएकोध्येयःशिवंकरोन्यत्सर्वंपरित्यज्येतिश्रुतेरित्याहुः । गाणपत्यास्तु तुरीयःपरमाशिवःश्रीगणेश
एवसएववैष्णवैर्महाविष्णुरित्युच्यते। तथाचश्रुतिः । नमस्तेगणपतयेत्वमेवप्रत्यक्षंब्रह्मासीत्यादिका । अत्रविशेष्यसंबद्धत्वादन्ययोगव्यव
च्छेदेनैवकारेणपार्थएवधनुर्द्धरइत्यत्रैवकारेणपार्थादन्यत्रधनुर्द्धरस्येवगणपतेरन्यत्रसाक्षाद्ब्रह्मत्वस्ययोगोव्यवच्छिद्यते। सूर्याद्याराधनफला
रोग्यादिमोक्षांतकथनानन्तरंसर्वमिच्छेद्गणाधिपादितिस्मृतेरन्याराधनेप्रयोजनाभावात्। अनधीतेमहाभाष्येव्यर्थास्यात्पदमंजरी ॥ अ
धीतेपिमहाभाष्येव्यर्थास्यात्पदमंजरी ॥ इतिन्यायात्कृतेऽकृतेप्यन्यदेवाराधनेगणेशार्चासर्वार्थदेतिभावः। नचैतावतान्यदेवार्चननिषेधः
शंक्यः । प्रयाजादिषुकृतेषुज्योतिष्टोमादीनामप्यननुष्ठानापत्तेः । इतरोपासनाविधायकशास्त्राप्रामाण्यापत्तेश्च । सर्वमिच्छेदितिवाक्यंतु
परंपरयागणेशार्चनस्यसर्वत्रोपयोगपरंनत्वितरनिषेधपरं । तद्विधिविरोधादित्याहुः। भैरवमुपासीनास्तु शिवशंकरशंभ्वादिनामा त्रिनेत्रे
न्दुशेखरादिलिंगोविधेरपिशास्ताहरेरपिवरदःश्रीकालभैरवएववेदांतप्रतिपाद्योमुमुक्षुभिराराध्यएतत्सर्वंकूर्मपुराणेकाशीखंडेचस्फुटं। सएव
मल्लारिनाम्नापिख्यातस्तदुक्तं । ध्यायेन्मल्लारिदेवंकनकगिरिनिभंमल्लसाभूषितांकंश्वेताश्वंखड्गहस्तंविविधबुधजनैःसेव्यमानंकृतार्थैः॥ यु
क्तांघ्रिंदैत्यमूर्ध्नांडमरुविलसितंनैशचूर्णाभिरामंनित्यंभक्तेषुतुष्टंश्वगणपरिवृतंनित्यमोंकारगम्यम्॥ इत्यत्रनित्यपदेनप्रागभावाप्रतियोगित्व
विशिष्टध्वंसाप्रतियोगित्वार्थकेनतस्यनकुतश्चिदुत्पत्तिर्नवाकुत्रचलयइतिप्रतिपादनात्सर्वकारणत्वंसूचितमित्याहुः । श्रीकार्तिकेयोपासका
स्तु सर्वगतत्वाद्भक्तानांसविलासाज्ञानशोषणाच्चस्कंदपदाभिधेयः सर्वबुद्धिरूपागुहाविद्यतेआधारत्वेनास्येतिव्युत्पत्त्याशेआद्यजंतगुहपदा
भिधेयश्चसर्वांतरात्मासद्भजनीयानंतकल्याणगुणोब्रह्मादिविभूतिस्तान्नियंतापरमाशिवःसनत्कुमारोभगवान्भोगमोक्षप्रदायकः॥ इतिस्कांदो

क्तेर्मोक्षदातासुब्रह्मण्यएवेत्याहुः । सौरास्तु ब्रह्मेंद्रनारायणरुद्रवंदितःसनःसदायच्छतुमंगलंरविः ॥ इतिभविष्यवाक्यात्एषब्रह्माशिवश्चै
वरुद्रश्चैवेतिब्रह्मादिविभूतिकःसूर्यएवोपास्यःसूर्यआत्माजगतस्तस्थुषश्चेतिश्रुतेः । सूर्याद्वैखल्विमानिभूतानिजायंते । इतिश्रुतेश्चेत्याहुः ।
केचित्तुमार्कंडेयपुराणांतर्गतसप्तशतीप्रतिपाद्यामहालक्ष्मीःसर्वोत्तमाब्रह्मादयोभारत्यादयश्चतद्विभूतयःसैवसर्गादिहेतुर्बंधमोक्षादिहेतुश्चेति ।
तयाविसृज्यतेविश्वंजगदेतच्चराचरम् ॥ सैषाप्रसन्नावरदानृणांभवतिमुक्तये ॥ संसारबन्धहेतुश्चसैवसर्वेश्वरेश्वरी ॥ सृष्टिस्थितिविनाशा
नांहेतुभूतेसनातनि ॥ विष्णुःशरीरग्रहणमहमीशानएवच ॥ कारितास्तइत्यादिवचनात् । तत्रैवहंसयुक्तविमानमस्थेइत्यादिना वृत्रप्राणह
रेचैंद्रीत्यंतेनसप्तमातॄणांतद्विभूतित्वंदर्शितं । एतेषांब्रह्मादीनांतदंशत्वात्तदभिन्नत्वेन्योन्यमप्यभेदः । तदभिन्नाभिन्नस्यतदभिन्नत्वमिति
न्यायादित्याहुः । केचित्तु स्वस्वप्रीतिगोचरान्यक्षराक्षसभूतप्रेतपिशाचादीन्नृपनापितपुत्रन्यायेनायमेवसर्वोत्तमोऽयमेवसर्वोत्तमइतिमन्यंते ।
तेभ्यश्चस्वयंतत्तत्स्वाभिलषितार्थतृष्णाग्रस्तेभ्योपि । स्वशिश्नमपिचुंबंतमिक्षुदण्डमयाचती इतिन्यायेनस्वाभिलषितान्याचंते । अन्ये व
टाश्वत्थचैत्यार्कवंशादीनिस्वस्वकुलदैवतानिमत्वास्थावरयोनिप्राप्त्यातिदुःखितेभ्योपिमहिषीप्रसवोन्मुख्येमहिषोमदनातुरइतिन्यायेनेष्टं
याचंते । अंधचटकन्यायेनाकस्माल्लब्धंचार्थंतद्दत्तंमन्यंते । अघटनघटनापटीयस्यामाययोपहितंजगतामभिन्ननिमित्तोपादानंपरंब्रह्मप
रमेश्वरःतस्यांशैरिवांशैरीश्वरकोटिभिर्ब्रह्मादिभिर्जीवकोटिभिश्चसूत्रविराडादिभिर्जगद्व्याप्तमित्यौपनिषदाः । क्वचिच्छिवविष्ण्वादीनांपर
स्परमुपास्योपासकभावोभारतादिषुश्रुतः । सचलीलामात्रएवान्योन्यमभेदबोधतात्पर्यकः । नहिबह्वईश्वराःसम्भवन्ति । सत्वेचसुंदोपसुन्द
न्यायेनस्वयमेवबाधिताःसर्वेस्युरतएकएवेषपरमेशः । सचब्रह्माद्यनन्तदेवार्थनयाविष्कृतलीलाविग्रहोमाथुरमण्डलेश्रीनन्दराजवेश्मनिशेषा
वतारबलदेवसहितोरोमकूपाधिष्ठितानेकब्रह्मांडःश्रीकृष्णएवसएवश्रुतिषुपरब्रह्मपदेनोक्तः । तथाहि । कृषिर्भूवाचकःशब्दोनश्चनिर्वृत्तिवाच
कः ॥ तयोरैक्यंपरंब्रह्मकृष्णइत्यभिधीयते ॥ इतिमुनयोहवैब्रह्माणमूचुःकःपरमोदेवःकुतोमृत्युर्बिभेतिकस्यविज्ञानेनाखिलंविज्ञातंभवतिके
नेदंविश्वंसंसरतीति । तदुहोवाचब्राह्मणःश्रीकृष्णोवैपरमंदैवतंगोविंदान्मृत्युर्बिभेतीत्यादिनापूर्वतापनीयोक्तेः । कृष्णमेनमवेहित्वंस्वात्मानम



खिलात्मनाम् ॥ जगद्धितायसोप्यत्रदेहीवाभातिमायया ॥ इतिवक्ष्यति । किञ्चसर्वेषामेववस्तूनांभावार्थोभवतिस्थितः । तस्यापिभग
वान्कृष्णःकिमतद्वस्तुरूप्यताम् ॥ इत्यप्यग्रेश्रीदशमेप्रकटीभविष्यति । श्रीगीतायामपि अहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्त्तते । इतिस्वय
मेवाह । किंचअहमात्मागुडाकेशसर्वभूताशयस्थितः ॥ अहमादिश्चमध्यंचभूतानामंतएवच ॥ इत्यपि । एवं यस्मात्क्षरमतीतोहमक्षराद
पिचोत्तमः ॥ अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमः ॥ इति । किंच अहंकृत्स्नस्यजगतःप्रभवःप्रलयस्तथा ॥ मत्तःपरतरंनान्यत् किंचिद
स्तिधनंजय ॥ मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइव ॥ इति । सर्वस्यचाहंहृदिसंनिविष्टइत्यादिबहूनितस्यपरमेशत्वेमानानिसंति । यत्तुवि
ष्णुपुराणे एवंसंस्तूयमानस्तुभगवान्परमेश्वरः । उज्जहारात्मनःकेशौसितकृष्णौमहामुने ॥ उवाचचसुरानेतौमत्केशौवसुधातले ॥ अवती
र्य्यभुवोभारंक्लेशहानिंकरिष्यतः ॥ इत्युक्तं तस्यायंभावः । सुराःसमस्ताःसुरनाथकार्यमेभिर्मयायच्चतदीशसर्वम् ॥ आज्ञापयाज्ञाःपरिपा
लयंतःसदैवतिष्ठामहयपास्तदोषाः ॥ इतिसुरैरुक्तोभगवान्ममदुष्करंचेत्तदासाहाय्यंकार्यंस्यान्नत्वेवमस्तिभूभारहरणादौकर्त्रंतरापेक्षयामह
त्यपिकार्य्येमत्केशयोरपिशक्तत्वादिति । नतुकेशमात्रावतारइतिभ्रमितव्यं । ततःक्षयमशेषास्तेदैतेयाधरणीतले ॥ प्रयास्यंतिनसंदेहोम
द्दृक्पातविचूर्णिताः ॥ कृष्णाष्टम्यामहंभाद्रउत्पत्स्यामिनसंशयः ॥ इत्यादिषुतत्रैवस्वावतारत्वोक्तेर्विरोधात् । कृष्णस्तुभगवान्स्वयमितिव
क्ष्यमाणविरोधाच्च । अजरामरस्येशस्यार्द्धपलितत्वासम्भवादेककेशईशेच्छयारामस्यश्वेतरूपज्ञापनार्थं । तदेवश्वेतोभूदितिगम्यते । जयं
तिकृष्णस्यदशावताराः । इतिमुकुटेनापिश्रीकृष्णस्यावतारित्वमन्येषांनृसिंहादीनामवतारत्वंध्वनितं । यत्तुश्रीदशमेकृष्णावतारोत्सवसं
भ्रमोस्पृशदितिश्रीकृष्णेऽप्यवतारप्रयोगः सचाविर्भावपरोबोध्यः । किंचविष्णुनामान्युक्त्वावसुदेवोस्यजनकइत्यनेनामरसिंहेनापिश्री
कृष्णस्यैवविष्णुपदवाच्यब्रह्मत्वंध्वनितमिति । एतेनैवभारतवाक्यमप्येतत्तुल्यंव्याख्यातं । ब्रह्मादौमत्स्यादौचांशत्वोक्तिरौपचारिकीबो
ध्या । तच्चांशत्वंब्रह्मादिष्वाविष्कृतोत्पत्त्यादिहेतुत्रयाल्पोत्पत्त्याद्येकैकशक्तित्वमेव । नतुस्वांशित्वेनाभिमतानंतशक्तिमायिशापेक्षया ।
वस्तुतोऽल्पशक्तित्वंसंख्यातशक्तित्वेनानीशत्वापत्त्यातदनंतशक्तिबोधकानंतवाक्यानामप्रामाण्यापत्तेः । तस्मात्त्रिगुणमायोपहितएकए

वेशः । किंबहुनावाग्जालेन । श्रीकृष्णोपासनैवमोक्षहेतुः । तदुक्तंश्रीमुखेनैव । अनन्यचेताःसततंयोमांस्मरतिनित्यशः ॥ तस्याहंसुलभः
पार्थनित्ययुक्तस्ययोगिनः ॥ मामुपेत्यपुनर्जन्मदुःखालयमशाश्वतम् ॥ नाप्नुवंतिमहात्मानःसंसिद्धिंपरमांगताः ॥ आब्रह्मभुवनाल्लोकाः
पुनरावर्त्तिनोऽर्जुन ॥ मामुपेत्यतुकौन्तेयपुनर्जन्मनविद्यते ॥ इतिश्रीगीतोपनिषदाचार्येणार्जुनंप्रतीति । श्रीकृष्णोपासनेरतिस्तुपूर्वकृत
सुकृतानामेवनान्येषां । तदपितत्रैव अवजानंतिमांमूढामानुषींतनुमाश्रितम् ॥ परंभावमजानंतोममभूतमहेश्वरम् ॥ मोघाशामोघकर्मा
णोमोघज्ञानाविचेतसः ॥ राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः ॥ महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः ॥ भजंत्यनन्यमनसोज्ञा
त्वाभूतादिमव्ययम् ॥ इति । किंच नमांदुष्कृतिनोमूढाःप्रपद्यंतेनराधमाः ॥ माययापहृतज्ञानाआसुरंभावमाश्रिताः ॥ चतुर्विधाभजं
तेमांजनाःसुकृतिनोऽर्जुन ॥ आर्त्तोजिज्ञासुरर्थार्थीज्ञानीचभरतर्षभ ॥ तेषांज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यते ॥ प्रियोहिज्ञानिनोत्यर्थमहं
सचममप्रियः ॥ उदाराःसर्वएवैतेज्ञानीत्वात्मैवमेमतम् ॥ आस्थितःसहियुक्तात्मामामेवानुत्तमांगतिम् ॥ बहूनांजन्मनामंतेज्ञानवान्मांप्र
पद्यते ॥ वासुदेवःसर्वमितिसमहात्मासुदुर्लभः ॥ कामैस्तैस्तैर्हृतज्ञानाःप्रपद्यंतेऽन्यदेवताः॥तंतंनियममास्थायप्रकृत्यानियताःस्वया ॥
योयोयांयांतनुंभक्तःश्रद्धयार्चितुमिच्छति ॥ तस्यतस्याचलांश्रद्धांतामेवविदधाम्यहम् ॥ सतयाश्रद्धयायुक्तस्तस्याराधनमीहते ॥ लभ
तेचततःकामान्मयैवविहितान्हितान् ॥ अंतवत्तुफलंतेषांतद्भवत्यल्पचेतसाम्॥देवान्देवयजोयांतिमद्भक्तायांतिमामपि ॥ इतिबहुशउक्तंश्री
भगवता । वक्ष्यत्यपि दुरापाह्यल्पतपसःसेवावैकुण्ठवर्त्मसु ॥ यत्रोपगीयतेविष्णुर्देवदेवोजनार्दनः ॥ इति । किंच तपंतुतापैःप्रपतंतुपर्वता
दटंतुतीर्थानिपठंतुचागमान् ॥ यजंतुयागैर्विवदंतुवादैःकृष्णंविनानैवसृतिंतरंति ॥ इतिश्रीधराचार्येणाप्युक्तम् । दैवीह्येषागुणमयीमम
मायादुरत्यया ॥ मामेवयेप्रपद्यंतेमायामेतांतरंतिते ॥ इत्यपिश्रीमुखेनैवोक्तम् । किंच मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु ॥ मामेवै
ष्यसिसत्यंतेप्रतिजानेप्रियोसिमे ॥ इत्युपांतमन्त्रेश्रीगीतासुहरिणाप्रतिश्रुतं । किंचश्रीदशमेब्रह्माश्रीकृष्णंवक्ष्यति । श्रेयःस्रुतिंभक्तिमुदस्य
तेविभोक्लिश्यंतियेकेवलबोधलब्धये ॥ तेषामसौक्लेशलएवशिष्यतेनान्यद्यथास्थूलतुषावघातिनाम् ॥ इति । किंबहुना श्रीकृष्णभक्तिरेव



कल्याणहेतुरित्यलमतिप्रसंगेन । किंचभक्तिःसिद्धेर्गरीयसीतिकपिलोक्तेः मुक्तिंददातिकर्हिचित्स्मनभक्तियोगमितिपञ्चमोक्तेश्च मुक्तेर्भ
क्तिरधिकाऽतएवभक्तैःसामुक्तिर्नाद्रियते । नेच्छंतितेमयादत्तंकैवल्यमपुनर्भवम् ॥ इतिभगवदुक्तेः। मुक्तौतुतद्रूपताजायतेभक्तेस्तुश्रीहरिः
स्वायत्तीभवतीतिरहस्यम् । नहिवशीकृतनृपनरस्येवस्वयंनृपस्यतत्सुखमितिभावः । अथज्ञानकांडमाह । व्यावहारिकप्रातिभासिकपा
रमार्थिकभेदाज्ज्ञानंत्रिधा । घटपटादिव्यवहारोपयोगि घटोयंपटोयमित्यादिरूपमाद्यं । स्वप्नादिविषयंद्वितीयं । मोक्षोपयोगिपारमार्थि
कं । तच्चजीवब्रह्मणोरभेदरूपमस्ति । तदधिकारीतुसाधनचतुष्टयसंपन्नः प्रमाता । साधनानितुनित्यानित्यवस्तुविवेकःइहामुत्रार्थफलभोग
विरागःशमादिषट्कसम्पत्तिर्मुमुक्षुत्वंच। नित्यानित्यवस्तुविवेकस्तावत् ब्रह्मैवनित्यंवस्तुततोन्यदखिलमनित्यमितिविवेचनं।नित्यत्वंनामका
लानवच्छिन्नत्वं। तद्विपरीतत्वमनित्यत्वं। ऐहिकानांस्रक्चन्दनवनितादिविषयभोगानांकर्मजन्यतयाऽनित्यत्ववदामुष्मिकाणामप्यमृता
दिविषयभोगानामनित्यतयातेभ्योनितरांविरतिरिहामुत्रार्थफलभोगविरागइति । शमादयःशमदमोपरतितितिक्षासमाधानश्रद्धाख्याइ
ति । शमःश्रवणादिव्यतिरिक्तविषयेभ्योमनसोनिग्रहः । दमोबाह्येंद्रियाणांतद्व्यतिरिक्तविषयेभ्योनिवर्त्तनं । निवर्त्तितानांचसर्वेषांतद्व्यति
रिक्तविषयेभ्यउपरमणमुपरतिः । अथवाविहितानांकर्मणांविधिनात्यागः । तितिक्षाशीतोष्णादिद्वंद्वसहिष्णुता । निगृहीतस्यमनसःश्र
वणादौतदनुगुणविषयेचसमाधिःसमाधानं । गुरुवेदांतवाक्येषुविश्वासःश्रद्धेति । मुमुक्षुत्वंमोक्षेच्छा । मोक्षोनाम विद्यानिरस्ताविद्यात
त्कार्यब्रह्मात्मनावस्थानं तद्विषयेच्छामोक्षेच्छातद्वत्त्वंमुमुक्षुत्वमिति । अथायमधिकारीजन्ममरणादिभवाग्नितप्तःसमित्पाणिःश्रोत्रियंब्र
ह्मनिष्ठंगुरुमुपसरातिसनिजदयालुतयाध्यारोपापवादाभ्यामुपदिशति । अध्यारोपोनामवस्तुन्यवस्त्वारोपः । वस्तुसच्चिदानंदंब्रह्मतद्भिन्न
मज्ञानादिसकलजडमवस्तु । अज्ञानंनामसदसद्भ्यामनिर्वचनीयंत्रिगुणात्मकंज्ञानविरोधिभावरूपंयत्किञ्चिदिति । इदमज्ञानंसमष्टिव्यष्टि
रूपेणैकमनेकमितिचव्यवह्रियते । व्यष्टिर्विशेषः । समष्टिःसामान्यं । यथावृक्षाणांसमष्ट्यभिप्रायेणवनमित्येकत्वव्यपदेशः । यथाचजला
नांसमष्ट्यभिप्रायेणजलाशयइतिव्यपदेशः । तथानानात्वेनप्रतीयमानानांजीवगताज्ञानानांसमष्ट्यभिप्रायेणतदेकत्वव्यपदेशः । अजा

मेकांलोहितशुक्लकृष्णामित्यादिश्रुतेः । इयंसमष्टिरुत्कृष्टोपाधितयाशुद्धसत्वप्रधाना । एतदुपहितंचैतन्यंसर्वज्ञत्वादिगुणाश्रयंसदव्यक्तमं
तर्यामीश्वरइत्यादिशब्दैर्व्यपदिश्यते । सर्वाज्ञानावभासकत्वात् । अज्ञानस्येयंसमष्टिरखिलकारणत्वात्कारणशरीरमानन्दप्रचुरत्वात्को
शवदाच्छादकत्वाच्च । आनन्दमयःकोशःसर्वोपरमत्वात्सुषुप्तिरतएवस्थूलसूक्ष्मप्रपञ्चलयस्थानमितिचोच्यते । यथावनस्यव्यष्ट्यभिप्राये
णवृक्षाइत्यनेकत्वव्यपदेशः । यथावाजलाशयस्यव्यष्ट्यभिप्रायेणजलानीतितदनेकत्वव्यपदेशः । तथाज्ञानस्यव्यष्ट्यभिप्रायेणतदनेक
त्वव्यपदेशः । इन्द्रोमायाभिःपुरुरूपईयतइत्यादिश्रुतेः । इयंव्यष्टिर्निकृष्टोपाधितयामलिनसत्वप्रधाना । एतदुपहितंचैतन्यमल्पज्ञ
त्वादिगुणात्मकंप्राज्ञइत्युच्यते । एकाज्ञानावभासकत्वादिति । अस्यापीयमहंकारादिकारणत्वात्कारणशरीरमानंदप्रचुरत्वादानन्दम
यःकोशःसुषुप्तिस्सर्वोपरमस्थानत्वात्स्थूलसूक्ष्मशरीरलयस्थानमितिचोच्यते । तदानीमेतावीश्वरप्राज्ञौचैतन्येद्धाभिरतिसूक्ष्माभिरज्ञानवृ
त्तिभिरानंदमनुभवतः । अनयोर्व्यष्टिसमष्ट्योर्वनवृक्षयोरिवजलाशयजलयोरिवाभेदः । एतदुपहितयोरीश्वरप्राज्ञयोरपिवनवृक्षावच्छि
न्नाकाशयोरिवजलाशयजलगतप्रतिबिंबाकाशयोरिवाभेदः । वनवृक्षतदवच्छिन्नाकाशयोर्जलाशयजलगतप्रतिबिंबाकाशयोर्वाधारानु
पहिताकाशवदनयोरज्ञानतदुपहितचैतन्ययोराधारभूतंयदनुपहितंचैतन्यंतत्तुरीयमित्युच्यते । इदमेवतुरीयंशुद्धचैतन्यमज्ञानादितदुप
हितचैतन्याभ्यामविविक्तसन्महावाक्यस्यवाच्यंविविक्तंसल्लक्ष्यमितिचोच्यते । अस्याज्ञानस्यावरणविक्षेपनामकंशक्तिद्वयमस्ति । य
थाल्पोपिमेघोनेकयोजनमायतंसूर्यमंडलंद्रष्टृनेत्रपथापिधायकतयावृणोतितथावरणशक्तिःपरिच्छिन्नाप्यपरिच्छिन्नमात्मानमवलोकयितृबु
द्धिपथापिधायकतयावृणोति । आवरणशक्त्यावच्छिन्नात्मनःकर्तृत्वभोक्तृत्वादिसंसारभावनाभवति । यथास्वाज्ञानावृतरज्जौसर्पत्व
भावना । विक्षेपशक्तिस्तु यथारज्ज्वज्ञानंस्वावृतरज्जौस्वशक्त्यासर्पादिकमुद्भावयातिएवमज्ञानमपिस्वावृतात्मनिविक्षेपशक्त्याकाशादि
प्रपञ्चमुद्भावयाति । शक्तिद्वयवदज्ञानोपहितंचैतन्यंस्वप्रधानतयानिमित्तंस्वोपाधिप्रधानतयोपादानंचभवति । यथालूतातंतुकार्यंप्रतिस्व

१ जीवोमर्कटीतियावत् ।



प्रधानतयानिमित्तं स्वशरीरप्रधानतयोपादानञ्च । यथोर्णनाभिःसृजतेगृह्णीतेचयथापृथिव्यामोषधयःसंभवंति ॥ तथासतःपुरुषात्केशलो
मानितथाक्षरात्संभवतिविश्वम् ॥ इतिश्रुतेः । तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापोद्भ्यः
पृथिवीचोत्पद्यते । आकाशादिषुजाड्याधिक्यात्तमःप्राधान्यंतत्कारणस्येति । तदानींतेष्वाकाशादिषु[1]कारणगुणप्रक्रमेणसत्वरजस्तमांस्यु
त्पद्यन्ते । एतान्येवसूक्ष्मभूतानितन्मात्राण्यपंचीकृतानिचेत्युच्यंते । एतेभ्यःपंचीकृतेभ्यःसूक्ष्मशरीराणिस्थूलभूतानिचोत्पद्यंते । सूक्ष्म
शरीराणिसप्तदशावयवकानिलिंगशरीराणि । तेचावयवाज्ञानेन्द्रियपंचकं बुद्धिमनसी कर्मेंद्रियपञ्चकं प्राणादिपञ्चवायवः । ज्ञानेंद्रियाणि
श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि एतानिपुनराकाशादीनांसात्विकांशेभ्योव्यस्तेभ्यःपृथक्पृथक्क्रमेणोत्पद्यंते । बुद्धिर्नामनिश्चयात्मि
कांतःकरणवृत्तिः । मनोनामसंकल्पविकल्पात्मिकांतःकरणवृत्तिरिति । अनयोरेवचित्ताहंकारयोरंतर्भावः । एतेपुनराकाशादिसात्विकां
शेभ्यउत्पद्यंते । एषांप्रकाशात्मकत्वात्सात्विकांशकार्यत्वम् । इयंबुद्धिर्ज्ञानेंद्रियैःसहिताविज्ञानमयःकोशः । अयमेवकर्तृत्वाद्यभिमानित्वे
नेहलोकपरलोकगामीव्यावहारिकेजीवइत्युच्यते । मनस्तुकर्मेंद्रियैःसहितंमनोमयःकोशोस्ति । कर्मेंद्रियाणिवाक्पाणिपादपायूपस्थानि ।
एतानिपुनराकाशादीनांरजोंशेभ्योव्यस्तेभ्यःपृथक्पृथक्क्रमेणोत्पद्यंते । वायवस्तु प्राणापानव्यानोदानसमानाः । प्राणोनासाग्रवर्तीप्रा
ग्गामी । अपानस्त्वधोगामीपाय्वादिवर्त्ती । व्यानोऽखिलशरीरसंचारी । उदानःकण्ठव्याप्यूर्ध्वगामी । समानोऽशितपीतादिसमीकरण
करः । केचित्तुनागकूर्मकृकलदेवदत्तधनंजयाख्याअन्येपिपञ्चवायवःसंतीत्याहुः । कूर्मउन्मीलनकरोनागउद्गिरणप्रदः ॥ कृकलःक्षुत्करोजृं
भाकरःस्याद्देवदत्तकः ॥ धनंजयःपोषकरोयोमृतंनजहात्यपि ॥ इति । इदंप्राणादिपंचकंकर्मेंद्रियैःसहितंसत्प्राणमयःकोशः । प्राणादेःक्रि
यात्मकत्वेनरजोंशकार्यत्वम् । एतेषुकोशेषुविज्ञानमयःकर्तृरूपः मनोमयःकरणरूपः प्राणमयःकार्यरूपः एतत्कोशत्रयंमिलितंसत्सू
क्ष्मशरीरमित्युच्यते । अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतयावनवज्जलाशयवद्वासमष्टिः । अनेकबुद्धिविषयतयावृक्षवज्जलवद्वाव्य

१ अव्याकृतगुणानांप्रक्रमणे ।

ष्टिरितिचभवति । एतत्समष्ट्युपहितंचैतन्यंसूत्रात्माहिरण्यगर्भःप्राणइतिचोच्यते । सर्वत्रानुस्यूतत्वात् ज्ञानक्रियाशक्तिमदपंचीकृतपंचम
हाभूताभिमानित्वाच्चतदुपहितत्वाच्च । अस्यैषासमष्टिः । स्थूलप्रपंचापेक्षयासूक्ष्मत्वात् । सूक्ष्मशरीरंविज्ञानमयादिकोशत्रयंजाग्रद्वासनाम
यत्वात्स्वप्नोतएवस्थूलप्रपञ्चलयस्थानमितिचोच्यते । एतद्व्यष्ट्युपहितंचैतन्यंतेजसोभवति । तेजोमयांतःकरणोपहितत्वात् । अस्या
पीयंव्यष्टिःस्थूलशरीरापेक्षयासूक्ष्मत्वात्सूक्ष्मशरीरंविज्ञानमयादिकोशत्रयंजाग्रद्वासनामयत्वात्स्वप्नःस्थूलशरीरलयस्थानमितिचोच्यते ।
तदानींसूत्रतैजसौमनोवृत्तिभिःसूक्ष्मविषयाननुभवतः । अत्रापिसमष्टिव्यष्ट्योस्तदुपहितयोःसूत्रात्मतैजसयोश्चवनवृक्षवत्तदवच्छिन्नाका
शवद्वाजलाशयजलवत्तद्गतप्रतिबिंबाकाशवच्चाभेदएव । एवंसूक्ष्मशरीरोत्पत्तिरिति । स्थूलभूतानिपञ्चीकृतानि । पञ्चीकरणंत्वाकाशा
दिषुपंचस्वेकैकंद्विधासमंविभज्यतेषुदशसुप्राथमिकान्पंचभागान्प्रत्येकंचतुर्द्धासमंविभज्यतेषांचतुर्णांस्वस्वद्वितीयभागपरित्यागेनभागांत
रेषुसंयोजनमिति । केचित्त्रिवृत्करणमप्याहुः । तदानीमाकाशेशब्दोभिव्यज्यते । वायौशब्दस्पर्शौ । अग्नौशब्दस्पर्शरूपाणि । अप्सु
शब्दस्पर्शरूपरसाः । पृथिव्यांशब्दस्पर्शरूपरसगंधाइति । एतेभ्यःपंचीकृतभूतेभ्योभूर्भुवःस्वर्महोजनस्तपस्सत्यमित्येतन्नामकानामुप
र्युपरिविद्यमानानामतलवितलसुतलतलातलरसातलमहातलपातालनामकानामधोधोविद्यमानानांलोकानांब्रह्मांडस्यतदंतर्गतानांचतु
र्विधस्थूलशरीराणामन्नपानादीनांचोत्पत्तिर्भवति । शरीराणिजरायुजांडजस्वेदजोद्भिज्जाख्यानि । जरायुजानिमनुष्यपश्वादीनि । अं
डजानिपक्षिपन्नगादीनि । स्वेदजानियूकामशकादीनि । उद्भिज्जानितृणवृक्षादीनि । अत्रापिचतुर्विधस्थूलशरीरमेकानेकबुद्धिविषयत
यावनवज्जलाशयवत्समष्टिर्वृक्षवद्वनवद्व्यष्टिश्चभवति । एतत्समष्ट्युपहितंचैतन्यंवैश्वानरोविराडितिचोच्यते । सर्वनराभिमानित्वाद्विवि
धंराजमानत्वाद्वा । अस्यैषासमष्टिःस्थूलशरीरमन्नविकारत्वादन्नमयःकोशः । स्थूलभोगायतनत्वाज्जाग्रदितिचोच्यते । एतद्व्यष्ट्युपहि
तंचैतन्यंविश्वइत्युच्यते । सूक्ष्मशरीरमपरित्यज्यस्थूलशरीरादिप्रविष्टत्वात् । अस्याप्येषास्थूलशरीरमन्नविकारत्वादन्नमयःकोशःस्थूल
भोगायतनत्वाच्चजाग्रदित्युच्यते । तदानीमेतौविश्ववैश्वानरौदिग्वातार्कप्रचेतोभिःक्रमान्नियंत्रितेनश्रोत्रादींद्रियपंचकेनक्रमाच्छब्दस्पर्श
रूपरसगन्धानिंद्रोपेन्द्रयमप्रजापतिभिःक्रमान्नियंत्रितेनवागादींद्रियपंचकेनक्रमाद्वचनादानगमनविसर्गानन्दांश्च चन्द्रचतुर्मुखशंकराच्यु
तैःक्रमान्नियंत्रितेनमनोबुद्ध्यहंकारचित्ताख्येनांतरिंद्रियचतुष्केणक्रमात्संकल्पविकल्पनिश्चयाहंकार्यचैत्त्यांश्च सर्वानेतान्स्थूलविषयाननु
भवतः । अत्राप्यनयोःस्थूलसमष्टिव्यष्ट्योस्तदुपहितयोर्विश्ववैश्वानरयोश्चवनवृक्षवत्तदवच्छिन्नाकाशवच्चजलजलाशयवत्तद्गतप्रतिबिं
बाकाशवच्चवापूर्ववदभेदएव । एवंपंचीकृतस्थूलभूतेभ्यःस्थूलप्रपंचोत्पत्तिरिति । एषास्थूलसूक्ष्मकारणशरीरप्रपंचानामपिसमष्टिरेकोमहा
प्रपंचः । यथावांतरवनानांसमष्टिरेकंमहद्वनंयथाचावांतरजलाशयानांसमष्टिरेकोमहान्जलाशयःएतदुपहितंविश्ववैश्वानरादीश्वरपर्यंतं
चैतन्यमवांतरवनावच्छिन्नाकाशवदवांतरजलाशयतद्गतप्रतिबिंबाकाशवच्चैकमेव।आभ्यांमहाप्रपञ्चतदुपहितचैतन्याभ्यांतप्तायःपिंडवद
विविक्तंसदनुपहितचैतन्यं सर्वंखल्विदंब्रह्मेतिवाक्यस्यवाच्यंसल्लक्ष्यमिति । एवंवस्तुन्यवस्त्वारोपोऽध्यारोपःसामान्येनप्रदर्शितः।इदानीं
प्रत्यगात्मनिविशेषतस्तमाह । अतिप्राकृतस्तु आत्मावैपुत्रनामासीदितिश्रुतेः स्वस्मिन्निवस्वपुत्रेपिप्रियत्वदर्शनात्पुत्रेपुष्टेनष्टेचाहमे
वपुष्टोनष्टश्चेत्यनुभवाच्चपुत्रआत्मेत्याह।चार्वाकस्तु सवाएषपुरुषोन्नरसमयइत्यादिश्रुतेः प्रदीप्तगृहात्स्वपुत्रंपरित्यज्यापिस्वस्यनिर्गमदर्श
नात्स्थूलोहंकृशोहमित्यनुभवाच्चस्थूलशरीरमात्मेत्याह।अपरश्चार्वाकस्तुतेहप्राणाःप्रजापतिमेत्यब्रूयुरित्यादिश्रुतेरिंद्रियाणामभावेशरीरच
लनाभावात्काणोहंबधिरोहमित्याद्यनुभवाच्चेंद्रिण्यात्मेतिवदति । अपरश्चार्वाकोन्योंतरात्माप्राणमयइत्यादिश्रुतेःप्राणाभावेइंद्रियादिचल
नायोगादहमशनायावानहंपिपासावानित्याद्यनुभवाच्चप्राणआत्मेत्याह। अन्यश्चार्वाकस्तु अन्योंतरआत्मामनोमयइतिश्रुतेर्मनसिसुप्तेप्रा
णादेरभावादहंसंकल्पविकल्पवानित्याद्यनुभवाच्चमनआत्मेत्याह। बौद्धस्तुअन्योंतरआत्माविज्ञानमयइत्यादिश्रुतेःकर्तुरभावेकरणस्यशक्ते
रभावादहंकर्ताहंभोक्तेत्यनुभवाच्चबुद्धिरात्मेत्याह।प्रभाकरतार्किकौतुअन्योंतरआत्माआनंदमयइतिश्रुतेर्बुद्ध्यादीनामज्ञानेलयदर्शनादहम
ज्ञोहंज्ञानीत्यनुभवाच्चाज्ञानमात्मेतिवदतः । भाट्टस्तुप्रज्ञानघनएवानंदमयइतिश्रुतेःसुषुप्तौप्रकाशाप्रकाशसद्भावात्मामहंनजानामीत्यनुभ

१ तदधिकरणंद्रव्यरूपं ।

वाच्चाज्ञानोपहितचैतन्यमात्मेतिवदति। अपरोबौद्धोऽसदेवेदमग्रआसीदित्यादिश्रुतेःसुषुप्तौसर्वाभावादहंसुषुप्तौनासमित्युत्थितस्यस्वभाव
परामर्शविषयानुभवाच्चशून्यमात्मेतिवदति।एतेषांपुत्रादीनांशून्यपर्यंतानामनात्मत्वमुच्यतेएतैरितिप्राकृतादिवादिभिरुक्तेषुश्रुतियुक्त्यनु
भवाभासेषुपूर्वपूर्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैर्बाधदर्शनात्पुत्रादीनामनात्मत्वंस्पष्टमेव । किंचप्रत्यगस्थू
लोऽचक्षुरप्राणोऽमनाअकर्त्ताचैतन्यंचिन्मात्रंसदित्यादिप्रबलश्रुतिविरोधात् । अस्यपुत्रादिशून्यपर्यंतस्यजडस्यचैतन्यभास्यत्वेनघटा
दिवदनित्यत्वादहंब्रह्मेतिविद्वदनुभवप्राबल्याच्च तत्तच्छ्रुतियुक्त्यनुभवाभासानांबाधितत्वात्पुत्रादिशून्यपर्यंतमखिलमनात्मैव । अतस्त
त्तद्भासकंनित्यशुद्धबुद्धमुक्तसत्यस्वभावप्रत्यक्चैतन्यमेवात्मतत्त्वमितिविद्वदनुभवएवमध्यारोपइति ॥ अथापवादमाह ॥ अपवादो
नामअतात्त्विकोऽन्यथाभावोविवृत्तिःयथारज्जुविवर्तस्यसर्पस्यरज्जुमात्रत्ववद्वस्तुविवर्तस्यावस्तुनोऽज्ञानादिप्रपंचस्यवस्तुमात्रत्वमिति।
कार्यस्यकारणमात्रावशेषणंकारणस्वरूपव्यतिरेकेणकार्यस्यासत्तावधारणंवापवादइतियावत् । तथाहि एतद्भोगायतनंचतुर्विधंसक
लशरीरजातंभोग्यरूपान्नादिकमेतदाश्रयभूरादिचतुर्दशभुवनान्येतदाश्रयभूतंब्रह्माण्डश्चैतत्सर्वमेतेषांकारणभूतंपंचीकृतभूतमात्रंभवति ।
एतानिशब्दादिविषयसहितानिपंचीकृतभूतानिसूक्ष्मशरीरजातंचैतत्सर्वमेतेषांकारणरूपापञ्चीकृतभूतमात्रंभवति । एतानिसत्वादिगुण
सहितान्यपंचीकृतान्युत्पत्तिव्युत्क्रमेणैवैतत्कारणभूताज्ञानोपहितचैतन्यमात्रंभवति । एतदपितत्सर्वमज्ञानमज्ञानोपहितंचैतन्यंचेश्वरा
दिकमेतदाधारभूतानुपहितचैतन्यतुरीयब्रह्ममात्रंभवति । आभ्यामध्यारोपापवादाभ्यांतत्त्वंपदार्थशोधनमपिसिद्धंभवति । तथाहि
अज्ञानादिसमष्टिरेतदुपहितंसर्वज्ञत्वादिविशिष्टंचैतन्यमेतदनुपहितचैतन्यञ्चैतत्त्रयंतप्तायःपिण्डवदेकत्वेनावभासमानंतत्पदवाच्यार्थोभव
ति। एतदुपाध्युपहिताधारभूतमनुपहितचैतन्यंतत्पदलक्ष्यार्थोभवति । अज्ञानादिव्यष्टिरेतदुपहिताल्पज्ञत्वादिविशिष्टचैतन्यमेतदनुप
हितंचैतन्यंचैतत्त्रयंतप्तायःपिण्डवदेकत्वेनावभासमानंत्वंपदवाच्यार्थोभवति। एतदुपाध्युपहिताधारभूतमनुपहितंप्रत्यगानंदंतुरीयंचैतन्यं
त्वंपदलक्ष्यार्थोभवति । अथमहावाक्यार्थः। इदंतत्त्वमसीतिवाक्यंसंबंधत्रयेणाखंडार्थबोधकंभवति। संसर्गानवगाहियथार्थज्ञानजनकत्व

॥ ३७ ॥

मखंडत्वम् । तदुक्तंसामानाधिकरण्यचंविशेषणविशेष्यतः । लक्ष्यलक्षणसंबंधःपदार्थप्रत्यगात्मनाम् ॥ इतिभिन्नप्रवृत्तिनिमित्तयोः
शब्दयोरेकस्मिन्नर्थेप्रवृत्तिःसामानाधिकरण्यम् । यथासोयंदेवदत्तइतिवाक्येतत्कालविशिष्टदेवदत्तवाचकसशब्दस्यएतत्कालविशिष्टदेवद
त्तवाचकायंशब्दस्यचैकस्मिन्पिंडेतात्पर्यसंबंधः । तथातत्त्वमसीतिवाक्येपरोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वादिविशिष्ट
चैतन्यवाचकत्वंपदस्यचैकस्मिंश्चैतन्येतात्पर्यसंबंधः। विशेषणविशेष्यभावसंबंधस्तुयथातत्रैववाक्येसशब्दार्थतत्कालविशिष्टदेवदत्तस्यायं
शब्दार्थैतत्कालविशिष्टदेवदत्तस्यचान्योन्यभेदव्यावर्त्तकतयाविशेषणविशेष्यभावः।तथातत्त्वमसीतिवाक्येपितत्पदार्थपरोक्षत्वादिविशिष्ट
चैतन्यस्यत्वंपदार्थापरोक्षत्वादिविशिष्टचैतन्यस्यचान्योन्यभेदव्यावर्तकतयाविशेषणविशेष्यभावः।व्यावर्त्तकंविशेषणंव्यावर्त्यंविशेष्यं।त
थाचसोयंदेवदत्तइतिवाक्येएवायंशब्दवाच्योयोसावेतत्कालैतद्देशसंबंधविशिष्टोदेवदत्तपिंडःअयंसइतितच्छब्दवाच्यात्तत्कालतद्देशसंबंध
विशिष्टाद्देवदत्तपिंडाद्भिन्नोनेतियदाप्रतीयतेतदातच्छब्दार्थस्यायंशब्दवाच्यार्थनिष्ठभेदव्यावर्त्तकतयाविशेषणत्वं । अयंशब्दार्थस्यव्याव
र्त्यत्वाद्विशेष्यत्वं । यदाचसइतितच्छब्दवाच्यस्तत्कालतद्देशविशिष्टोदेवदत्तपिण्डःसअयमितीदंशब्दवाच्यादेतत्कालैतद्देशसंबंधविशि
ष्टाद्देवदत्तपिंडान्नभिद्यतेइतियदाप्रतीयतेतदायंशब्दवाच्यस्यतच्छब्दार्थनिष्ठभेदव्यावर्त्तकतयाविशेषणत्वं । तच्छब्दार्थस्यव्यावर्त्यत्वा
द्विशेष्यत्वं।अयमेवससएवायमित्यन्योन्यभेदव्यावर्तकतयासोयंशब्दार्थयोःपरस्परंविशेषणविशेष्यभावइत्यर्थः।लक्ष्यलक्षणभावसंबंधस्तु
यथातत्रैववाक्येसशब्दायंशब्दयोस्तदर्थयोर्वापरस्परविरुद्धतत्कालैतत्कालविशिष्टत्वपरित्यागेनाविरुद्धदेवदत्तेनसहलक्ष्यलक्षणभावः ।
तथात्रापितत्त्वंपदयोस्तदर्थयोर्वाविरुद्धपरोक्षत्वादिविशिष्टत्वापरोक्षत्वादिविशिष्टत्वपरित्यागेनाविरुद्धचैतन्येनसहलक्ष्यलक्षणभावःइयमे
वजहदजहल्लक्षणापरपर्यायःएकांशपरित्यागेनैकांशस्यग्रहणाद्भागत्यागलक्षणेत्युच्यते। असाधारणधर्मप्रतिपादकंवाक्यंलक्षणं। तत्प्रतिपा
द्यमविशिष्टवस्तुलक्ष्यमितिविवेकः। एवमन्येषामपिमहावाक्यानामर्थोग्रंथांतरादवसेयः। एतेनाभेदज्ञानमेवज्ञानकांडप्रयोजनमितिसिद्धं।
तज्ज्ञानंमोक्षहेतुः । इहचश्रुतिस्मृत्यादिरूपाणिबहूनिमानानिसंति।ननुजगज्जीवादेर्ब्रह्मणोभेदोस्तिनवा। आद्येब्रह्मणोऽसत्त्वाजाडचदुः

स्वरूपत्वंबलादायातं।द्वितीयेकथमैक्यमिति।किंचाभेदेमानमस्तिनवा । आद्येघटरूपस्यचाक्षुषत्वेघटस्येवजगज्जीवब्रह्मनिष्ठाभेदस्यप्रमाणविषयत्वेजीवब्रह्मणोरपिप्रमाणविषयत्वावश्यंभावेनजाड्यंतदवस्थमेव । प्रमाणेनाभेदाविषयीकरणेप्रमाणसत्त्वांगीकरणेमेवनास्तिचेत् शशशृंगवदसत्त्वापातइतिचेन्न । यदिमानेनैववस्तुसिद्धिरितितेमतं तर्हिमानेमानमस्तिनवा । आद्येततोभिन्नमभिन्नंवा । द्वितीयेमानंविषयीकरोतिनवा । आद्येत्वात्माश्रयःस्वसिद्धौस्वस्यापेक्षणमात्माश्रयः । द्वितीयेतद्दूरीकरणस्यकैमर्थ्यं । ततोभिन्नमितिपक्षश्चेत्तत्रापिमानसत्त्वात्सत्त्वविकल्पेपूर्ववदात्माश्रयोऽनवस्थाच । इतरेतरसाधकत्वेत्वन्योन्याश्रयः । किंचमानस्यमानविषयत्वेप्रमेयत्वापत्त्यामानत्वमेवव्यालुप्येत । मानेमानंनास्तीतिपक्षेमानरहितस्यशशशृंगतुल्यतायास्त्वयैवाभ्युपगतत्वान्मानस्यैवशून्यता। किंचसतिप्रमेयेप्रमाणंप्रवर्ततेअसतिवा । आद्येनप्रमाणप्रयोजनंपश्यामः।तत्प्रवृत्तेःप्रागेवप्रमेयस्यस्वतःसिद्धत्वात् ।अंत्येपिनप्रमाणप्रयोजनंनहिप्रमाणमसत्सत्कर्तुमलं । अन्यथावंध्यातनुजमपिप्रकटयेत् । किंचप्रमाणंस्वयंप्रमेयंभवतिनवा । आद्येतस्यघटादिसद्दक्षतयानप्रमाकरणत्वं । द्वितीयेतुसप्तमरसवदवाच्यतैव । अभिधेयत्वप्रमेयत्वयोःसाहचर्यनियमात् । तस्माज्जडेएवप्रमाणापेक्षानस्वयंप्रकाशे। तन्निष्ठेधर्मेवाप्रमाणमवश्यमपेक्षणीयं । वस्तुतस्तुश्रुतिरूपंप्रमाणंतुतत्रास्त्येव । ननुश्रुतिःसच्चिदानंदंविषयीकरोतिनवा । अंत्येकिंतदंगीकारेण । आद्येप्रमेयत्वेनजडत्वंतत्सहचरितत्वेनाभिधेयत्वेनवाग्विषयत्वं । यतोवाचोनिवर्तंतइतिश्रुतिबाधश्चस्यादितिचेन्न । श्रुतिरपियथाकथंचिदविषयतयैवलक्षणवृत्त्याज्ञापयतिनाभिधावृत्त्या । तथाप्रवृत्तौश्रुतेरेवाप्रमाणतास्यादितिनकोपिदोषः । तदुक्तंपुष्पदन्तेन । अतीतःपंथानंतवचमहिमावाङ्मनसयोरतद्व्यावृत्त्यायंचकितमभिधत्तेश्रुतिरपि ॥ इति । ननुनप्रमाणमुत्पादकंब्रूमः किंतुसाधकमितिचेच्चिरंजीव । अस्मदिष्टस्यैवत्वयाकथनात्।साधकमपिप्रमाणंस्वतःसिद्धिहीनंजडंसाधयतु नतुस्वयंप्रकाशंपरमात्मानं।तस्यस्वतःसिद्धत्वात् । तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभाति ॥ इतिश्रुत्यासर्वस्यसिद्धेस्तदधीनत्वनिरूपणात् । कथंतर्हिलक्षणयापिश्रुतिविषयत्वमितिचेदज्ञानावृतस्यैवानावृतेतुनश्रुतिरपिप्रवर्त्ततेइतिरहस्यम् । ननुपारमार्थिकभेदएवास्थीयतांकिमनयाक्लिष्टकल्पनया । अन्यथासेव्यसेवकभावोजीवानांपरस्परंभेदेगुरुशिष्यबद्धमुक्तसुखदुःखजन्मव्यवस्थाचनस्यात् । तथासतिद्वयोरपिजाड्यापत्त्यानात्मत्वानित्यत्वादिदोषप्रसंगात् । तथाहिजीवोजडोब्रह्मभिन्नत्वात् । घटादिवत् । ब्रह्मभिन्नत्वजडत्वयोर्व्याप्तेःसंप्रतिपन्नत्वात् । एवंब्रह्मापिजडंजीवभिन्नत्वात्पाषाणादिवत् । तथाचजडत्वपरिच्छिन्नत्वानात्मत्वानित्यत्वादयोदोषाननिवारयितुंशक्याः । नचपरमाण्वाकाशादौव्यभिचारइतिवाच्यं।परमाणूनामप्रामाणिकत्वेनानभ्युपगमादाकाशादेश्चास्मन्मतेजन्यत्वेनानित्यत्वान्नक्वापिव्यभिचारः। तथात्वेचकस्यज्ञानेनाविद्यातत्कार्यबाधःकोवाश्रवणाद्यनुष्ठातास्यात्।तथाहिजडस्यब्राह्मणोविज्ञानमानंदंब्रह्मेतिश्रुत्युक्तज्ञानरूपत्वाभावेनव्यापकज्ञानाविषयत्वानुपपत्तेः।अज्ञानविषयत्वेनाज्ञातस्यैवचज्ञानविषयत्वनियमात्ज्ञानगोचरतापिन ।तथाजीवस्यापिजडत्वादज्ञानाश्रयावच्छिन्नचैतन्यतानसंभवति।जडेस्वतएवाप्रकाशेतत्राज्ञानकृत्यभावात्।नचजडमेवाज्ञानमाश्रयतुविषयीकरोतुवाघटादिषुदृष्टत्वादितिवाच्यं।घटादिनिष्ठाज्ञानस्य घटाद्यवच्छिन्नचैतन्यविषयत्वांगीकारेणतत्रापिघटादिविषयत्वानुपपत्तेर्नक्वचिज्जडाश्रयत्वमज्ञानस्यसंभवाति ।एतदभिप्रायेणोक्तंसर्वज्ञसूक्तैः।आश्रयत्वविषयत्वभागिनीनिर्विभागचितिरेवकेवला। पूर्वसिद्धतमसोहिपश्चिमोनाश्रयोभवतिनैवगोचरः ॥इति।तथाचजडयोर्जीवब्रह्मणोरज्ञानाश्रयत्वविषयत्वाभावेकस्यज्ञानेनमोक्षः कस्यवासाधनानुष्ठायित्वं। किंचजातेपितत्त्वज्ञानेद्वयोरपिजडतयाबाधावश्यंभावेनशून्यवादप्रसंगः।ततोनजीवब्रह्मणोर्वास्तवोभेदः। नापिजीवानांपरस्परभेदः।पूर्ववज्जाड्यापत्त्यादोषस्यतादवस्थ्यात्।नचव्यवहारसंकरः। कुंभाद्यनुगतरविशशिनभसांप्रातीतिकभेदवदाविद्यकांतःकरणभेदवशाज्जीवानामपितादृशभेदाभ्युपगमात्। तेनव्यवहारेसिद्धेकिंपरमार्थभेदाभ्युपगमेन । नचपारमार्थिकभेदंविनाव्यवहारसिद्धिरितिवाच्यं । स्वप्नादौतंविनापिनिखिलव्यवहारदर्शनात् । प्रत्युतभेदेवस्तुत्वे एकमेवाद्वितीयंब्रह्मअजोह्येकःक्षेत्रज्ञंचापिमांविद्धीत्याद्यभेदपरश्रुतिस्मृतिवाक्यानामप्रामाण्यमनिर्मोक्षप्रसंगस्तदर्थश्रवणाद्यनुष्ठानवैयर्थ्यंचस्यादतोऽभेदएवन्याय्योनभेदइति।तथाचसर्वाभिन्नात्मज्ञानंश्रवणादिभिः स्यात् श्रवणादीनांश्रुतिविहितत्वात्तद्विधायकांश्रुतिमाह।आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यः॥इति। अत्राग्निहोत्रंजुहोतियवागूःपचतीतिवत्पाठक्रमादर्थक्रमोबलीयानितिध्येयोन्यथाद्रष्टव्यपदस्यांतेपा

ठःस्यादिति । श्रवणंनामन्यायैर्निर्णीततात्पर्यकश्रुत्यादिभिरात्मनिर्णयः।ततोप्युक्तवादिदुस्तर्कजालैरसंभावनाविपरितिभावनोत्पत्तेस्तान्नि
वारकन्यायानुसन्धानंमननम् । ततश्चव्यासंगत्यागेनदेहातिरिक्तात्माकारमनोनुसंधानंनिदिध्यासनम् । ततोयथाभूतदेहाद्यातिरिक्तात्म
साक्षात्कारस्तत्त्वज्ञानात्मकोजायतेयःसमूलंमिथ्याज्ञानमुन्मूलयति । विशेषदर्शनजन्यलौकिकसाक्षात्कारत्वेनभ्रमनिवर्त्तकत्वदर्शनात् ।
श्रुतिरप्येवमाह । तरतिशोकमात्मवित् । इति । मिथ्याज्ञाननाशःशोकतरणंतद्धेतुरात्मदर्शनंतद्धेतूनिश्रवणादीनीतिविवेकः । नत्वात्म
साक्षात्कारस्यैवमिथ्याज्ञाननाशकत्वेन्यपदार्थनिरूपणंव्यर्थमितिचेन्न। तत्तत्त्वज्ञानमंतरेणतद्भिन्नत्वेनात्मज्ञानासम्भवात्परंपरोपयोगेनसा
र्थक्यात् । तच्चात्मज्ञानंभगवत्प्रसादेनैवनतद्विनेति । अतःसोपिज्ञेयउपास्यश्चेतिपूर्वमुपपादितमेतद्बहुशः । अत्रैवान्येषांसांख्याद्यभिमत
ज्ञानानामंतर्भावोयथाकथंचिद्बोध्यः । सर्वेपदाहस्तिपदेनिमग्नाइतिन्यायेनेतिसंक्षेपतोनिरूपितःकांडत्रयविभागः ॥कथंयथातेजोवारिमृदा
मविनिमयःस्वभावावस्थितिरमृषातथेतिदृष्टांतः । यतःश्रीमद्भागवतात्स्वेनराजतेसत्यलोकइतिस्वराट्ब्रह्माआद्यस्यप्राक्कल्पीयज्ञानस्य
जन्माविर्भावमन्वयात्प्राप । एतच्चाग्रेस्फुटीभविष्यति । पुरामयाप्रोक्तमजायनाभ्येपद्मेनिषण्णायममादिसर्गे ॥ ज्ञानंपरंस्वात्मरहःप्रका
शंयत्सूरयोभागवतंवदंति ॥ इतितृतीयेवक्ष्यतिभगवान् ।किंच यथात्ममायायोगेननानाशक्त्युपबृंहितम्॥ विलुंपन्विसृजन्गृह्णन्बिभ्रदात्मा
नमात्मना ॥ क्रीडस्यमोघसंकल्पऊर्णनाभिर्यथोर्णुते ॥ तथातद्विषयांधेहिमनीषांमयिमाधव ॥ इत्यादिनाब्रह्मप्रार्थनानंतरंश्रीहरिणा ज्ञा
नंपरमगुह्यंमेइत्यादिश्लोकैःसंक्षेपेणश्रीमद्भागवतंब्रह्मणेउपदिष्टांतर्दधे । ततश्च अंतर्हितेंद्रियार्थायहरयेविहितांजलिः ॥ सर्वभूतमयोविश्वं
ससर्जेदंसपूर्ववत् ॥ इतिचवक्ष्यतिद्वितीये । इतरतइतरेपिनारदव्यासमैत्रेयादयोपियतोभागवतादाद्यस्यसर्वादिकारणस्यहरेर्जन्म कोर्थः
साक्षात्कारमन्वयुः । अत्रार्थवशाद्वचनविपरिणामः। चपुनः यतोभागवतात्पुमानर्थेषुधर्मादिषुशास्त्रीयपदार्थेषुवाभिज्ञोज्ञाताभवति। धर्मा
र्थकाममोक्षाणांज्ञानंभागवतश्रुतेः ॥ सर्वशास्त्रार्थविज्ञानमस्याध्येतुश्चजायते ॥ इतिसंहितोक्तेः। यद्भागवतमादिकवयेश्रीव्यासायमह्यंप

१ श्रुत्यर्थनिर्णायकोन्यायः सूत्रमित्यर्थः ।



रंपरमानंदंतेने। परःस्यात्परमानंदेपरमेशेरिपौपुमान् ॥ इतिकोशात् । किंभूतायमह्यंब्रह्महृदिहृदयेयस्यसब्रह्महृदः। समासांतोत्राच्प्रत्य
यः। तस्मैब्रह्महृदाय।ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्यहम् ॥ इतिगीतासुब्रह्मशब्दःप्रकृतिपरःश्रीहरिणोदाहृतः । इहचब्रह्मशब्देनप्रकृ
तिकार्यभूतोप्रसन्नतारूपःशोकोबोध्यः। गोभिःश्रिणीतमत्सरमितिवत्कारणेपिकार्यप्रयोगः। तेनब्रह्महृदाय कोर्थः शोकाकुलायेतिलब्धम्।
एतद्वृत्तमग्रेस्फुटीभविष्यति नातिप्रसीदद्धृदयःसरस्वत्यास्तटेशुचौ ॥ इत्यारभ्य अथापिबतमेदैह्योह्यात्माचैवात्मनाविभुः॥असंपन्नइवाभा
तिब्रह्मवर्चस्यसत्तम॥इत्यन्तग्रन्थेन॥ यद्वायद्भागवतमादिकवयेब्रह्मणेब्रह्मवेदंतेनेसृष्ट्यादौभगवताचतुःश्लोकीरूपेणोपदिष्टमेवतद्वेदंतेनेवे
दरूपेणचतुर्मुखेभ्यआसेत्यर्थः। चतुःश्लोकीचतुर्वेदबीजभूतानसंशयः॥ इतिसंहितोक्तेः । चतुष्टयरूपेणवेदप्राकट्येचतुःश्लोकोपदेशएवहे
तुरन्यथापंचादिभिःकथंनोपदिष्टमितिभावः । यस्मिन्भागवतेसूरयोपिशास्त्रज्ञाअपिहरिभक्तिंविनामुह्यंतिएतदर्थरहस्यंनाप्नुवंति। भक्त्या
भागवतंशास्त्रंनव्युत्पत्त्यानटीकया॥ इत्यभियुक्तोक्तेः। यद्वायस्मिन्नितरतइतरेशाक्तिकनास्तिकप्रभृतयःसूरयःसंतोपिमुह्यंतिनैतद्व्यासकृत
मितिवदंति। व्यासकृतेतरपुराणरचनाविलक्षणत्वात्। किंच अष्टादशपुराणानिकृत्वासत्यवतीसुतः ॥ चक्रेभारतमाख्यानंवेदार्थैरुपबृंहि
तम् ॥ इतिस्कांदमाहात्म्योक्तेरिहच जिज्ञासितसुसम्पन्नमपितेमहदद्भुतम्॥ कृतवान्भारतंयस्त्वंसर्वार्थपरिबृंहितम् ॥ इतिप्रथमस्कंधेश्री
नारदोव्यासशोकापनोदावसरेतमुक्त्वाभागवतवर्णनंतस्माउपदिदेशेतिविरुद्धत्वाच्च । अत्रप्रांचःइतिहासपुराणानांभागोयोवाचकस्यसः ॥
कर्त्तृवर्जितएवास्यव्यासःप्राकट्यकृन्मतः ॥ मार्कंडेयादिसंज्ञातुकाठकादिवदिष्यताम्॥नन्वृगादिपुराणांतोवेदोनित्योस्तिकिंत्वदः॥सम्प्र
तिप्रचरद्भूमौश्रीमद्भागवताभिधम् ॥ अष्टादशातिरिक्तत्वाद्वेदरूपंनसंभवेत्॥ अष्टादशोत्तरंव्यासोभारतंकृतवान्प्रभुः॥ भारतोत्तरमेतत्तुच
क्रेभागवतंमुनिः । इत्येवमुक्तेरेतस्यनाष्टादशसुसम्भवः । मैवंलक्षणसंख्याभ्यामिदमेवहितद्भवेत् ॥ ब्रह्मश्रीपतिसंवादोयोंशोष्टादशमध्य
गः॥ व्यासनारदसंवादस्तत्रयस्मात्प्रवेशितः॥ एकस्यैवतदेतस्यश्रीमद्भागवतस्यतत् ॥ अष्टादशांतर्वर्त्तित्वंपौर्वापर्यंचसंभवेत् ॥ विवक्षा
नास्तिकालस्यसचेदत्रविवक्ष्यते ॥ मार्कंडेयाग्नेययोःस्याद्बहिर्भावस्तदानयोः ॥ इति । अथास्यव्याख्या । अथेतिहासपुराणेषुविष्णुभ

क्तिवाक्यान्यवेदरूपाणीतिविवक्षून्ममींसकैकदेशिनःकांश्चिन्नास्तिकाभासान्निराकर्तुंप्रवर्त्तते । तथाहि नन्वितिहासपुराणयोर्नवेदत्वमष्टा
दशपुराणानिकृत्वाभारतंचक्रेव्यासइतिस्कांदादौतयोःकृतकत्वाभिधानादितिचेत्तत्राह । कृत्वासत्यवतीसुतश्चक्रइत्यत्रतानिप्रकटय्यैतत्प्र
कटयांचकारेत्येवार्थः । अन्यथाएवंवाअस्यमहतोभूतस्यनिःश्वसितमेतदृग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुराणंविद्याउपनिषद
इत्यादिबृहदारण्यकश्रुतेर्मुख्यार्थबाधःस्यात् । किंचयद्ब्राह्मणानीतिहासपुराणानीतिब्रह्मयज्ञेविनियोगाच्च तयोर्वेदत्वं । आख्यानैश्चाप्यु
पाख्यानैर्गाथाभिर्द्विजसत्तमाः ॥ पुराणसंहिताश्चक्रेपुराणार्थविशारदः ॥ यच्छिष्टंतुयजुर्वेदइतिशास्त्रार्थनिर्णयः ॥ इतिवायवीयाच्चापित
योर्वेदत्वंपूरणात्पुराणमितिवेदपूरकत्वान्निरुक्तिः । नहिन्यूनस्यस्वर्णकंकणस्यत्रपुणापूर्तिर्युज्यतइत्यभिप्रेत्यैवस्कांदे । योवेदचतुरोवेदान्सां
गोपनिषदोद्विजः ॥ पुराणंनैवजानातिनचसस्याद्विवेदवित् ॥ इत्युक्तं । ननुवेदस्यचैतद्भागस्तर्ह्यनादौतस्मिन्मार्कंडेयादिसंज्ञाकथंतत्रा
हमार्कंडेयेनोच्चारितामितिविवक्षयातद्व्युत्पत्तिःकाठकादिसंज्ञावन्मन्तव्या । यथाकठेनोच्चारितंकाठकमितिसंज्ञातथामार्कंडेयादिसंज्ञेतिभा
वः । एवमवेदत्वशंकायामितिहासपुराणयोर्निराकृतायांश्रीभागवतविद्वेषिणःशंकंते । ऋगादेःपुराणांतरस्यवेदत्वमस्तुकिंतुशुकपरीक्षित्सं
वादतयाभुविसंप्रतियत्प्रचरतितदिदंभागवतंवेदरूपंनभवेद्यादिदमष्टादशभ्योतिरिक्तंप्रतीयते । एतदुपपादयतिअष्टादशोत्तरमितिअष्टादश
पुराणानीत्यादिनामात्स्यादिवाक्येनाष्टादशपुराणप्राकट्यानंतरंभारतप्राकट्यमुक्तंतदनुभागवतंचक्रेमुनिरिति । तथैवश्रीव्यासनारदसंवादे
प्रथमस्कंधेप्रवक्ष्यत्येव । तेननैतदष्टादशांतर्भूतमतोनवेदरूपंयदष्टादशांतर्भूतंतद्वेदरूपमितिभावः । परिहरति । मैवमिति । अष्टादशांत
र्गतस्यभागवतस्ययेलक्षणसंख्येमात्स्यादौकथ्येतेताभ्यामेतच्छुकभाषितमेवतदंतर्गतंनान्यादित्यर्थः । तत्रमात्स्ये । यत्राधिकृत्यगायत्रीं
वर्ण्यतेधर्मविस्तरः ॥ वृत्रासुरवधोपेतंतद्भागवतमिष्यते ॥ सारस्वतस्यकल्पस्यमध्येयेस्युर्नरामराः ॥ तद्वृत्तांतोद्भवंलोकेतद्भागवतमुच्य
ते ॥ अष्टादशसहस्राणिपुराणंतत्प्रकीर्तितम् ॥ लिखित्वातच्चयोदद्याद्धेमसिंहसमन्वितम् ॥ प्रौष्ठपद्यांपौर्णमास्यांसयातिपरमांगतिम् ॥
इति । स्कांदेचग्रंथोष्टादशसाहस्रोद्वादशस्कन्धसंमितः ॥ हयग्रीवब्रह्मविद्यायत्रवृत्रवधस्तथा ॥ गायत्र्याचसमारंभस्तद्वैभागवतंविदुः ॥

इति । शुकभाषितत्वंचास्योक्तंपाद्मे ॥ अंबरीषशुकप्रोक्तंनित्यंभागवतंशृणु ॥ पठस्वस्वमुखेनापियदीच्छसिभवक्षयमितिगौतमेन ॥ वा
राहेच परीक्षितःशापकथनप्रसंगेतत्त्वमुक्तं तत्राजग्मुर्महाभागामुनयःसंशितव्रताः ॥ शुकश्चव्यासतनयोमहाभागवतोमुनिः ॥ संहि
तांश्रावयामासराज्ञेभागवतींशुभामित्यादिकंश्रीवराहदेवेनोक्तं । ब्रह्मांडेपिशुकवागमृताब्धींदुःपरीक्षित्स्वांतगंतमः ॥ निरस्यन्रद्द्युते
विप्रश्रीमद्भागवताख्यया ॥ इतिश्रीशेषदेवेनच लक्षणेनह्यसाधारणवचनेनवस्तुपरिच्चीयतेनतुव्युत्पत्तिमात्रेण । यथासास्नादिमत्त्वेन
लक्षणेनगौःपरिचीयते । अन्यथाभगवताप्रोक्तंभगवद्देवताकंयत्किंचिच्छास्त्रंभागवतंस्यात् । यद्वाभगवत्याइदंभागवतं । यःप्राहभग
गवान्विष्णुस्तदाहभगवान्शिवः ॥ तथाहभगवान्ब्रह्माभगवान्पाणिनिस्तथा ॥ इत्यादिषुवाक्येषुविष्ण्वादिषुभगवच्छब्दप्रयोगाद्भगवतो
विष्णोःशिवस्यब्रह्मणोवापाणिनेश्चेदंभागवतंतेनविष्णुपुराणशिवपुराणब्रह्मपुराणादीनामष्टाध्यायाश्चभागवतत्वंस्यात् । यद्वाचकारभगवा
न्व्यासइत्युक्तेःपुराणमात्रस्यभागवतत्वंस्यात् ॥ किंचस्त्रीलिंगव्युत्पत्त्यासप्तशत्यादेश्चतत्स्यात् । गच्छतीतिव्युत्पत्त्यामहिषोष्ट्रादिश्चगौःस्या
त् । अतःश्रीधरस्वामिनापीत्थमुक्तमतएवभागवतंनामान्यदितिनशंकनीयमिति । अतएवकोर्थःलक्षणोक्तेभागवतंनामान्यद्विष्णुपुराणा
दिव्युत्पत्त्यानभवेदितितदर्थः तस्माल्लक्षणेनैववस्तुपरिचेयं । यत्तुमात्स्याद्युक्तलक्षणंवीक्ष्यकेनचित्कृतमेतद्व्यासकृतंतत्त्वन्यदितिपामरा
णांशंकांतरंतत्परिहरिष्यामः । नन्वष्टादशोत्तरंभारतंप्रकटितंभारतोत्तरंतुश्रीनारदोपदेशतोभागवतमितिब्रुवतात्वयाभागवतद्वयमभिमतं ।
तेनचपुराणान्यूनविंशतिरुक्तानि । किंश्चभारतोत्तरस्यलक्षणसंख्येमात्स्याद्युक्तेप्रतीतेभारतात्पूर्वस्य । तेकेऽतःस्ववक्तृत्वंप्रज्ञांधप्रेष्टंप्रका
शितमितिचेत्तत्राह । ब्रह्मश्रीपतीति इदंभगवतापूर्वंब्रह्मणेनाभिपंकजे । स्थितायभवभीतायकारुण्यात्संप्रकाशितम् ॥ इतिद्वादशवाक्या
द्भागवतंब्रह्मनारदसंवादरूपंसंक्षेपेणकृत्वापश्चान्नारदोपदेशादनुक्रम्यविस्तारितंचेत्यर्थः । तथाचत्वदुक्तंवियत्पुष्पायमाणंसर्वमभूदतोमूर्द्धा
नंगृहीत्वारुदिहीति । भारतोपक्रमेप्येवमस्तिप्रथमंचतुर्विंशतिसहस्रंभारतंकृतमाख्यानैर्विनाततस्तैःसहितंपंचाशत्सहस्ररूपंतदनंतरंतततो
प्यधिकमितिअन्यांसंगतिमाह । पौर्वापर्येणभासनस्यकालस्याविवक्षानास्ति । सताद्दशःकालश्चेदत्रेतिहासपुराणनिरूपणेवक्तुमिष्यते ।

तर्ह्यनयोःसंप्रतिभुविप्रचरतोर्मार्कंडेयाग्नेययोरष्टादशभ्योबहिर्भावःस्यात् । अयमर्थः । भारतात्पूर्वेष्वष्टादशसुयद्भागवतेततोन्यदिदंशुकभा
षितंयद्भारतादुत्तरमितिचेत्तवशंकातर्हिमार्कंडेयादावप्येवंसाभ्युदेति । तथाहि मार्कंडेयारंभे ।भगवन्भारताख्यानंव्यासेनोक्तंमहात्मना॥पूर्ण
मस्त्यमलैःशब्दैर्नानाशास्त्रसमुच्चयैः ॥ इत्यादि । तदिदंभारताख्यानंबह्वर्थंबहुविस्तरम् ॥ तत्त्वतोज्ञातुकामोहंभगवंस्त्वामुपाश्रितः ॥
इतिचप्रोच्यते । जैमिनिनाकृतैश्चतुर्भिःप्रश्नैःपुराणकथावतारितासाचभारतोत्तरभावित्वंविनानसंमतेतिमार्कंडेयस्याष्टादशभ्योबहिर्भा
वः । एवमाग्नेयारंभे सूतत्वंपूजितोस्माभिःसारात्सारंवदस्वनः ॥ इतिशौनकेनपृष्टःसूतः । सारात्सारंहिभगवान्विष्णुरव्ययईश्वरः ॥
इत्यादिकमुक्त्वाऽवताार्य्यंचपुराणंतद्विद्यासारंब्रुवन्प्रसंगाद्ग्रंथांतर्गीतासारंप्रवक्ष्यामीतिप्रतिज्ञाय दैवीह्येषागुणमयीमममायेत्यादीनिकानि
चित्पद्यान्यवोचत । अर्थमात्रोक्तौयथावृत्तानिनब्रूयादित्याग्नेयस्यापितेभ्यःसः । तस्मात्कालविवक्षात्रनास्तीतिकालपौर्वापर्यकथनंतुह्य
सुरादिमोहार्थमेव । अन्यथाव्यासोनारायणःस्वयमित्युक्तेःसर्वज्ञस्यनारायणावतारस्यव्यासस्याप्युन्मत्तप्रलपिततास्यात् । ततश्चभाग
वतादीनांत्रयाणामष्टादशांतर्भावः सिद्धः । इत्थंचेतिहासपुराणानिसर्वाण्यनादिसिद्धान्येवव्यासात्तेषांप्राकट्यमित्युक्तंनविस्मर्तव्यम् । प्रण
म्यचशिवंदेवींशर्वंभागवतंतथा ॥ पुराणंसंप्रवक्ष्यामियथोक्तमृषिभिःपुरा ॥ इतिवाक्यात्तुयेदेवीपुराणंद्वेषसंकुलाः ॥ ऊचुर्भागवतंतेहिस्वमौ
ढ्यंप्रवितन्वते ॥ मात्स्यादौयद्भागवतंप्रोक्तंतच्छुकभाषितम् ॥ नतद्देवीपुराणंस्याल्लक्षणादिविपर्ययात् ॥तत्रभागवतत्वेनसर्वस्यैवविशेषण
म् ॥ तथेतिव्यवधानाच्चपुराणंनविशिष्यते ॥ यदिदंकालिकाख्यंचमूलंभागवतंस्मृतम् ॥ इत्युक्तःकालिकाभिख्यंयद्भागवतमूचिरे ॥ तच्च
प्रमादाद्विद्वेषाच्चेतिप्राहुर्विपश्चितः ॥ एतस्योपपुराणत्वान्मात्स्योक्तत्वंविमूढता॥ त्रयोदशत्वाद्यसिद्धेर्लैङ्गादीनांसमूढता ॥ अथास्यव्या
ख्या।एवंशुकपरीक्षित्संवादरूपंभागवतमष्टादशपुराणांतर्गतंमहापुराणमित्यापाद्यतत्रशाक्तैःकृतानिशंकांतराणिनिराकर्तुंप्रवर्ततेतथाहि।
ननुप्रणम्यचेत्यादिकेदेवीपुराणस्याद्यपद्येभागवतपदप्रयोगाद्भगवत्याइदंभागवतमितियोगाच्चदेवीपुराणमेवभागवतमस्तु । यल्लक्षणादिकं
मात्स्येप्रोक्तंनचेदंभुविशुकप्रोक्तत्वेनप्रचरदितिचेत्तत्राह । प्रणम्यचेत्यादिप्रकटार्थंतेषांमौढ्यंप्रपंचयति । मात्स्येस्कांदेचयस्यलक्षणंगायत्री



समारब्धत्वंकथितं।यस्यसंख्याष्टादशसाहस्रीवर्णितातद्विपाद्मादौशुकभाषितत्वेनोक्तंग्राह्यं।नतुदेवीपुराणं। तत्रमात्स्याद्युक्तयोर्लक्षणसंख्य
योरभावात्तद्विपरीतयोश्चसत्त्वात्।तस्यहिविजयत्रैलोक्याभ्युदयशुंभनिशुंभमथनाख्यपादत्रयविशिष्टत्वंलक्षणंलक्षंचतस्यसंख्योक्तालक्षमा
त्रेणश्लोकानांविद्यादेवेनभाषितेत्यभ्युदयपादपूर्त्त्यध्यायस्यवाक्यात्।शुकपरीक्षित्संवादस्तुतत्रक्वापिनास्ति। किंचाध्यायसमाप्तौनिबंधेषु
तदुदाहृतौचदेवीपुराणनाम्नैवसमाप्तिरुदाहृतिश्चदृश्यतेनतुभागवतनाम्नेत्यतोदेवीपुराणंभागवतंवदंतःशुकभाषिततद्विद्वेषिणोविमूढाएव
विदिताः । एतेनहेमसिंहसमन्वितमितिसिंहवाहिनीत्वेनलिंगेनदेवीपुराणत्वशंकनलक्षणजीवनंचनिरस्तं।नखलुतत्रतत्तद्वाहनोपेतानितत्त
त्पुराणानिदेयान्युच्यंते।किंतुजलधेन्वाद्युपेतान्येवतस्मात्सिंहशब्देनसिंहासनंवाच्यंपुस्तकाधारत्वेनतस्यापेक्षितत्वात्भीमोभीमसेनइति
वदेकदेशेनापिपूर्णनामाभ्युपगमाच्च। यस्यचतुर्षुपादेषुहेम्नःसिंहाःसंतीत्येके।प्रणम्येत्यादिवाक्याद्देवीपुराणेभागवतत्वभ्रांतिंनिरस्यतस्यवा
क्यस्यपरमार्थंदर्शयति। तत्रेति।तत्रपद्येभागवतशब्दस्यसर्वविशेषणत्वात्तथाशब्देनव्यवधानाच्चपुराणंभागवतमितिनविशेषणीयमिति ।
शर्वस्यभागवतत्वंतुभस्मोद्धूलितदेहस्तुजटामंडलमंडितः॥अहंध्यायामितंविष्णुंपरमात्मानमव्ययम्॥ विष्णोराराधनार्थंमेव्रतचर्यापिताम
ह॥इतिगारुडेतद्वाक्यात्।नचभगवत्याइदंभागवतमितिवाच्यं।तथात्वेतद्विषयकस्यसर्वस्यतत्त्वापत्तेः। भगवत्प्रोक्तत्वभगवद्देवताकत्वैकतर
रूपावयवशक्त्यासमुदायशक्त्याचशुकभाषितंशास्त्रंवाच्यं बोधयन्नयंभागवतशब्दःपंकजादिवद्योगरूढोबोध्यः। ननुयदिदमित्यादिकात्पु
राणदानप्रसंगेकालीपुराणवाक्यात्कालीपुराणंभागवतमस्तु।यदष्टादशसुगण्यतेनत्वेतदित्याहसार्द्धश्लोकेन यदिदमिति।मात्स्येयद्भागवतं
लक्षणसंख्याभ्यांवर्णितंनतत्कालीपुराणं।तल्लक्षणसंख्ययोस्तत्राभावात्।पाद्मादौशुकभाषितत्वंचलक्षणंतत्कालिकापुराणेनास्त्येव। ततःप्र
मादाच्छ्रीमद्भागवतेविद्वेषाच्चतेतथावदंतीतिविमूढास्तइत्यर्थः । मात्स्येलक्षणसंख्याभ्यांपुराणानिलक्षयित्वातेषांदानमाहात्म्यानिचोक्ता
नि।अस्यकालीपुराणस्योपपुराणमध्येगणितत्वात्तन्मात्स्योक्तंभागवतमिदमेवेतिब्रुवंतोविमूढाभवंति। अपिचतत्रैवकालिकापुराणउपपुरा
णान्यष्टादशोक्तानि । शैवंयद्वायुनाप्रोक्तंवैरिंचंवैष्णवंतथा॥यदिदंकालिकाख्यंचमूलंभागवतंस्मृतं॥ सौरंचनारदीयंचमार्कंडेयंचवह्निजम्।भ

विष्यंब्रह्मवैवर्तंलिंगंचैवत्रयोदशम् ॥ वामनंकौर्ममात्स्येचसप्तदशंचगारुडम् ॥ स्कान्दमष्टादशंप्रोक्तंपुराणंचनसंशयः ॥ इति । यदिकालिकाख्यं पुराणंभागवतमितिसंबध्यते । तर्हिलैंगादीनांत्रयादेशत्वाद्यनुपपत्तिरितिब्रूवंतस्तेसंमूढाइत्यर्थः । तस्माद्भागवताख्यमुपपुराणमिदमन्यदे व । यत्सौरपुराणे । ततोभागवतंप्रोक्तंभागद्वयसमन्वितमितिकृतलक्षणं । ददातिसूर्यभक्तायस्तुभागवतंद्विजाः ॥ सर्वपापविनिर्मुक्तः सर्वरोग विवर्जितः । जीवेद्वर्षशतंसाग्रमंतेवैवस्वतंपदमिति । यस्यदानफलंचोक्तमितिकौर्मेप्रथमाध्याये । उपपुराणसंख्यैवमास्ति । आद्यंसनत्कु माराख्यंनारसिंहंततःपरम् ॥ तृतीयंस्कांदमुद्दिष्टंकुमारेणतुभाषितम् ॥ चतुर्थंशिवधर्माख्यंसाक्षान्नंदीशभाषितम् ॥ दुर्वाससोक्तमाश्चर्यं नारदीयमतःपरम् ॥ कापिलंवामनंचैवतथैवोशनसेरितम् ॥ ब्रह्मांडंवारुणंचाथकालिकाद्वयमेवच ॥ माहेश्वरंतथासांबंसौरंसर्वार्थसंचय म् ॥ पराशरोक्तमपरंमारीचंभार्गवाह्वयमिति । तस्मादेतानिशैवादीनिपुष्करपुराणशिवरहस्यविष्णुधर्मोत्तरादिवदुपपुराणान्येव ॥ तेषू क्तंभागवतमन्यदेवेतिसिद्धमिति । ननुश्रीधरस्वामिभिर्यदुक्तंभागवतंनामान्यदितिनशंकनीयं । तत्तूपपुराणापेक्षमिति । यदिचनहिबीज मंतराशंकोद्भवतीतिमतंतत्राह । शंकापंकावलिप्तत्वादप्रामाण्यंयदीष्यते ॥ वेदादौचिरशंकास्तिततस्यापिचतदिष्यताम् ॥ श्रौतकर्मप रित्यागान्निबंधेष्वनुदाहृतेः ॥ अप्रमाणमिदंवेदविरुद्धंप्रतिभातिनः ॥ मैवंकर्मपरित्यागोवेदेनाप्यधिकारिणाम् ॥ दृश्यतेभारतेनापिकिंमूढ नहिपश्यसि ॥ संवत्सरप्रदीपादिष्वार्षग्रंथेषुवित्तमैः ॥ वाक्यान्यस्यनिबंधेषुलिखितानिपुरातनैः ॥ टीकाश्चास्यकृताःसद्भिर्बहवोवेदविद्वरैः ॥ यस्मान्नवीक्षसेतत्त्वंदिवांधःपरिकीर्त्यसे ॥ अथास्यव्याख्या ॥ शंकापरिहारमाह । वेदादाविति सौगतैर्वेदस्य त्रयोवेदस्यकर्त्तारोमुनि भंडनिशाचराः ॥ इत्यादिवाक्यैर्मुनिभंडादिकृतत्वमाशंक्यते । सांख्यैश्चमृदब्रवीदापोब्रुवन्नित्यादिदर्शनादनाप्तत्वं । तस्यशंकितं । तथा वेदवाच्येश्वरस्यकालस्यचसांख्यैरभावःस्मर्य्यतेतैरेववेदविहितज्योतिष्टोमादेर्हिंसादोषेणाननुष्ठेयत्वंचोच्यते । जैमिनिनाकाठकादिसंज्ञा दर्शनाद्वेदस्यपौरुषेयत्वंशंकितं । किंचाचारमाधवेस्मृतीनामप्रामाण्यंशंकितं । नचैतावतावेदादीनामप्रामाण्यादिकंस्यात्तदप्रामाण्यादेः परिहृतत्वात् ॥ किंचाबाधिताखलुशंकाप्रामाण्यमपनयतिनतुबाधितापीति । ननुमार्कंडेयादौशंकाविरहात्तत्प्रमाणमेव । अत्रसंप्रचरिते

भागवतेशंकासत्त्वादप्रामाण्यंस्यादितिचेत् मैवं मार्कंडेयादौतत्तत्कथाप्रधानतयादुर्धियांतत्रबलवद्विद्वेषाभावान्नशंकोदयः । श्रीभागवते वि ष्ण्वेकभक्तिप्रतिपादकेतदितरधर्मनिरासकेतेषांबलवद्विद्वेषात्तद्धेतुकाशंकास्यादेववाममार्गगानां । तेचविष्णोर्नामनगृह्णीयान्नस्पृशेत्तुलसी दलम् ॥ इत्यादिवाक्यैर्निखिलवेदप्रतिपाद्यंसर्वेश्वरंश्रीविष्णुमपिनिंदंति ॥ तदुत्कर्षापादकेश्रीभागवतेकथंतेषांशंकानभवेदितिभावः । शंकामा त्रेणाप्रामाण्यंचेत्तर्हिकल्पतरौकुठारस्त्वयानिक्षिप्यताम् । कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाःअहरहःसंध्यामुपासीतयावज्जीवमग्निहो त्रंजुहोतिवीरहासदेवानांयोग्निमुद्वासयेदित्या । दिश्रुतिभिर्यावज्जीवंकर्त्तव्यतोक्तायेषांत्यागेवीरघातःप्रत्यवायःश्रावितस्तेषांवर्णाश्रमकर्मणां त्यागाभिधानाद्वेदविरुद्धत्वमस्य । तदुक्तंप्रथमे । त्यक्त्वास्वधर्मंचरणांबुजंहरेर्भजन्नपक्वोथपतेत्ततोयादि । यत्रक्वाभद्रमभूदमुष्यकिंकोवार्थ आप्तोभजतांस्वधर्मतइति । एकादशेपि ॥ आज्ञायैवंगुणान्दोषान्मयादिष्टानपिस्वकान् ॥ धर्मान्संत्यज्ययः सर्वान्माभजेतससत्तमइति । एवमनेकत्रकर्मत्यागोत्रपठ्यते । किंचप्राचीननिबंधेष्वेतद्वचसामनुदाहरणाच्चवेदविरुद्धंभागवतंप्रमाणंनेतिपरिहारमाह मैवमिति । एतद्ध स्मवैविद्वांसआहुर्ऋषयः कावषेयाःकिमर्थावयमध्येष्यामहेकिमर्थावयंयक्ष्यामहे । एतद्धस्मवैपूर्वेविद्वांसोग्निहोत्रंनजुहवांचाकिरेएवंवैतमात्मा नंविदित्वाब्राह्मणाःपुत्रैषणायावित्तैषणायालोकैषणायाश्चव्युत्थायाथभिक्षाचर्यांचरंति । नकर्मणानप्रजयाधनेनत्यागेनैकेऽमृतत्वमानशुरि त्याद्याःश्रुतयः पारिव्राज्याधिकारेसतिनित्यनैमित्तिककर्मणांत्यागंदर्शयंति । एवंभारतेमोक्षधर्मेपितापुत्रसंवादादिषुनिवृत्तिरुपादिष्टाप्रवृ त्तिस्त्याजितेतिनिरूपितं । किंचसर्वधर्मान्परित्यज्यमामेकंशरणंव्रजइतिश्रीमुखोक्तेस्तथाशुद्धभक्त्यधिकारेकर्मत्याजयताभागवतेनाकि मपराद्धमितियथाजातत्वादेवंतेभणितिरिति । यदुक्तंप्राचीननिबंधेष्वेतद्वचसामनुदाहृतेरनार्षमितितत्परिहरति ॥ संवत्सरेत्यादिना । प्र कटार्थप्राचीनगौडकृतेसंवत्सरप्रदीपनाम्निस्मार्तनिबंधेगृहेभागवताभावेस्कांदवचनैर्दोषंप्रदर्श्यकलिदोषापनुत्तयेकतिचिच्छ्रीभागवतपद्या निलेख्यानीतिप्रतिज्ञायबहूनितद्वाक्यानितत्रलिखितानि ॥ श्रीमध्वमुनिनास्वभाष्येतद्वाक्यान्युदाहृतानि बोपदेवेनचैतत्कथयामुक्ताफ लहरिलीलाख्यौनिबंधौपरमहंसप्रियाख्याटीकाचास्यकृता ॥ सच्चरितमीमांसाख्येस्मार्तग्रंथेविद्यानिध्याचार्येणदेवर्षिभूताप्तेत्यादीनितद्व

चांस्युपात्तानि॥लक्ष्मीधरेणभगवन्नामकौमुद्यामनंतदेवेनमथुरातीर्थप्रकाशेवाचस्पतिनाभक्तिप्रकाशे मधुसूदनस्वामिना भक्तिरसायनेतद्वा
क्यानिन्यस्तानि।नृसिंहारण्येनहरिभक्तिचंद्रोदयेस्मृतिसंग्रहेस्मार्तग्रंथेचास्यबहूनिवाक्यानिप्रोक्तानि । विष्णुपुरीयतीशेनतद्वाक्यैरेवभक्ति
रत्नावलीव्यधायि।तथाभगवन्नाममाहात्म्येरघुनाथदण्डिनाबहूनितद्वाक्यानिक्षिप्तानि।तथाप्पयदीक्षितेनकर्णौपिधायनिरयादित्यादिकंत
द्वाक्यमलेखि।निर्णयसिंधौकमलाकरभट्टेनवामनजयंतीनिर्णयेश्रोणायांश्रवणद्वादश्यामित्यादिकंतद्वाक्यंप्रमाणितं।भट्टोजिदीक्षितेनचतु
र्विंशतिमतव्याख्यायांतर्पणोत्तरपूजानिर्णयेमूर्त्त्याभिमतयात्मनइति तद्वाक्यमलेखि ॥ सर्वतःप्राक्तनेनश्रीस्वायंभुवेनमनुनापिस्वस्मृतौ
नदद्यादामिषंश्राद्धेइत्यादिकं स्वमेवब्राह्मणेभुंक्तेस्वंवस्तेस्वंददातिच॥इत्यादिकंलिखितं । तथाश्राद्धमयूखेपिनदद्यादामिषमितिप्रोक्तं ।
एवंदिनकरद्योतादिषुबहुग्रंथेष्वेतद्वाक्यानिसंति । श्रीशंकराचार्यादपिप्राक्तनेनानुभूतिस्वरूपाचार्येणमस्करिणासारस्वताख्यव्याकरण
ग्रंथकारकप्रकरणेछंदसिस्यादिःसर्वत्रेत्यत्रछांदसप्रयोगोदाहरणावसरेव्रजतीर्विरेजुरितिश्रीदशमस्कन्धपञ्चमाध्यायवाक्यमुदाहृतमिति।त
थाटीकाश्चास्यचित्सुखीविजयध्वजीविद्वत्कामधेनुसंबंधोक्तितत्त्वदीपिकाशुकहृदयासुदर्शनीमुनिभावप्रकाशिकाभावार्थदीपिकाद्याबह्व्यः
संति अर्वाचीनाःप्राचीनाश्च । एतैःसर्वविद्वद्वरैःशतसंख्याकैर्महद्भिरभ्यर्चितंश्रीभागवतमस्वीकुर्वन्नज्ञः कुंडजोसिविज्ञातः। माधवसर
स्वतीनामानंप्रतिभागवतमनार्षंब्रुवन्कश्चित्पंडितस्तेनयतिनाजारजोयमित्युक्तैःपंडितैःसगोलकएवनिश्चितइतिकाश्यांप्रसिद्धेः । एत
स्माद्वेदसारात्सर्वमान्याच्छ्रीभागवताद्भीतावामोपासकाराज्ञस्त्रस्ताश्चौराःपरस्वमिवविधवाःस्वगर्भमिवनिजधर्मंगोपायंतोविद्वेषादेवंकल्प
यंति । मात्स्यस्कांदपाद्मादिभ्योभागवतस्यलक्षणादीनिज्ञात्वाबोपदेवोऽतिसूक्ष्मबुद्धिःसंप्रचरदिदंभागवतंव्यासनाम्नानिबबंध । व्यास
कृतंत्वन्यदेवएतस्यव्यासकृतत्वेदृढबन्धःपदलालित्यंचनस्यात् । नहिपाद्मादिषुव्यासकृतेषुभागवतवद्गाढबंधादिकमस्ति । तस्मान्नवी
नमेतदितितान्निराकर्त्तुंतद्भाषणंतावदाह । मात्स्यादौलक्षणादीनिविलोक्यामितबुद्धिमान् । बोपदेवश्चकारेदंव्यासनाम्नाद्विजर्षभः ।
एतच्चदृढबंधत्वात्पदलालित्यतस्तथा । येनुमिन्वंतितेमूढानिश्चितंवाममार्गिणः ॥ समहान्दृढबंधस्तुछांदोग्यादिषुदृश्यते ॥ वैष्णवे

पदलालित्यंदृढबंधश्चवर्तते ॥ अस्तिसुंदरकांडेपिपदलालित्यशालिता ॥ कथमेषांनवीनत्वंदुर्बुद्धेत्वंनभाषसे ॥ बोपदेवकृतेत्वत्रबोपदेवा
त्पुरातनैः ॥ कथंटीकाःकृताःसंस्युर्हनुमच्चित्सुखादिभिः ॥ यान्याशंकार्प्यतेपापैःसाप्येतेनैवनश्यति ॥ अथास्यव्याख्या। द्वावाद्यौप्रक
टार्थौदृढबंधादिसत्त्वेनवीनत्वंयत्तद्व्यभिचारयतिद्वाभ्यां । छांदोग्यादिष्वित्यादिपदादैतरेयादिग्राह्यं । वैष्णवेश्रीविष्णुपुराणेप्रायेणे
तिबोध्यमग्रेपि । एवंश्रीगीतासुचोभयंदृष्टंस्फुटार्थमन्यत् । तथाचछांदोग्यादिवत्स्वतःसिद्धंभागवतेपिदृढबन्धादिकमितिनैतावताव्य
च्छंकावकाशइतिभावः । किञ्चान्यनाम्नाग्रंथोधनलोभादिनासाक्षान्मैत्र्यावादृष्टः । यथाधनलोभाद्बोपदेवेनहिमाद्रेर्नामयथाप्रीत्याविद्या
रण्यैर्वेदभाष्येमाधवनाम । अत्रचव्यासनामलिखनेग्रंथकर्त्तुः किंकारणंनधनादिलाभोनप्रीत्यतिशयः । किञ्चग्रंथकरणंयशोर्थंलाभार्थंवा ।
काव्यंयशसेर्थकृतेव्यवहारविदेशिवेतरक्षतये ॥ इत्यभियुक्तोक्तेर्बोपदेवस्यव्यासनामलिखनेनकिमपिसंभवति । किञ्चग्रंथकर्त्तुर्नाम्निसत्य
पिर्यादिवः संदेहस्तर्हिपतंजलिप्रणीतत्वेमहाभाष्येतर्कादौगौतकृतत्वेशारीरिकादौशंकराचार्यप्रणीतत्वेचसंदेहोदुर्वारःस्यात्। किंचस्ववाक्या
न्यार्षाण्युक्त्वालोकान्वंचयन्बोपदेवोमृषावादिस्वमाप्तत्वात्पातयन्महापापीस्यादितिनेदृक्कृतादृशस्यकर्मेति । किंचयद्येतद्बोपदेवेनव्यरची
त्युच्यते। तर्हितस्मात्पूर्वंजातैर्हनुमदादिभिस्तस्मिन्कृताष्टीकाःकथंस्युः। हनुमान्श्रीरामपार्षदश्चित्सुखःआचार्यश्च।किञ्चश्रीशंकराचार्यो
पिभागवतमात्रवर्णितेमृद्भक्षणवस्त्रहरणेगोविंदाष्टकेव्याख्यातवानेवतत् । श्रीमध्वमुनिरपितद्वाक्यानिस्वभाष्येउदाजहार।श्रीमध्वश्रीशं
करौहिसमकालीनौप्रसिद्धौ। शंकराचार्यसमयादुत्तरंवत्सरशतद्वयेव्यतीतेबोपदेवोभूदितिरामाश्रमादिभिर्लिखितं।यदितेहनुमदादयस्तस्य
व्याख्यानादिचक्रुस्तदाबोपदेवस्यजन्मापिनाभूदितितस्यकृतत्वंकथयन्भ्रांतधीरेव । एवमन्यापिवाममार्गगैःकृताशंकानिरस्तास्यादि
ति।तथाहि।मात्स्याद्युक्तलक्षणादिवीक्ष्येदंकृतंबोपदेवेनेतरपुराणवैलक्षण्यात्। व्यासकृतपुराणांतरश्लोकानुपूर्वसादृश्यंभागवतश्लोकेषुन
दृश्यते। अत्राह सकलधर्मशास्त्रेतिहासपुराणानंतरंप्रेम्णाव्युत्पत्तिदशायांकृतत्वादत्रवैलक्षण्यं। यथाशंकराचार्यकृतषोडशभाष्येषुमध्येशा
रीरकभाष्येइतरभाष्यवैलक्षण्यंदृश्यते। तत्किंशंकराचार्यकृतंनभवति।किंतुकर्मस्वनादरात्तत्रप्रीत्यभावान्नसौष्ठवं । ननुभागवतंनामान्यादि

तिनशंकनीयमितिश्रीधरशंकनान्निश्चीयते ।प्रागपिश्रीभागवतेशंकास्तीतिचेदुच्यते। वैशेषिकमीमांसकादिभिर्वेदाप्रामाण्यंसाधितं।तार्त्कि
प्राग्वेदाप्रामाण्यशंकास्थितेतिनस्वीक्रियतेयथा। तथात्रापिस्वीकार्यं । किंचास्तिकानांवेदाप्रामाण्यशंकायद्यपिनास्तितथापिनास्तिका
नांसास्त्येवेतिचेत्समःसमाधिः । किंचमन्वादिशास्त्रेचौर्यहिंसादिनिषेधेप्राक्तदनुष्ठानंकिंस्थितमितिनशंक्यते यथातथात्रापीति । अथ
विधिनाचौर्याद्यनुष्ठानाभावेपिसंगप्राप्तंतदासीदितिचेत्तर्ह्यत्रापिद्वेषतस्तदाशंकनंस्थितमितिसमंसमाधानं।वस्तुतस्तुश्रीधरस्वामिनोनाय
माशयः प्राक्शंकास्थितेति । किंत्वन्यएव। तथाहि सर्गादीनिदशलक्षणानियत्रोक्तानितद्भागवतंश्रीमद्भागवतंनाम । सर्गादिदशलक्षणमि
तिद्वादशेवक्ष्यमाणत्वादिति । द्वितीयद्वादशस्कंधयोर्भागवतत्वमस्तुदशानामपिलक्षणानांसंक्षेपेणोक्तत्वात्तृतीयादीनामपितदस्तुसर्गाद्ये
कैकलक्षणवत्त्वात्। प्रथमस्यतुनकथमपिभागवतत्वमेकस्यापिलक्षणस्यानुक्तेः।अतःप्रथमस्कंधोनभागवतमितियदिकाश्चिच्छंकेततत्स्वामि
भिर्निराक्रियते। किंचांबरीषशुकप्रोक्तंनित्यंभागवतंशृण्वित्युक्तेरपिप्रथमस्यशुकानुक्तत्वात्तन्नसंजाघटीतीतिचेन्न । अष्टादशसहस्रत्वद्वादश
स्कंधसंमितत्वगायत्रीप्रारब्धत्वादीनांप्रथमेनविनाऽसम्भवात्। उपोद्घातत्वेनाधिकारिनिरूपणेनप्रथमस्यापिभागवतत्वमस्त्येव।यथाऽशो
च्यानन्वशोचस्त्वमित्यारभ्यभगवद्गीतात्वेपिततःप्राक्तनग्रंथस्योपोद्घाततयागीतात्वंतथाप्रथमस्यापितत्त्वमिति।यद्वाप्रथमेपिसंक्षेपतोऽव
तारकथादिरूपलक्षणवत्त्वमस्त्येव । तेनात्रशंकैवनावतरति । नन्वस्यनिंदनेशाक्तादीनांकोहठइतिचेदत्राह। नवेत्तियोयस्यगुणप्रकर्षंसतं
सदानिंदतिनात्रचित्रम् ॥ वनेकिरातीकरिकुम्भजातांमुक्तांपरित्यज्यबिभर्तिगुंजामितिन्यायेनतेषांनिंदनेकोतिभारःपाखंडित्वात् । पाल
नाच्चत्रयीधर्मःपाशब्देनेहकथ्यते ॥ तंखंडयंतियेमूढाःपाखंडास्तेप्रकीर्तिताः ॥ इतिपाखंडलक्षणवत्त्वंतेषामस्त्येव । किंचपुनर्बोपदेव
कृतत्वंनिराकरोति । इदानींतनाःकवयःस्वल्पमपिभाषाकवित्वंकृत्वातत्रस्वनामक्षिपंतिबोपदेवोष्टादशसाहस्रींकृत्वालोभादिविनैवव्यास
नामनिक्षिप्तवान्सकथंनभ्रांतःस्यात्प्रयोजनमनुद्दिश्यमन्दोपिनप्रवर्ततेइतिन्यायात् । किंचयावत्कीर्त्तिर्मनुष्यस्यपुण्यालोकेषुगीयते ॥ ता
वद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ इतिवचनात्स्वर्गप्राप्त्यर्थंव्यासनामनिक्षेपेणबोपदेवेनभागवतंकृतमितिकिंनस्यादितिचेन्न । कीर्त्ति

प्रचारोहितदुक्तश्लोकात्स्वर्गप्राप्तिहेतुत्वेनावगम्यते । कीर्त्तिश्चव्यासनामनिक्षेपाद्व्यासस्यैवनतुग्रंथकर्तुः । यद्यप्यस्यानार्षत्वंनहिसंभवति
कथंचिदपि । तथापित्वंब्रूहिअयंग्रंथोवेदविरुद्धार्थस्यप्रतिपादकोऽविरुद्धस्यवा । आद्येस्यार्षत्वेप्यप्रामाण्यमेवबृहस्पतिप्रणीतचार्वाकशा
स्त्रवत् । अंत्येऽनार्षत्वेपिवेदमूलकत्वेनस्मृतिवदस्यप्रामाण्यमव्याहतमेव । स्मृतीनांप्रामाण्यमपिवेदमूलकत्वेनैवनत्वृषिप्रणीतत्वेन । अ
न्यथाकणादप्रणीतशास्त्रस्यापिप्रामाण्यंस्यात् । तस्याप्रामाण्यंतुपराशरपुराणेबहुधाप्रपंचितमिति । ननुस्मृतीनामृषिप्रणीतत्वेसतिवेदा
विरुद्धार्थत्वेनप्रामाण्यमितिचेन्न । लाघवेनवेदाविरुद्धार्थकत्वेनतत्प्रामाण्यस्योचितत्वादित्यलमतिप्रसंगेन । अनयारीत्यास्मिन्सूरयोपि
आपाततःशास्त्रज्ञाअपिमुह्यंति । नतुयथार्थतःशास्त्रज्ञाइतिभावः । अथप्रकृतमनुसरामः । पुनराह। किंभूतंभागवतंस्वेननिजेनान्यत्रासं
स्थितेनधाम्नातेजसानिरस्तंदूरीकृतंधुंधुकार्यादीनांकुहकंप्रेतत्वादिलक्षणंयेनतत्तथा। यद्वानिरस्तानाममराणामपिकुहकंविस्मापकं। अहो
भागवतमहत्त्वंसर्वतोधिकमित्यर्थः । तदुक्तंपाद्मे । राज्ञोमोक्षंतथावीक्ष्यपुराधातातिविस्मितः॥सत्यलोकेतुलांबध्वातोलयत्साधनान्यजः॥
लघून्यन्यानिजातानिगौरवेणइदंमहत् ॥ तदाऋषिगणाःसर्वेविस्मयंपरमंययुः॥मेनिरेभगवद्रूपंशास्त्रंभागवतंक्षितौ ॥ पठनाच्छ्रवणात्सद्योवै
कुण्ठफलदायकम् ॥ इति । यद्वानिरस्तात्यक्ताकुर्भूमिर्यैस्तेनिरस्तकवःपितरस्तेषांभुवःस्पर्शाभाववत्त्वात्।कर्मणापितृलोकइतिश्रुत्युक्तपि
तृलोकस्यभूमेरुपरित्वात्पितरोनिरस्तभुवएव । तेषांहंहर्षंकरोतीतिनिरस्तकुहकं । येर्चयंतिगृहेनित्यंशास्त्रंभागवतंकलौ ॥ आस्फोटयं
तिवल्गंतितेषांप्रीताःपितामहाः ॥ यावद्दिनानिविप्रर्षेशास्त्रंभागवतंगृहे ॥ तावत्पिबंतिपितरःक्षीरंसर्पिर्मधूदकमितिस्कांदात् । हंहर्षेहरणे
ऽद्भुतइतिसौभरिः । हकमित्यत्रहपूर्वात्करोतेःकर्मणिडः । पुनःकिंभूतंसत्यंसत्यंज्ञानमनंतंब्रह्मेतिश्रुत्युक्तसत्यरूपब्रह्मस्वरूपं। त्रैकालाबाध्यं।
श्रीमद्भागवतस्याथश्रीमद्भगवतस्तथा ॥ स्वरूपमेकमेवास्तिसच्चिदानंदलक्षणमितिस्कांदात् । हरेर्वाङ्मयमूर्त्तित्वाद्वा । स्वकीयंयद्भवेत्ते
जस्तद्भैभागवतेदधात् ॥ तिरोधायप्रविष्टोयंश्रीमद्भागवतार्णवम् । तेनेयंवाङ्मयीमूर्त्तिःप्रत्यक्षावर्त्ततेहरेः । सेवनाच्छ्रवणात्पाठाद्दर्शनात्पा
पनाशिनीतिपाद्मे। तत्रैव श्रीमद्भागवतंशास्त्रंभगवद्रूपमुच्यते । पादादिजानुपर्यंतंप्रथमस्कन्धईरितः ॥ तदूर्ध्वंकटिपर्यंतंद्वितीयस्कन्धउ

च्यते । तृतीयोनाभिरित्युक्तश्चतुर्थउदरंमतम् ॥ पंचमोहृदयंप्रोक्तंषष्ठःकण्ठंसबाहुकम् ॥ सर्वलक्षणसंयुक्तंसप्तमोमुखमुच्यते ॥ अष्टमश्चक्षु
षीविष्णोःकपोलौभृकुटिःपरः ॥ दशमोब्रह्मरंध्रंचमनएकादशंस्मृतम् ॥ आत्मातुद्वादशस्कंधःश्रीकृष्णस्यप्रकीर्तितः ॥ इति । यद्वासत्यं
वेदरूपंवेदस्यापित्रैकालिकाबाध्यत्वं । शिवाद्याऋषिपर्यंताःस्मर्त्तारोस्यनकर्तृकाः ॥ इतिस्मृतेः । वाचाविरूपनित्ययेतिश्रुतेश्च । अना
दिनिधनानित्यावागुत्सृष्टास्वयंभुवा ॥ आदौवेदमयीदिव्यायतःसर्वाःप्रवृत्तयः ॥ इतिस्मृतेश्च । श्रुतौविरूपपदंसंबुद्ध्यर्थकंज्ञेयं । ऋचःसामा
निजज्ञिरइहश्रुतौजज्ञिरेइतिपदमाविरर्थकंनतूत्पत्तिपरमिति । शास्त्रयोनित्वादितिसूत्रेयोनिपदंप्रमाणपरंशास्त्रंयोनिःप्रमाणंयत्रेत्यर्थः । यो
निःस्यात्कारणेतोयेप्रमाणेस्मरमंदिरइतिविश्वहैमौ । यद्वाइदंभागवतंनामपुराणंब्रह्मसंमितमितिवक्ष्यमाणत्वाद्ब्रह्मसंमितंवेदतुल्यं । तेनवेदा
क्षराणियावंतिपठितानिद्विजोत्तमैः ॥ तावंतिहरिनामानिकीर्त्तितानिनसंशयः ॥ इतिशौनकस्मृतेः । प्रत्यक्षरंहरिनामोच्चारणफलदमि
तिध्वनितम् । किंचात्रगायत्र्यर्थस्यवर्णनादपिगायत्र्याश्चगायत्रीवाइदंसर्वमित्यादिश्रुतेस्सर्ववेदरूपत्वादस्यत्रैवर्णिकानामेवाधिकारःपा
ठे । श्रवणेतु श्रावयेच्चतुरोवर्णान्कृत्वाब्राह्मणमग्रतः ॥ इतिसंहितोक्तेःशूद्रस्यापीति । नन्विदंवेदरूपंचेत्तर्हिकथंशौनकाद्यैस्त्रैवर्णिकाद्रोमहर्ष
णात्सूतादेतच्छ्रुतंनहीनतःपरमभ्याददीतेतिश्रुतेर्हीनजातेःपरोपदेशोनिषिद्धत्वात् । सूतस्यतुब्राह्मण्यांक्षत्रियाज्जातःसहिसूतउदाहृतइति
स्मृतेर्विलोमजातत्वाद्धीनत्वंस्फुटमेव । तत्कथंस्मार्त्तैस्तच्छ्रुतमितिचेन्न । रोमहर्षणोग्रश्रवसोर्नजातिसूतत्वं । तदुक्तंवायुपुराणे । वैन्य
स्यतुपृथोर्यज्ञेवर्त्तमानेमहात्मनः ॥ सुत्यायामभवत्सूतःप्रथमंवर्णवैकृतम् ॥ ऐंद्रेणहविषातत्रहविःपृक्तंबृहस्पतेः ॥ जुहावेंद्रायदैवेनततःसूतो
व्यजायत ॥ शिष्यहव्येनसंपृक्तमभिभूतंगुरोर्हविः ॥ अधरोत्तरचारेणजज्ञेतद्वर्णवैकृतमिति । अग्निकुण्डसमुद्भूतसूतनिर्मलमानसेतिपुरा
णांतराच्चरोमहर्षणोब्राह्मण्यांक्षत्रियाज्जातःसूतइत्युक्तलक्षणःसूतोन । किंत्वग्निजः । ब्रह्मासनार्हतातुब्राह्मणसंकल्पादेवधृष्टद्युम्नस्यक्षत्रिय
त्ववत् । यच्चनीचादप्युत्तमांविद्यामाददीताविचारयन्नित्युक्तंतद्वृत्त्युपयोगिविद्यापरमापत्परंवाबोध्यं । किंचसूतवधाद्बलदेवेनब्रह्महत्याव्र

१ ब्राह्मणता ।



तमपिकृतंतस्याविप्रत्वेतन्नसम्पद्यते । यद्येतद्ब्रह्महत्यायाःपावनंलोकपावन ॥ चरिष्यतिभवाँल्लोकसंग्रहोनान्यचोदितः ॥ इतिश्रीदशमवे
क्ष्यमाणत्वात्तस्यविप्रत्वंनिश्चीयते ॥ अग्निर्वैब्राह्मणइतिश्रुतेस्तस्याग्निकुण्डोद्भूतत्वाद्वाब्राह्मणत्वम् । तत्रसूतशब्दप्रयोगस्तुसूताःपौरा
णिकामताइतिस्मृतेःपौराणिकाःप्राचीनवृत्तवक्तारइत्यर्थः । कथाप्रवक्तृसाम्येनबोध्यं । जातिसूतेषुपौराणिकपदप्रयोगस्तुप्राचीनराज्ञामु
त्साहौदार्यादिवर्णनादेव । यच्चमन्येत्वांविषयेवाचांस्नातमन्यत्रछांदसादिति वक्ष्यतितस्यायमाशयः । यद्यपिजातिसूतस्यैवछांदसानाधि
कारोनतुतव । तथापिसूतशब्दप्रयोगात्त्वय्युपचर्यतेऽतएवश्रीमहाभारतव्याख्यातृभिःश्रीनीलकण्ठाचार्यैरुग्रस्यनृसिंहतापनीयोपनिष
त्प्रतिपाद्यस्यश्रवःश्रवणंयस्येत्युग्रश्रवाइतिसूतनामार्थःकृतः किंचकस्मादसाविमान्विप्रानध्यास्तेप्रतिलोमजइतियत्कथनंतदपिसूतशब्दा
प्रयोगादेव । किंबहुनापुराणानांप्रवक्तृत्वेवरयेद्ब्राह्मणंगुरुमितिव्याकोपापत्तेः । सूतोब्राह्मणसंकल्पादुत्पत्तिसमयेब्राह्मणएवजातइत्यलंप्रकृ
तानुपयुक्तेन । गायत्र्यर्थमाहसवितृपदंजगत्प्रसवकारणपरंतदर्थोजन्माद्यस्ययतइत्यनेनपालनादिक्रीडार्थकदेवपदार्थोप्यनेनैवजन्मादीत्या
दिपदेनपालनादिग्रहात् । वरेण्यपदार्थःपरपदेनपरत्वोपादकानिसत्यादिपदानि । भर्गपदार्थोधामपदेनधीमहीतिपदंस्वरूपेणैव । तेनब्रह्म
हृदेत्यादिनासमष्टिहिरण्यगर्भबुद्धिप्रेरकत्वोक्तेःसर्वव्यष्टिबुद्धिप्रेरकतात्वर्थसिद्धेतिभावः । ननुग्रंथोष्टादशसाहस्रःश्रीमद्भागवताभिधइतिल
क्षणोक्तेरष्टादशसहस्रगणनात्वित्थंकार्या । तथाहिदीर्घवृत्तगद्यानुष्टुप्छन्दःसमूहेग्रंथेद्वात्रिंशदक्षरात्मिकानुष्टुप्परिमाणेनगणनायांपञ्चोनद्वि
शत्युत्तरषोडशसहस्रसंख्या १६१९९ सम्पद्यते उवाचमंत्राःसप्तत्यधिकद्वादशशतसंख्याकाः १२७० अर्द्धश्लोकाःशतद्वयसंख्या २००
इतिश्रीमद्भागवतेऽमुकस्कन्धेप्रथमादिरध्यायइतिवाक्यानामपिव्यासप्रोक्तत्वाद्ग्रन्थसंख्यांतर्गतत्वेनतत्संख्या ३३५पंचत्रिंशदुत्तरत्रिंशती
संकलनयाऽष्टादशसहस्रंसंख्या १८००० संपत्तिरिति । यद्वाचंडीसप्तशतीन्यायेनमंत्रविभागेनापियमेवसंख्यासंभाव्यते । तथाहि अनष्टुप्
श्लोकगद्यार्धारूपमंत्राएकादशसहस्राणिद्विसप्तत्युत्तरेद्विशतीच ११२७२ दीर्घवृत्तश्लोकानांषट्पञ्चाशदधिकसप्तविंशति २७५६ संख्या
कानामर्द्धकानिमंत्राद्वादशाधिकसार्द्धपंचसहस्राणि ५५१२ अनुष्टुबर्द्धकानिएकादशाधिकाद्विशती २११ उवाचमंत्राणांसप्तत्याधिकद्वादश

शतसंख्यानांमध्येपञ्चषष्ट्युत्तरद्विशतानामनुवादरूपाणांपुरोवादशेषतयातावतोविहायावशिष्टाउवाचमंत्राःपंचोत्तरसहस्रं १००६ संकलनयाष्टादशसहस्राणि १८०००आपाततएवंसंख्या। तेनतत्तदध्यायेषुतत्तन्मन्त्रगणनयासंख्योनाधिक्यसंकलनमूह्यम्। यत्तुशारीरकेभागवतमतनिरसनंतद्धयग्रीवपंचरात्रेगणितभागवताख्यतंत्रस्यैवेतितत्रैवस्पष्टम्। किंचसर्गादीनिदशलक्षणान्यप्येतेनसूचितानि। जन्माद्यस्ययतइत्यनेनसर्गविसर्गस्थानानितृतीयचतुर्थपंचमस्कन्धव्युत्पाद्यानिसूचितानि। तेनेब्रह्महृदायआदिकवयइत्यनेनभक्तानुग्रहलक्षणंपोषणंषष्ठस्कन्धव्युत्पाद्यं। मुह्यंतियत्सूरयइत्यनेनकर्मवासनारूपागतिःसप्तमस्कन्धव्युत्पाद्यामन्वंतरेशानुकथेऽष्टमनवमस्कन्धप्रमेयेस्थानमध्येएवांतर्भूते। तेजोवारिमृदांविनिमयइत्यनेनानिरोधोदशमस्कंधार्थोदर्शितः। धाम्नास्वेनसदानिरस्तकुहकमित्यनेनमुक्तिरेकादशस्कंधार्थोदर्शिता। सत्यंपरमित्यनेनद्वादशस्कंधार्थोदर्शितः। धीमहीत्यात्मनेपदोत्तमपुरुषप्रयोगादधिकारीप्रथमस्कन्धार्थोदर्शितस्तेनैवस्वध्यानोपलक्षितसाधनानुष्ठानरूपोद्वितीयस्कंधार्थकथनात्कृत्स्नभागवतार्थसूचनमनेनश्लोकेनक्रियते। अतोस्यैकस्यापिपाठोबहुपाठाभावेकार्यएवसबलोद्यमैर्बहुपाठोऽलसैश्चतुःश्लोकीपाठोत्यंतालसैःस्वजन्मसाफल्यावाप्तयेऽयमेकएवान्वहंपठितव्यइतिध्येयम्। अतएवोक्तंस्कांदेश्लोकंवाश्लोकमर्द्धंवानित्यंभागवतोद्भवम् ॥ यःपठेद्वैनरोभक्त्यासगोदानफलंलभेदित्यादिबहुशउक्तं। केचित्त्वष्टादशसहस्ररूपतयावर्णनेश्रीगोपालाष्टादशाक्षरमन्त्रव्याख्यानरूपमेतदितिवर्णयन्ति। तच्चगोपालतापन्युपनिषदादौद्रष्टव्यमिति। प्रसंगादस्यवक्तृश्रोतृश्रवणस्वरूपमाह। वक्तारंवैष्णवंविप्रंविशुद्धोभयवंशजम् ॥ सोर्ध्वपुंड्रंसुशीलंचकुर्यात्कृष्णजनप्रियमितिसंहितायां। स्कांदेतुभगवन्मतिरनपेक्षःसुहृदोदीनजनेषुसानुकंपः ॥ बहुधाबोधनचतुरोविप्रोवक्तास्मृतोविज्ञैरिति। श्रोतारोथनिरूप्यंतेश्रीमद्विष्णुकथाश्रयाः ॥ प्रवराअवराश्चेतिश्रोतारोद्विविधामताः ॥ प्रवराश्चातकोहंसःशुकोमीनादयस्तथा ॥ अवरावृकभूरुंडवृषोष्ट्राद्याःप्रकीर्त्तिताः ॥ अखिलोपेक्षयायस्तुकृष्णशास्त्रश्रुतौव्रती ॥ सचातकोयथांभोदमुक्तेपाथसिचातकः ॥ हंसःस्यात्सारमादत्तेयःश्रोताविविधाच्छ्रुतात् ॥ दुग्धेनैक्यंगतात्तोयाद्यथाहंसोऽमलंपयः ॥ शुकःसुष्ठुमितंवक्तिव्यासंश्रोतॄंश्चतोषयन् ॥ सुपाठितःशुकोयद्वच्छिक्षकंपार्श्वगानपि ॥ शब्दंनानिमिषोजातुकरोत्यास्वादयन्रसम् ॥ श्रोतास्निग्धोभवेन्मीनोमीनःक्षीरनिधौयथा ॥ यस्तुदन्रसकाञ्छ्रोतॄन्विरौत्यज्ञोवृकोहिसः ॥ वेणुस्वनरसात्यक्तान्वृकोरण्येसगान्यथा ॥ भूरुण्डः शिक्षयेदन्यान्श्रुत्वानस्वयमाचरेत् ॥ यथाहिमवतःशृंगेभूरुंडाख्योविहंगमः ॥ सर्वंश्रुतमुपादत्तेसारासारांधधीर्वृषः ॥ स्वादुद्राक्षांखलिंचापिनिर्विशेषंयथावृषः ॥ सउष्ट्रोमधुरंमुंचन्विपरीतेरमेतयः ॥ यथानिंबंचरन्नुष्ट्रोहित्वाम्रमपितद्युतम् ॥ अन्येपिबहवोभेदाज्ञेयाभृंगखरादयः ॥ विज्ञेयास्तत्तदाचारैस्तत्तत्प्रकृतिसंभवैः ॥ यःस्थित्वाभिमुखंप्रणम्यविधिवत्त्यक्तान्यवादोहरेर्लीलांश्रोतुमभीप्सतेऽतिनिपुणोनम्रोविनीतांजलिः॥ शिष्योविश्वसितोनुचिंतितपरःप्रश्नेनुरक्तःशुचिर्नित्यंकृष्णजनप्रियोनिगदितः श्रोतासवैवक्तृभिः ॥ किंच। अवैष्णवमुखाच्छास्त्रंनश्रोतव्यंकदाचन ॥ शुकशास्त्रंविशेषेणनश्रोतव्यमवैष्णवात् ॥ वैष्णवोत्रद्विजोज्ञेयोयोविष्णोर्मुखमुच्यते ॥ ब्राह्मणोस्यमुखमितिश्रुतेर्ब्राह्मणएवसः ॥ गृहीतविष्णुदीक्षाकोभेदबुद्धिविवर्जितः ॥ कुटुंबीशांतचित्तश्चविप्रोवक्ताभवेत्सदा॥यावद्विप्रमुखेशास्त्रंशास्त्रत्वंतावदेवहि ॥ विप्रेतरगतंशास्त्रमशास्त्रत्वंप्रपद्यते ॥ यथापतिरतासाध्वीह्यन्यथास्वैरिणीस्मृता॥ अत्रविप्रपदंक्षत्रियवैश्ययोरप्युपलक्षणंतयोरपिद्विजातित्वेनशास्त्राधिकारित्वात्परंतुश्रावणेविप्रस्येवाधिकारोपिवक्तारंवैष्णवंविप्रमितिपूर्वमुक्तत्वात्। कौसीदंभिषजंभृत्यंगणकंदेवलंतथा ॥ अब्राह्मणाधीतविद्यंनिंदकंसर्वथात्यजेत्। वक्तारंब्राह्मणमपिनिर्जरायुधधारिणमितिसर्वसंहितायांस्कांदादौबहुधाप्रपंचितमतउपरम्यते॥अथभागवतपदार्थमाह॥भाशब्दःकीर्तिवचनोगशब्दोज्ञानवाचकः। सर्वेष्टवचनोवश्चतोविस्तारस्यवाचकः॥ कीर्तेर्ज्ञानस्यसर्वेष्टस्यचविस्तारणादिदम् ॥ अस्यभागवतंनामश्रीव्यासेनेतिकीर्तितम् ॥ धर्मार्थकाममोक्षांश्चवक्तिवर्णचतुष्टयी। तेप्राप्यन्तेयतोनेनतस्माद्भागवतंस्मृतम् ॥ श्रवणमाह। कृष्णार्थिनोगुणस्यात्रप्रेमैवविधिरुच्यते ॥ आसमाप्तिंसकामैस्तुकर्त्तव्यःस्यादयंविधिः ॥ स्नातोनित्यक्रियांकृत्वाप्राश्यपादोदकंहरेः ॥ पुस्तकंचगुरून्विप्रान्पूजयित्वोपचारतः॥ब्रूयाद्वाशृणुयाद्वापिश्रीमद्भागवतंमुदा ॥ पयसावाहविष्येणमौनभोजनमाचरेत् ॥ ब्रह्मचर्यमधः सुप्तिः क्रोधलोभादिवर्जनम् ॥ कथांतेकीर्तनंनित्यंसमाप्तौजागरंचरेत् ॥ ब्राह्मणान्भोजयित्वातुदक्षिणाभिश्चतोषयेत् ॥ गुरवेवस्त्रभूषादिदत्वागांचसमर्पयेत् ॥ एवंकृतेविधानेतुलभतेवांछितंफलम् ॥

दारागारसुताराज्यंधनानितुयदीप्सितम् ॥ परंतुशोभतेनात्रसकामत्वंविडंबनमिति॥ किंच।सुमुहूर्तेकथारम्भःकार्यःश्रद्धासमन्वितैः ॥ एत
स्यश्रवणंप्रोक्तंचतुर्द्धामुनिसत्तमैः ॥ सात्विकंराजसंचैवतामसंनिर्गुणंतथा ॥ चतुर्विधंतुविज्ञेयंश्रीभागवतसेवनम् ॥ सप्ताहंराजसंप्रोक्तंताम
संसालसंतुयत् ॥ सात्विकंत्वेकविंशाहंतथैवाष्टादशाहकम् ॥ तथापंचदशाहंचानियतंनिर्गुणंमतम् ॥ राजसेत्वर्थसंकोचस्तामसेस्मृतिविभ्र
मः ॥ सात्विकंसुखबोधायनिर्गुणंसर्वतोवरमितिस्कांदेकौशिकसंहितायांचबहुशोनिरूपितमिति ॥ प्रसंगादस्यदानमाह । शक्तोस्यदानंकुर्वी
तमहादानविधानतः ॥ सहस्रहेमनिष्केणतदर्द्धार्द्धेनवापुनः ॥ चतुर्विंशतिनिष्कैर्वाथवाद्वादशभिःपलैः ॥ यद्वापलत्रयेणापिकृत्वासिंहास
नंवरम् ॥ तन्मध्येस्थापयेच्छास्त्रंरौप्यपट्टिकमध्यगम् ॥ क्षौमांबरसमाच्छन्नमर्चितंचन्दनादिभिः॥संपूज्यविप्रंविधिवद्वेदवेदांगपारगम् ॥
तद्व्याख्यानरतंशांतंविष्णुभक्तिपरायणम् ॥ स्थालीपाकविधानेनहोमंकुर्यात्प्रयत्नतः ॥ दद्याद्भागवतंतस्मैपूजितायकुटुंबिने ॥ गोदान
फलमाप्नोतिश्रोताप्रत्यक्षरंनरः ॥ अध्यायेनाश्वमेधस्यस्कन्धेनानंतयागजम् ॥ समग्रश्रवणेनैवजीवन्मुक्तोभवेन्नरः ॥ श्रवणेयत्फलंप्रोक्तं
दानेतद्द्विगु भवेत् ॥ लिखित्वालेखयित्वावादद्याद्भागवतंनरः ॥ प्रौष्ठपद्यांपौर्णमास्यांकार्तिक्यादिषुवापुनः ॥ दाताफलमवाप्नोतिसर्व
पौराणदानजम् ॥ गृहीतालभतेमोक्षंपाठादिनिरतोयदि ॥ सर्वान्कामानवाप्नोतिदाताभागवतस्यच ॥ पुस्तकंवृत्तिहेतुत्वाद्देयंविप्रायमा
नवैः ॥ विप्रस्यवृत्तिकरणात्कोटिगोदानजंफलम् ॥ किंच । ब्रह्मवर्चस्वितावाप्त्यैगायत्रीजप्यतेतथा ॥ तथेदमपिजप्तव्यंतद्रूपत्वाद्द्विजोत्त
मैः । किंच।नयस्यतिष्ठतेशास्त्रंगृहेभागवतंमुने ॥ सकथंवैष्णवोज्ञेयइत्थंप्राहस्वयंशिवः ॥ संध्यावन्दनवन्नित्यंश्रोतव्यंवैष्णवैर्नरैः ॥ संध्या
हीनोयथाविप्रोह्यनर्हःसर्वकर्मसु ॥ वैष्णवोपितथानर्हःश्रीमद्भागवतंविना॥श्रीकृष्णचंद्रोभगवान्यथाभागवतश्रवात्॥ प्रीयतेनतथान्यैश्ववि
विधैरपिपूजनैरितितंत्रांतरोक्तेः । अन्यच्चोक्तम् । विष्णोःपूजासमाप्तिर्हिश्रीमद्भागवतस्यवै ॥ श्रावणादन्यथापूजासांगानैवकदाचन ॥ पू
जानामपराधांश्चक्षमतेसर्वथाहरिः ॥ श्रीमद्भागवतश्रावाद्विप्रवर्यमुखोद्गतात् ॥ अतोनित्यंभगवदग्रेश्रीमद्भागवतंवदेत् ॥ किंच । विधिहीना
पिसांगास्याद्धरेःपूजाकृतामुने॥शुकशास्त्रप्रभावेनकलौब्राह्मणसत्तम॥ विधिनापिकृताव्यंगाविनाभागवतश्रुतिम् ॥ बहुनाकिमिहोक्तेनपूजा



सांगत्वसिद्धये ॥ श्रीकृष्णेनोद्धवायोक्तमेतद्वृत्तंद्विजोत्तम ॥ मत्कथाःश्रावयञ्छृण्वन्मुहूर्त्तंक्षणिकोभवेत् ॥ किंच वक्तारंपूजयेन्नित्यंसर्वभोगै
र्द्विजोत्तमम् ॥ नचानर्प्यंस्वयंभोज्यंवस्त्रान्नाभरणादिकम् ॥ श्रोतृभिःसर्वथाविप्रभोक्तारःप्रत्यवायिनः ॥ पेयंपूयंमलंभक्ष्यंभूषास्थिकृत्ति
चांबरम्॥तस्यानर्प्यैर्हयोवक्रेपुराणादेर्निजांतिके ॥ सदाभुंक्तेनरोविप्रवक्ताविष्णुर्यतःस्वयम् ॥ मुख्योगुरुर्बोधयिताधर्माणांसर्वतोह्ययम्॥
वक्तरिप्रीणितेसर्वंफलमाप्नोतिनान्यथेतिसर्वसंहितास्कांदादौस्थितमत्रबहुवक्तव्यमस्तितदलंप्रपंचेन ॥ इतिश्रीमद्भागवतपक्षः ॥ ४१ ॥
अथव्यासस्तदुपर्यपिबादरायणःसंभवादितिसूत्रेयथास्वयमेवस्वमतंप्रमाणयन्नुवाचतथात्रापिबोध्यं। सर्वकालीनताविहितस्त्वनुयुगंसहिस
त्यवत्यामित्युक्तेर्वात्मानंभगवदवतारंमन्वानआत्मानमेवध्यायति । वयंतंव्यासंसदाहृदाधीमहि । सत्यज्ञानमितिसंज्ञानंतद्ददातीतिसदाई
श्वरःअहंज्ञानप्रदोगुरुरितिभगवदुक्तेःसदाशब्दस्सोमपावत्क्विंतः।सदिहृत्सदाहृत्तयासदाहृदाईश्वरदृष्टयाहृच्छब्दोदृशावित्युक्तमधस्तात्
व्यवहिताश्छन्दसीत्युक्तेर्व्यवहितस्यापिहृच्छब्दस्यसमासः।वेदरूपत्वादस्य तंकंयत्रत्रयाणांश्रुतिस्मृतीतिहासानांसर्गोऽमृषा सर्गोत्रप्राक
ट्ये।इतिहासपुराणानांव्यासःप्राकव्यकृन्मतइतिसिद्धांतदर्पणे।कथंयथातेजोवारिमृदामविनिमयोऽमृषा। यतोव्यासस्यान्वयात्सेवनादितर
तइतरवत्प्रतीयमानोपिसूतःअर्थेषुसर्वार्थेष्वभिज्ञोजातः । यश्चाद्यस्यवेदस्यजन्माविर्भावंचकारेतिशेषः।चतुर्विधरूपेणाविश्वकार । व्यदधा
द्यज्ञसंतत्यैवेदमेकंचतुर्विधमितिवक्ष्यमाणत्वात् । यश्चव्यासःस्वराड्विष्णुरेव । व्यासोनारायणःस्वयमित्युक्तेः । कृष्णद्वैपायनंव्यासंविद्धिना
रायणंप्रभुम् । इतिपुराणांतरोक्तेश्च ॥ यआदिसनातनंब्रह्मतद्रूपंभागवतंकवयेविवेकवतेशुकायात्मजायतेनेवितस्तार । ससंहितांभागवतीं
कृत्वानुक्रम्यचात्मजम् ॥ शुकमध्यापयामासनिवृत्तिनिरतंमुनिः । इतिवक्ष्यति ॥ यत्रभागवतेसूरयोविद्वांसोपिमुह्यंति । तत्तात्पर्यान
नुगमादितिभावः । किंभूतंस्वेनधाम्नातेजसानिरस्तमपास्तंलोकानांकुहकमज्ञानंयेनतं । पुनःपरंनिजोपदेशेनसर्वपालकं । परःस्यात्सर्वपा
लकइत्यभिधानात् । पुनःसत्यंचिरंजीविषुगणितत्वाद्भगवदवतारत्वाद्वा ॥ इतिव्यासपक्षः ॥ ४२ ॥ ॥ ॥
॥ अथ शुकपक्षः ॥ ॥ वयंतंशुकंधीमहि । ननुस्वपुत्रस्यशुकस्यध्यानंकथंव्यासःकृतवानित्यतआह ॥ किंभूतंपरंब्रह्मरूपंब्रह्मवित्त्वा

त्। ब्रह्मविद्ब्रह्मैवभवतीतिश्रुतेः । ज्ञानीत्वात्मैवमेतमितिस्मृतेश्च अतएववसुदेवाद्यैर्ब्रह्मरूपत्वादेवश्रीकृष्णादीनांपुत्रतामाप्तानामपिस्तु
तिःकृतेतिज्ञेयम् । पुनःसत्यंसर्वदावर्तमानंमहायोगित्वात् । योगिनोहियोगबलेनसदातिष्ठंति । तदुक्तं योगिनांसर्वदास्थितिरितियोग
सिद्धांते । सतुमहायोगीतस्यसर्वदास्थितौशंकैवनोदेति । महायोगित्वंतुतस्यसांनिध्यात्तेमहायोगिन्नितिपरीक्षिदुक्तेः । तस्यपुत्रोमहायो
गीसमदृङ्निर्विकल्पकः । इतिसूतोक्तेश्चज्ञायते ॥ पुनःकिंभूतंस्वेनधाम्नानिजेनप्रकाशेनस्वात्मानंदप्रकाशेननिरस्तंकुहकंजन्ममरणल
क्षणंयस्यतं । नसपुनरावर्ततइतिश्रुतेः । नजायतेम्रियतेवाकदाचिदितिस्मृतेश्च॥ज्ञानिनोजनिमृतीनस्तः । एतद्विशेषणंसत्यत्वेहेतुरेव ।
यःशुकःस्वराट्स्वयमेवराजतेप्रकाशतेइतिस्वराट् ॥ नत्वन्येन्यबोध्यतेकिंत्वज्ञैरप्ययंज्ञानीतिज्ञायतेकिंपुनर्विज्ञैरिति । अतएवस्नांतीभि
र्देवीभिस्तंनिरस्ताज्ञानंज्ञात्वैववस्त्राणिनपरिधत्तानीतितदग्रेस्फुटीभविष्यति ॥ दृष्ट्वानुयांतमृषिमात्मजमप्यनग्नंदेव्योह्रियापरिदधुर्नसुत
स्यचित्रम् ॥ तद्वीक्ष्यपृच्छतिसुनौजगदुस्तवास्तिस्त्रीपुंभिधानतुसुतस्यविविक्तदृष्टेः । इति॥ यश्चार्थेषुनिवृत्तिमार्गेष्वभिज्ञोज्ञाताकुंठमे
धस्त्वात् । प्रशांतमासीनमकुंठमेधसमित्युक्तेः।अत्रार्थशब्दोनिवृत्त्यर्थकः। यद्वाऽर्थेषुधर्मादिष्वभितोनियोजयंति। लोकानिति तथावनी
यस्त्वात् । धर्मार्थकाममोक्षांश्चमांयाचध्वंददाम्यहम् ॥ इतियःप्रवदेद्दातासवनीयानितिस्मृतइतिलक्षणात् ॥ तंकंयत्रत्रयाणांगुणानां
सर्गोदेहादिर्मृषातस्यात्मनिष्ठत्वात् । कथंयथातेजोवारिमृदांविनिमयःकार्यंमृषेति । ननुतस्यात्मनिष्ठत्वेदेहादिस्थितिःकथंतत्रवक्ष्यति ।
देहोपिदैववशगःखलुकर्मयावत्स्वारंभकंप्रतिसमीक्षतएवसासुः ॥ तंसप्रपञ्चमधिरूढसमाधियोगःस्वाप्नंपुनर्नभजतेप्रतिबुद्धवस्तुः । इ
ति ॥ यश्चकवयेविदुषेपरीक्षिन्नृपायादिसनातनं ब्रह्मश्रीमद्भागवतंतेनेह्रदास्नेहेन ॥ हृत्स्नेहेचसुहृद्बंधुमनोदृष्टिहरिष्वपि ॥ इत्यभिधानचिं
तामणेः सचकोंकणदेशेपरीक्षितेशापंश्रुत्वास्नेहात्तत्रागत्यतमुपदिदेशेतियोगवासिष्ठे ॥ यत्रसूरयोमुह्यन्ति यश्चशुकइतरतःप्रशांतमतिःकिं
भूतायजन्मादीनिजन्मस्थितिलयान्यस्यंतेक्षिप्यंतेतिरस्क्रियंतेऽनेनेतिजन्माद्यस्यज्ञानंतस्मैयततइतिजन्माद्यस्ययः । अत्रडप्रत्यय
स्ततश्चतुर्थ्यर्थेतसौकृतेजन्माद्यस्ययतइतिस्यात् । शुद्धंचतत्रामृशताभियुक्ताइतितदुक्तेरेवज्ञायतेतस्यज्ञानयत्नः । शुद्धंतुज्ञानमेवनहि

ज्ञानेनसदृशंपवित्रमिहविद्यते ॥ इतिश्रीमुखोक्तेः ॥ इतिशुकदेवपक्षः ॥ ४३ ॥ ॥छ॥ ॥छ॥
॥ अथर्षभदेवपक्षः ॥ ॥ वयंतमृषभरूपंपरंपरमेशंसदासत्यंहृदाधीमहि ॥ परोरिपरमेशयोरितिहलायुधः तंकंयत्रर्षभेत्रयाणांक्रोधलोभमोहा
नांसर्गोमृषा । तस्यपारमहंस्याश्रमधर्मनिष्ठत्वेनज्ञानिवरत्वात्। लोभादयोयेबुधलिंगभावाइतिकृष्णंप्रतिजिष्णूक्तेरज्ञानिन्येवसंतीतिभावः।
कथंयथातेजोवारिमृदांविनिमयोमृषा । किञ्चयतोयस्याद्यस्यादिराजस्यमनोरन्वयाद्वंशाज्जन्म । तथाहिमनोःप्रियव्रतस्तस्याग्नीध्रस्त
तोनाभिर्नाभेर्ऋषभइत्यग्रेवक्ष्यति।एतत्तेआदिराजस्यमनोश्चरितमद्भुतम् ॥ इतिमैत्रेयोक्तेर्मनोरादिराजत्वं यश्चेतरतोवस्तुतोविरक्तोप्यर्थेषु
प्रजापालनादिष्वभिज्ञोऽभिमतोनियोजकःलोकसंग्रहार्थत्वात् । वक्ष्यतिच । अथहभगवानृषभदेवःस्ववर्षंकर्मक्षेत्रंमन्यमानःप्रदर्शितगुरुकु
लवासोलब्धवरैर्गुरुभिरनुज्ञातोगृहमेधिनांधर्माननुशिक्षयमाणोजयंत्यामिंद्रदत्तायामात्मजानामात्मसमानांशतंजनयामास ॥ इति । किंच
भगवानृषभसंज्ञआत्मतंत्रःस्वयंनित्यनिवृत्तानर्थपरंपरःकेवलानंदानुभवईश्वरएवविपरीतवत्कर्माण्यारभमाणःकालेनानुगतधर्ममाचरणेनो
पशिक्षयन्नतद्विदांशमउपशान्तोमैत्रःकारुणिको धर्मार्थयशःप्रजानंदामृतावरोधेनगृहेषुलोकंन्ययमयत् । यद्यच्छीर्षण्याचरितंतत्तदनु
वर्त्ततेलोकइति । यःस्वराट्स्वस्मिन्राजयतिरागयुक्तान्करोतिलोकानितिस्वराट्। राजृरागेपिधातूनांनेकार्थत्वात् । तद्वक्ष्यतिभगवत
र्षभेणपरिरक्ष्यमाणएतस्मिन्वर्षेनकश्चनपुरुषोवांछत्यविद्यमानमिवात्मनोऽन्यस्मात्कथञ्चनाकिमपिकर्हिचिदवेक्षतेभर्तर्य्यनुसवनंविजृंभि
तस्नेहातिशयमंतरेण ॥ इति यश्चकवयेइतिछंदोरूपत्वादस्यबहुत्वेएकत्वात्कविभ्योविद्वद्भ्योनिजात्मजेभ्यआदिसनातनंब्रह्मज्ञानं । ना
यंदेहोदेहभाजांनृलोकेकष्टान्कामान्नार्हतविड्भुजांये ॥ तपोदिव्यंपुत्रकायेनसत्त्वंशुध्येद्यस्माद्ब्रह्मसौख्यंत्वनन्तं॥ इत्यादिसप्तविंशातिश्लोकै
स्तेने । यस्मिन्ज्ञानेसूरयोपिमुह्यंति । पुनःकिंभूतंस्वेननिजेनपरमानंदरूपेणधाम्नातेजसानिरस्ताःकुहकालोकविस्मापकाःसिद्धयों
तर्द्धानपरकायप्रवेशाद्यायेनतं। योगैश्वर्याणिवैहायसमनोजवांतर्द्धानपरकायप्रवेशदूरग्रहणादीनियदृच्छयोपगतानिनांजसानृपहृदयेनाभ्य
नन्दत् । इतिवक्ष्यमाणत्वात् ॥ ॥ इत्यृषभपक्षः ॥ ४४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ अथपृथुपक्षः ॥ ॥ वयंतंपृथुंसदाहृदाधीमहि । तंकंयत्रत्रयाणामुत्तममध्यमाधमानांसर्गोनिश्चयोमृषासमः । समानोत्तममध्यमाधमाःसुखेदुःखेचेतिभगवदुपदेशात्तत्रतथात्वमस्त्येव । यथोक्तग्राहित्वात् । कथंयथातेजआदिकार्यंमृषा । यतोयोजन्मनामवताराणामाद्यस्यसर्वावताराादिभवस्यसनत्कुमारस्यान्वयात्सेवनादादिसनातनं ब्रह्ममोक्षोपयोगिज्ञानमायेज्ञातवान्अयगतौअत्रप्रथमार्थेतसिः । सएवप्रथमंदेवःकौमारंसर्गमास्थितः ॥ इत्युक्तेस्सनत्कुमारस्याद्यत्वमस्ति । जनिजन्मसमुद्भवाः ॥ भवावतारौप्रसवइतिकोशात् । यस्मिन्ब्रह्मणिसूरयोमुह्यंति । किंभूतंब्रह्मइतरतइतरेष्वर्थेषुधर्मादिषुसत्यं त्रैवर्ग्योर्थोयतोनित्यंकृतांतभयसंयुतः ॥ तत्रापिमोक्षएवार्थआत्यन्तिकतयेष्यते ॥ इतिवक्ष्यमाणत्वात् ॥ यश्चाभितःप्रजानांधर्मेनियोजनादभिज्ञः । तच्च सभ्याःशृणुतभद्रंवस्साधवोयइहागताः ॥ इत्यारभ्य बहुभिःश्लोकैस्तच्चरितेस्फुटीभविष्यति । ज्ञानियोगेऽत्रज्ञेयः । यश्चस्वराट्चक्रवर्ती सएवमांहंतुमुदायुधःस्वराडितिपृथिव्युक्तेः । यःकवयेकविभ्यस्तोतृभ्यःसूतादिभ्यःपरम्परमेशमेवस्तुत्यत्वेनतेनेप्रकाशितवान् । कवयइत्येकत्वंसामान्याभिप्रायेण । तच्चभोसूतहेमागधसौम्यबन्दिन्नित्युक्त्वासत्युत्तमश्लोकगुणानवादेजुगुप्सितंनस्तवयन्तिसभ्याइत्युक्त्वाचकर्मभिःकथमात्मानंगापयिष्यामबालवत्॥ इत्यंतेनस्फुटयिष्यंतिकिंभूतंस्वेनधाम्नातेजसानिरस्तादूरीकृताःकोर्भूमेर्हकाआच्छादकाःपर्वतायेनतं योलीलयाद्रीन्स्वशरासनकोव्याभिंदन्समांगामकरोदितिवक्ष्यमाणत्वात् । कुंहंतीतिकुहाअत्राच्छादनार्थाद्धंतेर्डस्ततःस्वार्थेकः ॥ इतिपृथुपक्षः ॥ ४९ ॥ ॥ ॥

॥ अथध्रुवपक्षः ॥ ॥ वयंतंध्रुवंधीमहिसदाहृदामनसा । तंकंयत्रत्रयाणांसुरुच्युत्तमोत्तानपदांसर्गोरज्यादानरूपोमृषा । यथातेजआदिकार्यंमृषा । तच्चतच्चरितेस्फुटंभविष्यति । तत्रत्यवाक्यानिविस्तरभियानोदाहृतानि । यतःयस्यान्वयादाद्यस्यादिराजस्यपृथोर्जन्मासीत् । अयंतुप्रथमोराज्ञांपुमान्प्रथयिताशयःपृथुर्नामेत्युक्तेः । सआदिराजोरचितांजलिर्हरिंश्रुत्वाादिराजस्ययशोविजृंभितम् ॥ किंचेत्यादिराजेननुतःसविश्वदृगित्यादिवाक्यात्पृथोरादिराजत्वं । योध्रुवइतरतोनैष्ठिकान्नारदादर्थेषुभगवत्प्राप्तिलक्षणेष्वभिज्ञोज्ञातायश्चस्वेनिजेपदेराजतइतिस्वराट्स्वमात्मानंराजयतिसर्वोत्कृष्टत्वेनेतिवा । यआदिकवयेआदिकविंप्राप्तुंब्रह्मतपस्तेनेकिंभूतंपरमुत्कृष्टंयत्तपसासर्वे

निरुच्छ्वासःसंतोहरिमापुःतदेवाहयद्येनतपसादेवाःसूरयोपिमुह्यंति। तद्वक्ष्यतिनैवंविदामोभगवत्प्राणरोधंचराचरस्याखिलसत्त्वधाम्नः॥विधेहितन्नोवृजिनाद्विमोक्षप्राप्ता वयंत्वांशरणंशरण्यम् ॥ इति । तपसःपरत्वंतुमाभैष्टबालंतपसोदुरत्ययादितिदेवाश्वासनहरिवाक्यान्निश्चीयते । किंभूतंसत्यंध्रुवत्वादेवध्रुगतिस्थैर्ययोरितिधातोर्ध्रुवइति। ध्रुवांयोगेहरौकालेध्रुवःस्यात्सर्वदास्थिरइतिकोशात्। पुनः.किंभूतंस्वेनधाम्नातेजसानिरस्ताःकुहकामायिनोयक्षायेनतं । एतदप्यग्रेस्फुटंचतुर्थस्कंधे इति ध्रुवपक्षः ॥ ४६ ॥ ॥ ॥

॥ अथनरनारायणपक्षः ॥ ॥ वयंतंनरनारायणरूपंपरंपरमेशसदाहृदाधीमहि ॥ तंकंयत्रत्रयाणांकामक्रोधलोभानांसर्गःकार्यंमृषा । कामंदहंतिकृतिनोननुरोषदृष्ट्याक्रोधंदहंतमुततेनदहंत्यसह्यम्॥ सोयंयदंतरमलंनिविशन्बिभेतिकामःकथंनुपुनरस्यमनःश्रयेत ॥ इतिवक्ष्यमाणत्वात् । एकसंबंधिज्ञानमपरसंबंधिबोधकमितिन्यायेनलोभोपितत्रनास्तीतिध्येयं । यद्वात्रयाणांमदनमारुतदेववधूनांसर्गस्तन्मोहननिश्चयोयत्रमृषा। तेतत्रमुधायत्नाबभूवुः । कथंयथातेजोवारिमृदांविनिमयःपरिणामोमृषा । यश्चार्थैष्वाद्यस्यचतुर्वर्गेष्वाद्यस्यधर्मस्यसकाशाज्जन्मान्वयात् । धर्मस्यदक्षदुहितर्यजनिष्टमूर्त्यांनारायणोनरऋषिप्रवरःप्रशांतः ॥ इतिवक्ष्यमाणत्वात् । किंभूतस्याद्यस्यईन्कामांस्तरत्यनेनेनेतीतरःसर्वधर्मादवाप्यतइतिवाक्यात् । तस्यतथाषष्ठचर्थेतसिः । यतःस्वराट्इंद्रःइतरतइतरेकामादयश्चतत्रसुरितिशेषः। माभैष्टभोमदनमारुतदेववध्वः । शक्रस्तत्रासविस्मितइत्येकादशेतच्चरितेश्रवणात् । इत्थमितरतइतिनाद्यस्याविशेषणम् । यश्चाभिज्ञःयःसर्वज्ञःसर्वविदितिश्रुतेः । यद्वास्वराट्स्वतन्त्रःअन्येदेहादयस्तत्परतंत्राः । तदुक्तंमार्कंडेयेनद्वादशे । किंवर्णयेतवविभोयदुदीरितोसुःसंस्यंदतेनमनुवाङ्मनइंद्रियाणि । स्पंदंतिवैतनुभृतामजशर्वयोश्चस्वस्याप्यथापिभजतामसिभावबंधुः ॥ इति । यःकवयेनारदायआदिसनातनंब्रह्मवेदस्तुतिरूपंतेने । तच्च ॥एकदानारदोलोकान्पर्यटन्भगवत्प्रियइत्यारभ्य तस्मैह्यवोचद्भगवानृषीणांशृण्वतामिदम्॥योब्रह्मवादःपूर्वेषांजनलोकनिवासिनामित्याद्युक्त्वाच॥धारयंश्चरगांकामंकामानांभर्जनंनृणाम् ॥ इत्यंतेनतेने । यस्मिन्वेदस्तुतिरूपेब्रह्मणिसूरयोपिमुह्यंति यद्दर्शनंनिगमआत्मरहःप्रकाशंमुह्यंतियत्रकवयोजपरायतंते ॥ इतिद्वादशेमार्कंडेयोक्तेब्रह्मादीनामपिनिगममोहश्चेत्काकथान्येषांसूरी

णामिति । किंभूतंस्वेनधाम्नातेजसानिरस्तास्तिरस्कृताःकुहकाइंद्रप्रेषिताःकामाद्यायेन । यद्वानिरस्ताःस्वसेविनांसुरकृतांतरायरूपाःकु
हकायेनतंतद्वक्ष्यत्येकादशे । त्वांसेवतांसुरकृताबहवोंतरायाःस्वौकोविलंघ्यपरमंव्रजतांपदंते ॥ नान्यस्यबर्हिषिबलीन्ददतःस्वभागानध
त्तेपदंत्वमविताायदिविघ्नमूर्ध्नि ॥ इति । पुनःकिंभूतंसत्यंसर्वदैकरसत्वेनाविद्यमानम् । तद्वक्ष्याति । कर्त्तास्यसर्गादिषुयोनबध्यतेनहन्यतेदे
हगतोपिदैहिकैः ॥ द्रष्टुर्नदृश्यस्यगुणैर्नदूष्यतेतस्मैनमोसक्तविविक्तसाक्षिणे ॥ इतिनारदःपंचमे ॥ इतिनरनारायणपक्षः ॥ ४७ ॥
अथहंसावतारपक्षः ॥ वयंतंहंसावतारंसदाहृदाधीमहि । तंकंयत्रत्रयाणांजाग्रदादीनांसर्गोमृषानवस्तुतः । तदुक्तंतेनैव असत्त्वादात्मनोन्ये
षांभावानांतत्कृताभिदा ॥ गतयोहेतवश्चास्यमृषास्वप्नदृशोयथा ॥ किंच एवंविमृश्यगुणतोमनसस्त्र्यवस्थामन्मायायामयिकृताइत्यादि ।
कथंतेजोवारिमृदांविनिमयोऽन्यथात्वंमृषा । यश्चाद्यस्यब्रह्मणइतरतश्चेतरेषांसनकादीनांहेतोर्जन्मान्वयात् । तद्वक्ष्यत्येकादशेसएव एवं
पृष्टोमहादेवःस्वयंभूर्भूतभावनः ॥ ध्यायमानःप्रश्नबीजंनाभ्यपद्यतकर्मधीः । समामचिंतयद्देवःप्रश्नपारतितीर्षया ॥ तस्याहंहंसरूपेणस
काशमगमंतदा ॥ दृष्ट्वामांतउपाव्रज्यकृत्वापादाभिवंदनम् ॥ ब्रह्माणमग्रतःकृत्वाप्रपच्छुःकोभवानिति ॥ इति यतश्चस्वराट्ब्रह्माऽर्थेषुज्ञा
तव्यार्थेष्वभिज्ञोजातःइतरतइतरेसनकादयश्चार्थेष्वभिज्ञाजाताः वचनव्यत्यासेनान्वयोत्र। चक्राक्षन्यायेनेतरतइत्यनेकत्रसंबध्यते । इतिमे
छिन्नसंदेहामुनयःसनकादयःइत्युक्तेः । यश्चादिकवयेब्रह्मणेइतरतइतरेभ्यःसनकादिभ्यश्चब्रह्मज्ञानंतेने । द्वितीये तुभ्यंचनारदभृशंभगवा
न्विवृद्धभावेनसाधुपरितुष्टउवाचयोगम् ॥ ज्ञानंचभागवतमात्मसतत्वदीपंयद्वासुदेवशरणाविदुरंजसेवइतिब्रह्मोक्तेः । इत्यहंमुनिभिःपृष्ट
स्तत्त्वजिज्ञासुभिस्तदा ॥ यदवोचमहंतेभ्यस्तदुद्धवनिबोधमेइत्यारभ्यमयैतदुक्तंवोविप्राइत्यंतग्रंथेनैकादशेतदुक्तेश्च यद्यस्मिन्ब्रह्मणिसूर
योब्रह्मसनकाद्याश्चमुह्यंति तदुक्तमेव गुणेष्वाविशतेचेतोगुणाश्चेतसिचप्रभो ॥ इत्यादिना। किंभूतंतंस्वेनधाम्नाप्रकाशेननिरस्तंकुहकंब्रह्मा
दीनामज्ञानंयेनतं । पुनः किंभूतंपरंसत्यमात्यंतिकंसत्यंसत्यादीनामधिष्ठानत्वात् । अहंयोगस्यसांख्यस्यसत्यस्यर्तस्यतेजसः । परायणं
द्विजश्रेष्ठाःश्रियःकीर्तेर्दमस्यचेत्यादितदुक्तेः ॥ इतिहंसावतारपक्षः ॥ ४८ ॥ ॥ ॥ ॥ ॥



॥ यमुनाप्रवाहपक्षः ॥ ॥ वयंतंयमुनाप्रवाहंधीमहिसदाहृदा । तंकंयत्रत्रयाणांसर्वतीर्थस्नानसर्वदानसर्वदेवयजनानांसर्गोमृषासत्यः ।
स्नातंवैसर्वतीर्थेषुतेनेष्टंसार्वदैवतम् ॥ दत्तानिसर्वदानानियःकालिंदींनिषेवते ॥ इतिव्रजमाहात्म्ये ॥ कथंयथातेजोवारिमृदामविनिमयोया
थार्थ्यममृषा । यतःयत्रप्रवाहेस्वराट्श्रीकृष्णःआद्यस्यनिजपितुर्नंदस्यजन्माविर्भावमन्वयात् आप कदाचित्तत्रमग्नंनंदंतत्रैवश्रीकृष्णःप्रा
पेति । किंभूतःस्वराट्अर्थेषुकर्तव्येष्वभिज्ञःयःयमुनाप्रवाहःकवयेविदुषेऽक्रूरायइतरतइतरेभ्योनंदादिगोपेभ्यःआदिसनातनंब्रह्मसगुणंनि
र्गुणंच ब्रह्मरूपंतेनेध्यानेप्रकाशितवान् । दर्शयामासलोकंस्वंगोपानांतमसःपरम् ॥ सत्यंज्ञानमनंतंचब्रह्मज्योतिःसनातनम् ॥ यदि
पश्यंतिमुनयोगुणापायेसमाहिताः ॥ इत्यादिश्रीदशमोक्तेः । भूयस्तत्रापिसोद्राक्षीत्स्तूयमानमहीश्वरे ॥ इत्यारभ्ययावच्चत्वारिंशाध्या
यसमाप्तितद्वृत्तोक्तेश्च। ननुकृष्णएवाक्रूरगोपेभ्योब्रह्मतेनेनतुयमुनाप्रवाहइतिचेदाह। कृष्णवामांगसंभूतायमुनाकृष्णरूपिणी । इतिसंहितोक्ते
र्यमुनाकृष्णयोरभेदएव। नजलंयमुनावारिसाक्षाद्ब्रह्मैवतज्जलमित्यादिपुराणादपि तथायत्रब्रह्मणियमुनाप्रवाहेवासूरयोपिमुह्यंतिप्रवाहेमोह
स्तुतत्रजलबुद्धिरेव । किंभूतंप्रवाहंस्वेनधाम्नाश्रयेणकृष्णेननिरस्तोनिष्कासितःकुहकःकपटरूपःकालियोयेनतंतथा। पुनःकिंसत्यंसत्यलो
कंपातीतिसत्यंपोब्रह्म । खप्रत्ययोत्रपातेः । सत्यंपोरौतिअत्र नौमीड्यतेभ्रवपुषेतडिदंबरायेत्यादिप्रकारेणस्तुतिरूपंशब्दंकरोतीतिसत्यंप
रस्तंतथा । ततोनुज्ञाप्यभगवान्स्वभुवंप्रागवस्थितान् ॥ वत्सान्पुलिनमानिन्येइत्युक्तेर्यमुनातटब्रह्मणस्तुतिःकृता ॥ इतियमुनाप्रवाहपक्षः ॥
॥ अथपुष्करतीर्थपक्षः ॥ ॥ वयंतंपुष्करतीर्थंसदाहृदाधीमहि तंकंयत्रत्रयाणांब्रह्मविष्णुरुद्रपुष्कराणांतन्नामकसरसांसर्गोमृषाकथंयथा
तेजआदीनामविनिमयःस्वभावावस्थितिरमृषा । यतोयस्यपुष्करस्यान्वयात्सेवनात्स्वराट्ज्ञानी। अर्थेष्वभिज्ञश्चभवति । किंभूतस्ययतः
जन्मशब्देनोपलक्षणभूतेनस्थितिभंगावपिग्राह्यौ । जन्माद्यतेनाश्यतेऽनेनेतिजन्माद्यः । अत्तेर्नाशेघ्यण् । तस्यजन्माद्यस्य । पुनःकिं
भूतस्ययःकामास्तीर्यंतेऽनेनेतीतरस्तस्येतरतः । षष्ठ्यर्थेतसिरुभयत्र । एतद्विशेषणद्वयंस्वाराज्यार्थाभिज्ञत्वदानेहेतुभूतमिति । सर्वे
पांचैवतीर्थानांगुरुंपुष्करतीर्थकम् ॥ सेवतेयोनरोनित्यंसज्ञानीचार्थभाग्भवेत् ॥ कार्तिकेतुविशेषेणतत्रापिभीष्मपंचके ॥ दर्शनात्स्पर्श

नात्पानात्स्मरणात्सर्वपापनुत् ॥ पुष्करःसर्वतीर्थेषुब्राह्मणोजातितोगुरुः ॥ इतितन्माहात्म्ये । यःपुष्करआदिकवयेब्रह्मणेपिब्रह्मज्ञानंतेने
ब्रह्मणापितत्रयज्ञरूपंतपस्तप्तंतेनैवसर्वज्ञानमापेतिपुराणांतरेप्रसिद्धेः यस्मिन्पुष्करेसूरयोपिशास्त्रज्ञाअपिनास्तिकप्रभृतयोमुह्यंति । जल
सामान्यभ्रांत्यातंनसेवंतइतिभावः ॥ किंभूतंस्वेनधाम्नाजगतिप्रसिद्धेनतेजसानिरस्ताः कुहकानास्तिकायेनतं । यद्वास्वसेविनांनिरस्तं
कुहकंपापंयेनतंसत्यंब्रह्मरुद्रादीनांसत्यानांतपोभूमित्वात् । ब्रह्मणाशंभुनेंद्रेणविष्णुनाप्रभविष्णुना । अन्यैः सुरैर्मुनिगणैर्नारदाद्यैश्चसर्वतः ।
तपःकृतंपुष्करेषुततःसत्योनसंशयः ॥ पुनः परंसर्वोत्तमं । पुष्करान्नपरंतीर्थंविद्यतेभुविभारत ॥ सर्वतीर्थव्रजश्चात्रवसत्येवनसंशयः ॥ इत्या
दिबहुधाप्रपंचितंवाराहादिपुराणेष्वेतन्माहात्म्यम् ॥ इतिपुष्करतीर्थपक्षः ॥ ९० ॥ ॥ ॥ ॥
अथप्रयागराजपक्षः ॥ वयंतंप्रयागराजंतीर्थंसदाहृदाधीमहि । तंकंयत्रत्रयाणांगंगायमुनासरस्वतीप्रवाहानांसर्गोऽमृषासत्यः । तेजोवारि
मृदांसत्यरूपंयथाऽमृषा । यतोयस्यप्रयागस्याद्यस्यब्रह्मणःसकाशाज्जन्मप्राकट्यमासीत् । पापौघभूमिभारस्यदाहार्थंवैप्रजापतिः ॥ प्रयाग
राजंविदधेप्रजानांचहितेस्थितः ॥ किंचसितासितातुयाधारासरस्वत्याविगर्भिता ॥ सामार्गंब्रह्मलोकस्यसृष्टिकर्तासससर्जताम् इतिपाद्मोक्तेः
द्वयोर्नद्योस्तिसृणांवायोगःप्रोक्तःप्रयागकइतिस्कांदेतल्लक्षणमपीयतेच । पुनः यतोयस्यान्वयात्सेवनात्स्वराडिंद्रोऽर्थेषुनिधिष्वभिज्ञोभो
क्ताजातः। धनकामःपुराशक्रःस्नातोत्रैवद्विजोत्तम॥धनदस्यनिधीन्सर्वान्संजहारस्वमायया ॥ इतिपाद्मे॥यःप्रयागआदिकवयेब्रह्मणेइतरत
इतरेभ्योपिब्रह्मअनेकपदार्थान्तेने।ब्रह्मसर्वपदार्थेष्वपीतिकोशादत्रब्रह्मशब्दोऽनेकपदार्थपरः । इष्ट्वात्रैवमहायज्ञैःसृष्टिकामःप्रजापतिः॥अवाप
सृष्टिसामर्थ्यंततःसृष्टिंचकारसः॥अत्रनारायणः स्नातः पत्नीकामःसितासिते ॥ तदैवलब्धवांल्लक्ष्मींभार्याममृतमंथने । उषित्वात्रैवषण्मासा
न्स्नात्वावेण्यांयथेच्छया ॥ त्रिपुरंघातयासबाणेनैकेनशूलधृक् ॥ अस्मिन्क्षेत्रेपुराविप्रक्षेत्रेशस्यापरोक्षताम् ॥ योगस्यफलभूमिंतुलेभि
रेसनकादयइत्यादिपाद्मोत्तरखंडेप्रोक्तत्वात् यस्मिन्प्रयागेसूरयोनास्तिकामुह्यंति । सूरीश्रीधनपंडितावितिहैमाद्रौ । किंभूतंस्वेनधाम्नास्व
तेजसानिरस्तंस्वसेविनांचित्रपिशाचप्रेतपंचकन्यादीनांकुहकंपिशाचत्वादिकारणीभूतंपापंयेनतं । पुनः सत्यंसर्वदास्थितं । आविर्भाववति



रोभावौक्षेत्रस्यास्यनसंशयः॥कल्पेकल्पेप्रजायेतेसत्यंतेनाद्विजोत्तमइतिपाद्मात् । परंसर्वोत्कृष्टंस्वर्गमोक्षहेतुत्वात् । तथाचश्रुतिः॥ सितासि
तेसरितेयत्रसंगतेतत्राप्लुतासोदिवमुत्पतंति ॥ येवैतन्वाविसृजंतिधीरास्तेवैजनासोअमृतत्वंभजंते ॥ इति । स्मृतिरपि वातांबुपर्णाशनदे
हशोषणैस्तपोभिरुग्रैश्चिरकालसंचितैः ॥ योगैश्चसंयांतिनरानतांगतिंस्नानात्प्रयागस्यहियांतियांगतिमिति।माघेविशेषतःसेव्यःप्रयाग
स्स्वाहितेप्सुभिः ॥ इतिप्रयागपक्षः ॥ ९१ ॥ ॥ ॥ ॥ ॥ ॥
अथकुरुक्षेत्रपक्षः । वयंतत्कुरुक्षेत्रंसदाहृदाधीमहि । तत्किंयत्रत्रयाणांजलस्थलांतरिक्षमृत्यूनांसर्गः मृषाएकफलत्वात् ॥ भागीरथ्यांजले
मुक्तिर्वाराणस्यांजलेस्थले ॥ कुरुक्षेत्रेत्रिधामुक्तिरंतरिक्षेजलेस्थले॥इतितन्माहात्म्योक्तेः।यतोयस्यान्वयात्सेवनादर्थेषुधर्मार्थकाममोक्षेष्वा
द्यस्यधर्मस्यजन्मभवाति । तस्यधर्मक्षेत्रत्वात् । तस्यधर्मक्षेत्रत्वंतु धर्मक्षेत्रेकुरुक्षेत्रेइतिभारतोक्तेः यद्यपिधर्मक्षेत्राणिबहूनिपुष्करप्रयागा
दीनिसंतितथाप्यस्यैव । तीर्थेष्वन्येषुयद्धर्मंसहस्रगुणितंहितत् ॥ कुरुक्षेत्रेकृतस्यैवधर्मस्यवृद्धिरादरात् ॥ त्रयोदशदिनंयावत्त्रयोदशगुणा
भवेत्॥सहस्रगुणितावृद्धिः पुण्याहेपुण्यकर्मणाम्॥सहस्रदिनपर्यंतंभूपतेस्यान्नसंशयः॥सूर्योपरागेऽनंतास्यात्कुरुक्षेत्रेनसंशयः॥इतितन्माहा
त्म्योक्तेः।प्राधान्येनधर्मक्षेत्रत्वमिति । किंचयतः यत्रस्वराट्ब्रह्माजातइतिशेषः ॥ तच्चपृथूदकेब्रह्मयोनिनाम्नातीर्थंप्रसिद्धं । किंभूतोऽभिज्ञः
सर्गनिर्माणेकुशलः । यःकुरुक्षेत्रदेशआदिकवयेवसिष्ठायइतरतइतरभ्यःकपिलमार्कंडेयादिभ्योब्रह्मतपस्तेने । तेषांतपःस्थलानिकुरुक्षेत्रे
प्रसिद्धानि ।यस्मिन्कुरुक्षेत्रेसूरयःदेशसामान्यभ्रांत्यामुह्यंति।कथंयथातेजोवारिमृदांविनिमयः । किंभूतंमृषास्वेनधाम्नारजसानिरस्तंकुहकंदु
र्गतिरूपंदुष्कृतानांयेनतत्तथा । तेजोधामगृहंधामरजोवाधामकीर्तितमित्यभिधानचिंतामणेरजोपिधामार्थकं । पांसवोपिकुरुक्षेत्राद्वायुना
समुदीरिताः । अपिदुष्कृतकर्माणंनयंतिपरमांगतिम् । इतिभारतात् । किंभूतंसत्यंसत्यरूपवेदविहितं । कुरुक्षेत्रंदेवयजनमितिशतपथ
श्रुतेः । पुनःपरंसर्वोत्कृष्टंब्रह्मसदनत्वात् । तथाचश्रुतिः । बृहस्पतिरुवाचयाज्ञवल्क्यंयदनुकुरुक्षेत्रंदेवानांदेवयजनंसर्वभूतानांब्रह्मसदनमि
तिजाबालश्रुतिः ॥ इतिकुरुक्षेत्रपक्षः ॥ ९२ ॥ ॥ ॥ ॥ ॥ ॥

अथमायाक्षेत्रपक्षः । वयंतन्मायाक्षेत्रंहृदाधीमहि । तत्किंयत्रकनखलहरिद्वारकुब्जाम्रकक्षेत्राणांसर्गोऽमृषा । कथंयथाऽविनिमयोऽमृषा मायाक्षेत्रंसमाख्यातंहरिद्वारेसुपुण्यजे ॥ इति।ब्रह्मणःस्थानतोयावद्योजनानिदशद्वयम् । इतिस्कांदे॥इदंक्षेत्रंमहापुण्यंयावद्वैयज्ञभूमिका॥ यत्रमायानिमित्तंहिजातंसर्वंप्रजापते।तस्मादिदंमहाक्षेत्रंमायासंज्ञंभविष्यति॥इतिच।यत्रतेजोवारिमृदामाद्यस्यतेजसस्सर्वदेवतेजोरूपस्य मायादेहस्यजन्ममायापरपर्यायदुर्गायादेहोयथातेजोरूपंतथाप्रपंचितंमार्कंडेये । ततोतिकोपपूर्णस्यचक्रिणोवदनात्ततः ॥ निश्चक्राममहत्तेजोब्रह्मणःशंकरस्यच।इत्यारभ्यान्येषांचैवदेवानांसंभवस्तेजसांशिवाइत्यंतग्रंथेन । यस्यान्वयात्सेवनात्पुमान्स्वराट्कृतकृत्योभवेत् । दर्शनादस्यतीर्थस्यकृतकृत्योभवेन्नरइतिस्कांदे।इतरतइतरोपितथार्थेष्वभिज्ञः सर्वार्थदत्वादस्यसर्वार्थदमिदंक्षेत्रमितिस्कांदे।इतरेषांशंबूकप्रभृतिशूद्रादीनामपितथात्वंप्रपंचितंचैतन्माहात्म्ये । योदेशोमायाक्षेत्ररूपः कवयेविवेकिनेविदुरायादिसनातनंब्रह्मतेने । यद्यपिद्वारिद्युनद्याऋषभःकुरूणांमैत्रेयमासीनमगाधबोधमित्यादिनामैत्रेयसंगतिंविदुरस्योक्त्वामैत्रेयस्तस्मैश्रीभागवतरूपंब्रह्मतेनेसोहंनृणांक्षुल्लसुखाय दुःखंमहद्गतानांविरमायतस्य।प्रवर्त्तयेभागवतंपुराणमित्यादिनातथातत्रक्षेत्रेस्थितत्वात्तत्तेनैवदत्तं। यथाविद्यादत्ताकाशिकयाधनंदत्तंपुरेणमेइतिकाश्यामधीतोविद्यांकाशीदत्तांमन्यते तथात्रापिमायाक्षेत्रेप्राप्तंज्ञानंतेनैवदत्तमितिबोध्यं । यद्यस्मिन्क्षेत्रेसूरयो।विद्वांसोपिपूर्वदुष्कृतवशान्मुह्यंति श्रद्धांनकुर्वंति । किंभूतंक्षेत्रं स्वेनधाम्नाप्रतापेननिरस्तंकुहकमस्माच्चित्तादीनांचौर्यादिलक्षणंयेनतं।एतद्वृत्तमेतन्माहात्म्येप्रपंचितमिति।पुनःकिंभूतंसदासत्यंनकदाचिदप्यसत्फलदं। पुनःपरंसर्वोत्कृष्टमनेकेशलिंगतीर्थशिलादिभिरधिष्ठितत्वान्महाफलदामितिईशलिंगानिश्रीभरतलक्ष्मणमूर्त्यादीनि। यद्वादक्षेश्वरराजराजेश्वरतिलभांडेश्वरबिल्वकेश्वरनीलेश्वरभूतेश्वरादीनितीर्थानिविष्णुतीर्थकुशावर्तादीनिशिलानारायणीशिलाद्याअत्रसंति ॥ इतिमायाक्षेत्रपक्षः ॥ ९३ ॥ ॥ ॥ ॥

अथायोध्याक्षेत्रपक्षः ॥ वयंतदयोध्याक्षेत्रंधीमहि । तत्किंयत्रत्रयाणांभक्तिज्ञानवैराग्याणांसर्गःस्थितिरमृषा । यद्वातिसृणांकौशल्याकैकयीसुमित्राणांसर्गोऽमृषा । तथातेजोवारिमृदामविनिमयस्तात्त्विकंरूपममृषा । यतोयत्राद्यस्यश्रीरामस्यजन्माभूत् इतरतइतरेषांभर

तलक्ष्मणशत्रुघ्नानांचजन्माभूत् । चपुनः यतोन्वयात्सेवनात्पुमान्स्वराट्स्वर्गीभवति। यदिस्वर्गोबहुमतस्तवराजन्नहिवर्तते । मयिवासंकुरुष्वेत्ययोध्यामाहात्म्येकुशंप्रत्ययोध्योक्तेः । अभिज्ञश्चभवत्यर्थेषुधर्मादिषु । धर्माअर्थाश्चकामाश्चमोक्षोप्यथवरानने । अयोध्यावासतः संतीतिरुद्रयामले। यत्क्षेत्रंकवयेऽतिविदुषेश्रीयमराजायहृदाप्रीत्याब्रह्मवरंतेने ब्रह्मशब्दोत्रवरे। वरंब्रह्मबृहद्ब्रह्मब्रह्मतीर्थंतपस्तथेतिकोशात्। वरंब्रूहिमहाबुद्धे प्रीताहतेनसंशयः ॥ यदर्थमागतोसित्वंतन्ममाग्रेप्रकथ्यताम् ॥ इतियमस्तुतिप्रीतायोध्यायाःयमंप्रत्युक्तेः । यद्वाब्रह्मकोर्थस्तीर्थंतेने । यमस्थलेतिविख्यातंस्थानंतेसरयूतटे ॥ ऊर्जेमासिसितेपक्षेद्वितीयायांतुयेयम ॥ स्नास्यंतितत्रतीर्थेवैतेषांतवभयंनहि ॥ इतितन्माहात्म्येतदुक्तेः । यस्मिन्क्षेत्रेयेसूरयस्तेऽमुह्यंतिमोहंनप्राप्नुवंति । हृदाऽयेइतिपदत्रयंछित्त्वाअमानोनाःप्रतिषेधेइत्यव्ययेष्वकारोव्ययंनार्थेबोध्यं । किंभूतंक्षेत्रंस्वेनधाम्नाप्रतापेनसदानिरस्ताःकुहकालुंपकशंकुलुंठकजंतुहधर्महप्रभृतयस्तैलकाराद्यायेनतत्तथा । एतद्वृत्तमयोध्यामाहात्म्येऽतिविस्तृतं। पुनःकिंभूतंसत्यंसत्यनामकं। विष्णोराद्यापुरीसत्यातस्यामाहात्म्यमीदृशमितिचित्रगुप्तंप्रतियमोक्तेः॥ वैकुण्ठमध्येयत्प्रोक्तमयोध्यानगरंशुभमित्यादिनावैकुण्ठस्थानादिहसत्यायोध्यानगरमेवमन्वर्थंब्रह्मणा विष्णुंप्रार्थ्यभुव्यानीतमितिप्रसिद्धंतन्माहात्म्ये। पुनःपरंसर्वोत्कृष्टं। तदुक्तमयोध्यामाहात्म्ये । विष्णोःपादमवंतिकांगुणवतींमध्येचकांचींपुरींनाभिंद्वारवतींपठंतिहृदयंमायापुरींयोगिनः ॥ ग्रीवामूलमुदाहरंतिमथुरांवाराणसींनासिकामेतद्ब्रह्मपदंवदंतिमुनयोयोध्यापुरींमस्तकम् ॥ इतिमस्तकस्थानीयायोध्यायाःसर्वोत्कृष्टतायांनसंशयोऽस्तीतिभावः । अथायोध्यापदार्थमाह । अकारोवासुदेवोस्तियकारस्तुप्रजापतिः ॥ उकारोरुद्ररूपस्तुतेध्यायंतियतस्तुताम् ॥ ततोयोध्यासमाख्यातामुनिभिरर्थवेदिभिः ॥ सर्वोपपातकैर्युक्तैर्ब्रह्महत्यादिपातकैः ॥ नयोध्यासर्वतोयस्मात्तामयोध्यांततोविदुः ॥ विष्णोराद्यापुरीचेयंक्षितिंनस्पृशतिप्रिये ॥ विष्णोःसुदर्शनेचक्रेस्थितापुण्यांकुरासदा ॥ यत्रसाक्षात्स्वयंदेवोविष्णुर्वसतिसर्वदा ॥ सहस्रधारामारभ्ययोजनंपूर्वतोदिशि । पश्चिमेचतथादेवियोजनंसंमतोवधिः ॥ दक्षिणोत्तरभागेतुसरयूतमसावधि ॥ एतत्क्षेत्रस्यसंस्थानंहरेरंतर्गृहंस्मृतम् ॥ मत्स्याकृतिरियंभद्रेपुरीविष्णोरुदीरिता ॥ पश्चिमेतस्यमूर्द्धातुगोप्रताराश्रितःप्रिये ॥ पूर्वतःपुच्छभागो

हिदक्षिणोत्तरमध्यगः॥एतत्क्षेत्रस्यसंस्थानंमयासुंदरिवर्णितम्।इति॥मृष्ट्यादौब्रह्मणस्तपसातोषितविष्णुनेत्राज्जलंपपाततच्चब्रह्मणाकमंड
लौधृतंतज्जलन्यासार्थंपुनर्मनसामानसंसरोरचयित्वातज्जलंतत्रसंस्थाप्यसृष्टिंचकारततस्वनगरशोभार्थिनद्यर्थंइक्ष्वाकुप्रेषितवसिष्ठेनमानसा
त्तज्जलंनदीरूपेणाविर्भूतंसरयूसंज्ञमयोध्यायामानीतमितिसाकेतमाहात्म्येस्थितम् ॥ इत्ययोध्यापक्षः ॥ ९४ ॥
॥ अथकाशीक्षेत्रपक्षः ॥ ॥ वयंतत्काशीक्षेत्रंसदाहृदाधीमहि। तत्किंयत्र तिसृणांगंगावाराणसीमनकर्णिकानामापगानांसर्गोऽमृषातासां
तत्रसत्त्वात्।यद्वात्रयाणामुत्तममध्यमाधमानांसर्गोमृषासर्वेषामेकगतिभाक्कात्।येवाद्विजाग्र्याःश्वपचाश्चनिंद्यायेचक्रवर्तिष्वपिधर्मरूपाः ॥
येवादरिद्राःपरमार्थभाजःसमानरूपांगतिमाप्नुवंति ॥ इतिकाशींप्रस्तुत्योक्तंब्रह्मवैवर्त्ते । कथंयथातेजोवारिमृदांविनिमयोमृषा । यतोय
स्यान्वयात्सेवनाद्यइतरतइतरोपिजंतुःसोप्यर्थेषुमहावाक्यार्थेष्वभिज्ञःसन्ज्ञानीभूत्वास्वराड्ब्रह्मैवभवति । अविमुक्तंवैदेवानांदेवयजनंसर्वे
षांभूतानांब्रह्मसदनमत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनामृतोभूत्वामोक्षीभवतीतिजाबालश्रुतेः। सर्वान्जंतून्मोचयेदंत
कालेविश्वेशोत्रश्रोत्रमंत्रोपदेशात् । इतिस्मृतेश्च। आब्रह्मस्तंबपर्यंतंयत्किंचिज्जीवसंज्ञितम् ॥ चतुर्षुभूतग्रामेषुकाश्यांतन्मुक्तिमाप्स्यति।
इतिकाशीखंडाच्च ॥ किंभूतस्ययतःजन्माद्यतेनाश्यतेऽनेनेतिजन्माद्यंतस्यजन्माद्यस्य। पुनःपुनर्जन्मनिवर्तकस्य। यःकाश्यांमृतिमाप्नो
तिनपुनर्जायतेसना।इतिकाशीमाहात्म्ये॥यत्क्षेत्रंकंसुखंवीयतेनश्यतेऽत्रेतिकवयस्तस्मिन्कवयेमरणावसरे शतवृश्चिकदंशस्यपीडायादृक्
प्रजायते ॥ देहात्प्राणवियोगेतुतादृक्पीडानसंशयइत्युक्तेः। कोपपदाद्वीयतेऽधिकरणेरप्रत्ययः। आदिसनातनंब्रह्मतेने।शिवद्वारातारकंप्रका
शितवदित्यर्थः ॥ तदुक्तंकाशीखंडे। ब्रह्मज्ञानेनमुच्यंतेनान्यथाजंतवःक्वचित् ॥ ब्रह्मज्ञानंतदेवाहंकाशीसंस्थितिभागिनाम्।दिशामितारकंप्रा
तेमुच्यंतेतेतुतत्क्षणात् । इति ॥ तारकंकिमितिचेत्प्रणवमेवतदवेहि । तदुक्तंकाशिखण्डे। नवर्ण्यतेकैःकिलकाशिकेयंजंतोःस्थितस्यात्रयतो
तकाले॥पचेलिमैःप्राक्तनपुण्यभारैरोंकारमोंकारयन्तींदुमौलिः। इति॥ प्रणवंतारकंब्रूतेकाश्यांदेवोमहेश्वरःइत्यन्यत्रापि॥क्वचित्तुशिवशिवे
त्युपादेशाम्यहंतदेतिद्विरावृत्ताशिवशब्दस्तारकतयोक्तः । पाद्मेतुश्रीरामरामरामेतिएतत्तारकमुच्यते । इतिश्रीशब्दपूर्वकस्त्रिरावृत्तोरामश



ब्दस्तारकतयोक्तः ॥ पेयंपेयंश्रवणपुटकैरामनामाभिधेयंध्येयंध्येयंमनसिसततंतारकब्रह्मरूपम् ॥ जल्पंजल्पंप्रकृतिविकृतौप्राणिनांक
र्णमूलेवीथ्यांवीथ्यामटतिजटिलेःकोपिकाशीनिवासीत्यन्यत्रापिरामनामैवतारकशब्देनोच्यते ॥ तथाचप्रणवाधिकारिणांसर्वेषांप्रणवोप
देशएवतदनधिकारिणांशैवानांशिवमंत्रोपदेशः ॥ वैष्णवानांतुराममंत्रोपदेशःशिवमद्वैतंचतुर्थंमन्यंतेइतिश्रुतेः शिवइतिशब्दस्यरमंते
योगिनोस्मिन्निनितिनिर्वचनेनरामशब्दस्यापिचाद्वितीयप्रत्यगभिन्नब्रह्मबोधकत्वान्नताभ्यांमोक्षफलकतद्बोधानुपपत्तिशंकापीत्यपिकेचित्।
अस्मिन्मतेक्षुद्रजंतूनामधिकारोपपत्तिरीशाधीनैव ॥ तेषांफलोन्मुखेनकेनाचिद्दृष्टेनकर्मणाक्षुद्रजन्मोपपत्तिरनादिभवसंचितासंख्यपुण्यैः
काश्यांमरणेमुक्तिरितिध्येयं ॥ ननुप्रणवेनकथंब्रह्मात्म्यैक्यबोधइतिचेच्छृणु।अकारोकारमकारवाच्यान्विश्ववैश्वानरतैजससूत्रात्मप्राज्ञेश्व
रान्ज्ञात्वाप्रथमंविश्वंवैश्वानरत्वेनाहमेववैश्वानरोस्मीतिविभाव्यततस्तैजसंसूत्रात्मत्वेनाहमेवसूत्रात्मास्मीतिविभाव्यपश्चात्प्राज्ञमीश्वर
त्वेनाहमेवेश्वरोस्मीतिविभाव्यानंतरंसमष्टिव्यष्टिस्थूलसूक्ष्मकारणोपाधिकमोंकारवाच्यंपरंब्रह्माहमस्मीतिसर्वात्मत्वेनविभाव्यपश्चान्मन
स्येकाग्रतामापन्नेस्थूलसूक्ष्मादिसर्वंजगत्सोपानावरोहणन्यायोक्तक्रमेणानिर्विशेषे ब्रह्माणिविलाप्यैकाग्रेणमनसास्वस्यब्रह्मत्वंसाक्षात्करोती
ति।यद्वातद्योहंसोसौयोसौसोहमित्यत्रसशब्देनपरमात्मोच्यतेअहंशब्देनप्रत्यगात्मावगम्यते ततश्चसमानाधिकरणयोःसोहमित्यनयोःपर
मात्माहमित्यर्थस्तथाप्रणवस्यापिसोहमित्यस्यैवप्रणवत्वेननिपातनात्।तथाहिसोहमित्यस्यपृषोदरादित्वेनानिपातनात्सकारहकारलोपेकृ
तेपरिशिष्टयोरोमित्यनयोरेङःपदांतादतीतिपूर्वरूपैकादेशात्मकंसंधिंकृत्वोच्चारणेओमितिशब्दोनिष्पन्नः । तदुक्तंसकारंचहकारंचलोपयि
त्वाप्रयोजयेत् ॥ संधिंचपूर्वरूपाख्यंततोसौप्रणवोभवेत् । इति ॥ एवंचोमित्यस्यपरमात्माहमित्यर्थोनिष्पन्नइति । यत्रयस्मिन्मरणावस
रेसूरयोपिमुह्यंतितत्कालीनमहद्दुःखेनविस्मृतज्ञानाभवंति । अतएवोक्तमपिपांडवगीतायां।कृष्णत्वदीयपदपंकजपंजरांतेद्यैवमेविशतुमा
नसराजहंसः ॥ प्राणप्रयाणसमयेकफवातपित्तैःकण्ठावरोधनविधौस्मरणंकुतस्ते । इति ॥ किंभूतंक्षेत्रंस्वेननिजेनधाम्नानिरस्तानांदेवा
नामपिकुहकंविस्मापकं। यद्वास्वसेविनांनिरस्तंकुहकंपापलक्षणंयेनतत्तथा । कालाद्भयंनास्तियत्रयत्रपापभयंनहि ॥ जन्मांतरसहस्रेषुकृ

तंनश्यतिदर्शनात् । इतिकाशीरहस्योक्तेः ॥ पुनःकिंभूतंसत्यंप्रलयेपिसत्त्वाद्ब्रह्मरूपत्वाद्वा । कदाचिद्वाराहकल्पेपृथिवींमग्नांवीक्ष्यजलादू
र्ध्वंछत्राकारंज्योतिश्चवीक्ष्यर्षिभिर्जनस्तपोलोकादिवासिभिरर्थितोविष्णुराह। वाराहंरूपमास्थायपृथिवीमुद्धराम्यहम्॥ प्रतीक्षंतुकियत्का
लंयावद्दैत्यसमागमः॥दैत्यंहत्वानिमग्नांगामानयिष्येजलोपरि ॥ ततःप्रवर्त्ततांधर्मोवर्णाश्रमनिबंधनः ॥ छत्राकारंपरंज्योतिर्दृश्यतेगगनेच
यत् ॥ तत्परंपरमंज्योतिःकाशीतिप्रथितंश्रुतौ ॥ रत्नंसुवर्णेखचितंयथाभवेत्तथापृथिव्यांखचिताहिकाशिका ॥ नकाशिकाभूमिमयीकदा
चित्ततोनमज्जेन्मसतत्कृतिर्यतः । जडेषुसर्वेष्वपिमज्जमानेष्वियंचिदानंदमयीनमज्जते ॥ स्वयंनिमग्नःकथमुद्धरेत्परांलोकेपिवेदेपिविचार्य
मेतत् ॥ इतिब्रह्मवैवर्त्तोत्तरभागोक्तेः । पुनःकिंभूतंपरंसर्वतीर्थशुद्धिजनकत्वात्। तदुक्तंकाशीरहस्ये।तीर्थानियानिलोकेस्मिन्जंतूनाममहान्य
हो ॥ तानिसर्वाणिशुद्ध्यर्थंकाशीमायांतिनित्यशः ॥ यस्तुकाश्यांवसेज्जंतुःसर्वव्यापारकृन्नरः ॥ तस्यापियागतिःप्रोक्तासानयज्ञैर्नचान्य
तः ॥ स्मरंतियेनराःकाशींयत्रकुत्रापिसंस्थिताः ॥ तेप्यघौघविनिर्मुक्ताभवंतिज्ञानभागिनः । इतिकाशीरहस्ये ॥ काशीपदार्थमाह। का
शीब्रह्मेतिविख्यातंतद्विवर्तोजगद्भ्रमः ॥ अविवर्तंतदेवाहुःकाशीतिब्रह्मवादिनः । इत्यलंप्रपंचेन ॥ इतिकाशीपक्षः ॥ ९६ ॥ ॥
॥ अथद्वारिकाक्षेत्रपक्षः॥ ॥ वयंतद्द्वारिकाक्षेत्रंधीमहि। तत्किंयत्रत्रिसर्गःत्रयाणांरैवतगोपीचंदनगोमतीचक्रशिलानांसर्गोऽमृषासत्यः ।
यथायथावत्किंभूतःसर्गःतेजोवारिमृदांविनिमयःप्रशस्तरूपःतत्रतेजोविनिमयोगोमतीचक्रशिलारूपःवारिविनिमयोगोमतीरूपः मृदोवि
निमयोगोपीचंदनरैवतरूपः । विनिमयोत्रप्रशस्तवाची । विगतोनिमयोदौर्वर्ण्यंयस्मात्सतथा । दौर्वर्ण्येनिमयोग्रहेइतिनिरुक्तिकारः । रैव
तस्तुगौतमात्मजोमेधावीनामापूर्वमपांतरतमावमानाच्छ्रीशैलपुत्रतांप्राप्तोनारदोपदेशतोरेवतनृपेणद्वारिकायामानीतस्तेनतन्नाम्नैवख्या
तस्तदुक्तंद्वारकाखंडे । सोभूद्रेवतनाम्नापिराजन्रैवतकाचलः ॥ हरिभक्तःशैलमुख्योद्वारकायांविराजते॥ तस्यदर्शनमात्रेणब्रह्महत्याप्रमु
च्यते ॥ इति । गोपीचंदनाविर्भावमनुपदमेववक्ष्यते । गोमतीभगवन्नेत्रजलोद्भूतानदी । तदुक्तंएकदारेवतंभक्तंप्रेमानंदसमाकुलम् ॥ प्रेक्ष्य
स्वंदर्शनंदत्वाहरिरश्रुमुखोभवत् ॥ तन्नेत्रबिंदुसम्भूतागोमतीसामहानदी ॥ तस्यादर्शनमात्रेणमुच्यतेब्रह्महत्यया ॥ इति ॥ तत्रैवचक्रशि





लाःसंति।तदुक्तं । गोमत्यांचक्रतीर्थेतुपाषाणानिचयाश्चये ॥ तेसर्वेचक्रतांयाताःपूजनीयाःप्रयत्नतः ॥ इतिचक्रतीर्थादिमाहात्म्यादिद्वारका
खण्डेश्रीनारदेनबहुलाश्वायोक्तंबहु।यतोयत्रादेरपत्यमाद्यस्तस्याद्यस्यश्रीप्रद्युम्नादेर्जन्माविर्भावोभूत्।एतच्चाग्रेश्रीदशमेस्फुटीभविष्यति।
किंचयतोयस्यक्षेत्रस्यान्वयात्संबंधादितरतःपश्वादिरपिअर्थेषुधर्मादिष्वभिज्ञोर्थान्नरश्चस्वराट्विष्णुरूपोभवति । तदुक्तंनारदेन।आप्रभा
सात्तीर्थमयीमर्यादीकृत्ययज्ञकम् ॥ भूमिर्मोक्षप्रदाराजन्द्वारकायोजनैःशतम्॥ द्वारकांनगरींदृष्ट्वानरोनारायणोभवेत् ॥द्वारकायांमृतःकोपि
गर्दभोपिचतुर्भुजः ॥ पश्यन्शृण्वन्कथांतस्याद्वारकेतिवदन्क्वचित् ॥ नरःपुण्यमवाप्नोतिशतयज्ञाधिकंफलम् । इति ॥ यद्ब्रह्मयस्या
महत्त्वंकवयेविवेकिनेबहुलाश्वायहृदाप्रीत्याअस्यवासुदेवस्यायंप्रियआयोनारदः।अत्रण्यप्रत्ययेलोपाद्वृद्धिर्बलीयसीतिन्याद्वृद्धिरेवनलोपइ
तिध्येयम्। किंभूतंब्रह्मआदिसनातनंप्राक्तनैर्ब्रह्मादिभिर्वर्णितंयद्यस्मिन्ब्रह्मणिद्वारकाक्षेत्रमहत्त्वेसूरयोविद्वांसोप्यवैष्णवामुह्यंति । तन्नम
न्यंतइतिभावः । किंभूतंक्षेत्रंस्वेननिजेनधाम्नाश्रयेणश्रीसुदर्शनरूपेणसदानित्यंसत्यं । द्वारकाहिशर्यातिपुत्रायानर्त्तायपित्रानिष्कासिता
यनिजभक्तायवैकुण्ठात्समुत्पाद्यशतयोजनमितासुदर्शनचक्रेसंस्थाप्यदत्तासमुद्रेस्थापिताचसाचनित्याप्रलयेपितस्याअनाशात्।द्वारकाम
त्पुरीनित्यासदावैकुण्ठरूपिणी ॥ नश्यतिप्रलयेनैवह्युत्पत्तौजायतेनहि । इतिसर्वंद्वारकामाहात्म्येउक्तं । तत्रत्यवाक्यनिचयस्तुविस्तर
भियेहनोक्तः । पुनःनिरस्ताःकुहकाःशाल्वप्रभृतयोमायिनोयत्रतन्निरस्तकुहकम् । एतच्चाग्रेस्फुटीभविष्याति । पुनः परंसर्वोत्कृष्टं । तदु
क्तं यथातिथीनांहरिवासरंचयथाहिशेषःफणिनांफणींद्रः ॥ यथागरुत्मान्दिविपक्षिणंचयथेतिहासेषुचभारतश्च ॥ यथाहिदेवेषुचदेवदेवः
श्रीवासुदेवोयदुदेवदेवः ॥ तथापुरीक्षेत्रसमस्तमध्येद्वारावतीपुण्यवतीप्रशस्ता ॥ यत्रैवसाक्षात्पुरुषःपरेश्वरोधृत्वाचतुर्व्यूहमलंविराज
ते ॥ शृणोतिनातत्रकलौजलध्वनिंकृष्णोक्तमित्थंसततंदिनेदिने ॥ भवेदविद्योयदिवासविद्योयोब्राह्मणोवैसतुमामकीतनुः ॥ इतिद्वा
रिकाक्षेत्रपक्षः ॥ ९६ ॥ ॥ ॥ ॥ ॥
॥अथगोपीचंदनपक्षंप्रसंगादाह । वयंतद्गोपीचंदनंसदाहृदाधीमहि । तत्किंयत्रत्रयाणांपापहानिपुण्योत्पत्तिभागवतत्वातिलक्षणानांसर्गोऽ

मृषा । गोपीचंदनसंसर्गात्पापहानिर्भवेन्नृणाम् ॥ तथाभागवतत्वाप्तिर्महापुण्यौघसंभवः॥इत्यादिद्वारकामाहात्म्येज्ञेयं ॥ कथंयथातेजोवारि
मृदामविनिमयोऽमृषासत्यः । यतोयस्यान्वयात्सम्बंधात्जन्मनआद्यंकारणंजन्माद्यंतस्याभिज्ञोज्ञाताभवेत् । पूर्वजन्मकृतकर्मज्ञानीस्या
दित्यर्थः । एतच्चपाद्मीयश्रीमद्भागवतप्रतिस्कंधमाहात्म्येषुसप्तममाहात्म्येस्फुटं । तथाहि कश्चित्सौवीरेशःप्रतीपाख्योनृपोवेश्योत्त्यास्व
भार्याद्वयंहत्वाराज्यपदेवेश्ययासहासतत्रातीवलोकैर्गर्हितोनृपोवेश्ययासहदेशांतरंगत्वामृतोमार्जारत्वमापवेश्यागृहेसाचकिरातीबभूवकदा
चित्पुण्ययोगतस्तस्यागोपीचंदनसंसर्गोंजातस्तेनपूर्वकृतकर्मस्मृतिर्जातातदनुसाकाशींप्राप्यमार्जारेणसहमोक्षमापेति । चपुनःयतोयस्या
न्वयादितरतइतरोपिस्वराट् मोक्षभाक्स्यात् । इतरःपापकर्त्तरीतिकोशात्महापाप्यपिस्वराट् । ब्रह्मघ्नोवाकृतघ्नोवागोघ्नश्चगुरुतल्पगः ॥
गोपीचंदनसंसर्गान्मुक्तिभागीभवेन्नरः । इतिस्मृतेः॥ गोपिकानामसंरक्षणीलोकस्यनरकान्मृत्योर्भयाच्चसंरक्षणीचंदनंतुष्टिकरणंचकिंतुष्टिक
रणंब्रह्मानंदमृत्तिकायस्याधारणमात्रेणब्रह्मलोकेमहीयते इति ।गोप्योनामविष्णुपत्न्यस्तासांचंदनमाल्हादनंकश्चाल्हादएषब्रह्मानंदरूपकः
विष्णुपत्न्योगोप्योनामजगत्सृष्टिस्थित्यंतकारिण्यःप्रकृतिमहदहमाद्याःकश्चविष्णुःपरब्रह्मैवविष्णुःकश्चाल्हादोगोपिचंदनंसंसक्तमानुषाणां
पापसंहारोयच्छुद्धांतःकरणानांब्रह्मज्ञानप्राप्तिश्चगोपीत्यग्रेउच्यतांचन्दनन्तुततःपश्चात्गोपीत्यक्षरद्वयंचंदनंतुत्र्यक्षरंतस्मादक्षरपंचकंएवं
विद्वान्गोपीचंदनंधारयेदक्षयम्पदमाप्नोतिपश्चत्वंनसपश्यतिततोऽमृतत्वमश्नुतेततोऽमृतत्वमश्नुतइत्यादिश्रुतयआथर्वणे ॥ किञ्चयतो
यस्यब्रह्मकोर्थःमहत्त्वंस्वराट्सर्वेश्वरोविष्णुरादिकवयेनारदायतेनेप्रतस्तार।देहलीदीपकन्यायेनस्वराट्पदस्योभयत्रान्वयः ॥ ब्रह्मपदम्भाव
प्रधानम् । यद्वायत्तत्पदमनुत्तमभितिसहस्रनामसुयच्छब्दोपिभगवत्परोदृश्यतेऽतःहृदायइत्यत्रोक्तयच्छब्दवाच्योविष्णुरादिकवयेइत्यने
नसम्बध्यते। ततोन्यायाश्रयोपिनकार्यः । तदाहश्रुतिः । नमस्कृत्यभगवंतंनारदःसर्वेश्वरंवासुदेवंपप्रच्छश्रीभगवन्नूर्द्ध्वपुंड्रकविधिंद्रव्य
मंत्रस्थानादिसहितंमेब्रूहीतितंहोवाचभगवान्वासुदेवोवैकुंठस्थानोद्भवंममप्रीतिकरंमद्भक्तैर्ब्रह्मादिभिर्धारितंविष्णुचंदनंवैकुण्ठस्थानादाहृत्य
द्वारकायांमयाप्रतिष्ठितंचन्दनंकुंकुमादिसहितंविष्णुचन्दनम्ममांगेप्रतिदिनमालिप्तंगोपीभिःप्रक्षालनाद्गोपीचन्दनमाख्यातंमदंगलेपनेनपु

ण्यंचक्रतीर्थांतःस्थितश्चक्रसमायुक्तंपीतवर्णंमुक्तिसाधनंभवतीत्याद्या । यस्मिन्गोपीचन्दनेसूरयोप्यापाततःशास्त्रज्ञाअपिमृत्सामान्यबु
द्ध्यामुह्यंतिजन्मांतरीयकृतपापवशेनश्रुतिस्मृतिस्तुत्यमपिनिंदन्तीतिभावः।किंभूतंस्वेनधाम्नास्थित्यानिरस्ताःकुहकायमभटायेन।तथा।
गोपीचन्दनलिप्तांगंनरंदृष्ट्वायमानुगाः । दूरादेवपलायंतेनात्रकार्याविचारणा । इतिपाद्मे ॥ पुनःसत्यंविष्णुरूपत्वात्तदुक्तं।गोपीचंदनखंडं
तुचक्राकारंसुलक्षणम् ॥ विष्णुरूपमिदंसत्यंपावनंपीतवर्णकम् । इति । पुनःपरंसर्वोत्कृष्टतापादकं।तदुक्तंश्रुतौ।गोपीचंदनलिप्तांगंपुरुषंयउ
पासते । एवंब्रह्मादयोदेवाःसंमुखास्तानुपासते । इति ॥ गरुडेपिनारदेनोक्तं । योमृत्तिकांद्वारवतीसमुद्भवांकरेसमादायललाटपट्टे ॥ करो
तिनित्यंत्वथचोर्ध्वपुंड्रंक्रियाफलंकोटिगुणंसदाभवेत् ॥ क्रियाविहीनंयदिमंत्रहीनंश्रद्धाविहीनंयदिकालवर्जितम् ॥ कृत्वाललाटेयदिगोपिचं
दनंप्राप्नोतितत्कर्मफलंसदाक्षयम् ॥ गोपीचंदनसंभवंसुरुचिरंपुंड्रंललाटेद्विजोनित्यंधारयतेयदिप्रतिदिनंरात्रौदिवासर्वदा ॥ यत्पुण्यं
कुरुजांगलेरविग्रहेमाघप्रयागेतथातत्प्राप्नोतिखगेंद्रविष्णुसदनेसंतिष्ठतेदेववत् ॥ यस्मिन्गृहेतिष्ठतिगोपिचंदनंभक्त्याललाटेमनुजोबिभ
र्तिच ॥ तस्मिन्गृहेतिष्ठतिसर्वदाहरिःश्रियान्वितःकंसनिहाविहंगम ॥ योधारयेद्विष्णुपुरीसमुद्भवंसदापवित्रंकलिकल्मषापहम् ॥ नित्यंल
लाटेहरिमंत्रसंयुतंयमंनपश्येद्यदिपापसंवृतः ॥ यस्यांतकालेखगगोपिचंदनंबाह्वोर्ललाटेहृदिमस्तकेच ॥ प्रयातिलोकेकमलालयाप्रभो
र्विमानयानोयदिब्रह्महास्यात् ॥ ग्रहानपीडंतिनरक्षसांगणायक्षाःपिशाचोरगभूतदानवाः ॥ ललाटपट्टेखगगोपिचंदनंसंतिष्ठतेयस्यहरेः
प्रसादम् । इति ॥ अंबरीषमहाघस्यक्षयार्थंकुरुवीक्षणम् ॥ ललाटेयैःकृतंनित्यंगोपीचंदनपुंड्रकम् ॥ इतिगौतमोक्तिः ॥ पाद्मे । धारये
द्विष्णुनिर्माल्यंधूपशेषंविलेपनम्॥ वैष्णवंकारयेत्पुंड्रंगोपीचंदनसंभवम् । इतिशिवोक्तेः॥ऊर्ध्वपुंड्रमृजुसौम्यंललाटेयस्यदृश्यते। सचांडालो
पिशुद्धात्मापूज्यएवनसंशयः ॥ इतिवाक्येनश्रीगोपीचंदनधारणस्यावश्यकत्वंविहितंनतुचांडालस्यतद्धारणंविधीयते ।सदाचारःशुभाक
ल्पोमिताहारोजितेंद्रियः॥ गोपिचंदनलिप्तांगः साक्षाद्ब्रह्ममयोभवेत् । गोपीचंदनलिप्तांगकृतंव्रतजपादिकम् ॥ न्यूनंसंपूर्णतांयातितद्दानं
बहुपुण्यदम्॥इतिवैष्णवादौ।अथास्यधारणमाथर्वणोपनिषदि । अथगोपीचंदनंनमस्कृत्योद्धृत्य गोपीचंदनपापघ्नविष्णुदेहसमुद्भव ॥ चक्रां

कितनमस्तुभ्यंधारणान्मुक्तिदोभवेतिप्रार्थना । इमंमेगंगेइतिजलमादायविष्णोर्नुकमितिमर्दयेत् । अतोदेवाअवंतुनइत्येताभिर्ऋग्भिर्वि
ष्णुगायत्र्याचत्रिवारमभिमंत्र्यशंखचक्रगदापाणेद्वारकानिलयाच्युत ॥ गोविंदपुंडरीकाक्षरक्षमांशरणागतमितिमांध्यात्वागृहस्थोल ाटा
दिद्वादशस्थलेष्वनामिक्यांगुल्याविष्णुगायत्र्याकेशवादिद्वादशनामभिर्वाधारयेत् । ललाटेकेशवंध्यायेन्नारायणमथोदरे ॥ वक्षःस्थलेमा
धवंतुगोविंदंकंठकूपके । विष्णुंचदक्षिणेकुक्षौबाहौचमधुसूदनम् ॥ त्रिविक्रमंकंधरेतुवामनंवामपार्श्वके ॥ श्रीधरंवामबाहौतुहृषीकेशंतु
कंधरे ॥ पृष्ठेतुपद्मनाभंचकट्यांदामोदरंन्यसेत् । इतिभक्तिरसामृते ॥ यतिस्तर्जन्याशिरोललाटहृदयेषुप्रणवेनधारयेत् । ब्रह्मादयस्त्रयोमूर्ती
स्तिस्रोव्याहृतयस्त्रीणिछंदांसित्रयोवेदास्त्रयःस्वरास्त्रयोग्नयोज्योतिष्मंतस्तिस्रोवस्थास्त्रयआत्मनस्त्रयऊर्ध्वांअकारोकारमकाराएतेसर्वेप्र
णवमयोर्ध्वपुंड्रत्रयात्मकास्तदोमित्येकंसमभवत्। परमहंसोललाटेप्रणवेनैकमूर्द्ध्वपुंड्रंवाधारयेत्तत्रदीपप्रकाशंस्वात्मानंब्रह्मैवाहमस्मीतिभावय
न्योगीमत्सायुज्यमाप्नोति । अथान्योहृदयस्योर्ध्वपुंड्रमध्येहृदयकमलमध्येवास्वमात्मानंभावयेदितितद्धारणं॥इतिगोपीचंदनपक्षः॥९७॥
॥ अथोर्द्ध्वपुंड्रपक्षः ॥ ॥ वयंसदाहृदातदूर्ध्वपुंड्रंधीमहि तत्किंयत्रत्रयाणांभगवत्प्रियत्वशुभत्वरक्षात्वानांसर्गोऽमृषासत्यः। तदुक्तंहरिणापा
द्मे।मत्प्रियार्थंशुभार्थंवारक्षार्थंचतुरानन ॥ मत्पूजाहोमकालेचसायंप्रातःसमाहितः ॥ मद्भक्तोधारयेन्नित्यमूर्द्ध्वपुंड्रंभयापहम् । इति ॥ यतो
यस्यान्वयादितरतइतरजातिजोपिस्वराट्मल्लोकगःस्यात् । ऊर्ध्वपुंड्रधरोमर्त्योम्रियतेयदिकुत्रचित् ॥ श्वपाकोपिविमानस्थोममलोकेमही
यते ॥ किंच यतोयस्यान्वयादर्थेषुधर्मादिष्वाद्यस्यधर्मस्यजन्मभवति तद्वतेनेत्यर्थः । यज्ञोदानंतपोहोमःस्वाध्यायःपितृतर्पणम् ॥ व्य
र्थंभवतितत्सर्वमूर्द्ध्वपुंड्रंविनाकृतमितिहेमाद्रिः । ऊर्द्ध्वपुंड्रंशिखाबन्धमुपवीतंविनाकृतम् ॥ अपवित्रकृतंकर्मतत्सर्वंनिष्फलंभवेत् । इतियमस्मृ
तेः॥ऊर्द्ध्वपुंड्रस्वरूपमप्याथर्वणेउक्तं। पुंड्रंहरिपदाकृतीतिईशानलिंगवदितिभगवत्पूज्यपादाः। संहितायांतुनासाद्यात्केशपर्यंतंसछिद्रंसोर्द्ध्वपुं
ड्रकमित्युक्तंतदेवप्राक्तनमन्यानितुकल्पितान्येवेतिप्रतिभाति।तत्रोर्ध्वपुंड्रंकुर्वीतवंशपत्राकृतिंनरइतिशैवेपि।यत्त्वाश्वलायनेनोक्तंप्राक्पिंड
दानाद्गंधाद्यैर्नालंकुर्यात्स्वविग्रहमितितत्तुगंधादिनैर्निषेधोनजलादिना । श्रौतंस्मार्तंचकुर्वीतकृत्वातोयोर्ध्वपुंड्रकम्॥ यामैकमात्रतःपश्चाद

न्यत्कुर्याद्यथोचितमितिकौशिकोक्तेः । भृगुरपिअभावेतूदकेनैवपुंड्रीदैवतमर्चयेदिति । देवानांपितरोदेवाइतिस्मृतेःपितॄणामपिदैवतत्वम
स्त्येव । भृगुणापुंड्रीत्युक्तंतेनत्रिपुंड्रीकुर्यादितिनज्ञेयं । ऊर्ध्वंचातिलकंकुर्यान्नकुर्याद्वैत्रिपुंड्रकम् ॥ निराशाःपितरोयांतिदृष्ट्वाविप्रंत्रिपुंड्रक
मितिबृहत्पाराशरोक्तेः । केचितुविप्रमेवत्रिपुंड्रधारिणंभोजनार्थमागतंवर्ज्यमाहुरिति । किंचयतोऽभिज्ञः स्यात् । नित्योर्द्ध्वपुंड्रधारीतुज्ञान
वान्जायतेध्रुवमित्युक्तेः । यइतिपदंलिंगव्यत्यासेनयोज्यं । यदूर्द्ध्वपुंड्रंआदिकवयेनारदायब्रह्मज्ञानंतेने । उर्ध्वंपुंड्रधरन्ब्रह्मप्राप्तवान्नारदोमु
निरितिविष्णुधर्मे । यस्मिन्नूर्ध्वपुंड्रेसूरयोविद्वांसोपिशैवशाक्तादयोमुह्यंति । तिर्यक्त्रिपुंड्रमुत्सृज्यैकंपुरुषार्थैकभाजनम् ॥ पुंड्रांतरंभ्रमाद्वा
पिवैदिकोनैवधारयेदिति । पुंड्रांतरंकदाचिद्वाप्यश्रौतंधारयेद्द्विजः ॥ वैदिकोयदिमोहेनपतत्येवनसंशयइत्यादिकल्पितवाक्यैर्निन्दांकुर्व
तिनस्त्वेतदश्रौतंश्रुतिविहितत्वात् । तथाचश्रुतिः । धृतोर्ध्वपुंड्रःपरमेशितारंनारायणंसांख्ययोगाभिगम्यम् ॥ ज्ञात्वाविमुच्येतनरः सम
स्तैः संसारपाशैरिहचसमस्तैरितिमहोपनिषदि । कठशाखायांचधृतोर्ध्वपुंड्रः श्रितचक्रधारीविष्णुंपरध्यायतियोमहात्मा ॥ स्वरेणमंत्रेण
सदाहृदिस्थितंपरात्परंयोमहतोमहांतमिति । हरेःपादाकृतिमात्मनोहितायमध्येछिद्रमूर्द्ध्वपुंड्रंयोधारयतिपरस्यपुंसःप्रियोभवतिसपुण्यवा
न्समुक्तिमान्भवतीत्याथर्वणे । किंभूतंस्वेनधाम्नाप्रकाशेननिरस्तःकुहकःसर्वपापलक्षणोयेनतत्तथाऊर्ध्वपुंड्रधृतेः सर्वपापहानिः प्रजायते
इतिब्रह्मांडे । पुनःसत्यंसत्यरूपहरेः प्रापकं।यावज्जीवमिदंपुण्यमूर्ध्वपुंड्रंदधातियः । जन्मन्यनंतरेमुक्तिंसद्यःप्राप्नोतिदुर्लभामिति। पुनःपरं
देववंद्यत्वापादकं । ऊर्ध्वपुंड्रधरोमर्त्यस्त्रिदशैरपिवंद्यते । इत्यूर्ध्वपुंड्रपक्षः ॥ ९८ ॥
॥ अथकांचीक्षेत्रपक्षमाह । प्रसंगागतगोपीचन्दनोर्ध्वपुंड्रपक्षौनिरूप्येति । वयंतत्कांचीक्षेत्रंसदाहृदाधीमहि । तत्किंयत्रत्रयाणांपातको
पपातकमहापातकानांसर्गःस्थितिर्मृषा । कांच्यांपुर्य्यांनिवसतांनश्यंतित्रिविधान्यपि ॥ पातकानिनसंदेहःशिवविष्णववलोकनादितित
न्माहात्म्ये। कथंयथातेजोवारिमृदांविनिमयोमृषा यतोयस्मिन्क्षेत्रेस्वराड्विष्णुःआद्यस्यवेदस्यअर्थेषुसर्वपदवाच्येष्वभिज्ञाद्शिवश्चजन्मा
विर्भावमन्वयात् । इतरतःइतरेपिदेवाःजन्माविर्भावमन्वयुः । स्वराड्विष्णुर्महादेवःसर्वेशोयज्ञपूरुषइतिकोशांतरात्स्वराड्विष्णुः । शब्दजा

तमशेषंतुधत्तेशर्वस्यवल्लभा ॥ अर्थजातमशेषंहिधत्तेमुग्धेंदुशेखरः । इतिमल्लिनाथोक्तेरर्थेष्वभिज्ञःशिवएवेतिभावः । शिवोविष्णुश्चसततं
पुर्यांकांच्यांवितिष्ठतः ॥ अन्येऽखिलादेवगणास्तत्रसंतिनसंशयः । इतितन्माहात्म्योक्तेः ॥ यःस्वराट्आदिकवयेब्रह्मणेब्रह्मतेनेयःशिव
आदिकवयेनारदायादिसनातनंब्रह्मतेने । नारदायप्रवोचंतंवृष्यांब्रह्मसनातनमितिवक्ष्यमाणत्वात् । यस्मिन्ब्रह्मणिसूरयोविद्वांसोपिमुह्यं
ति । किंभूतंस्वेनधाम्नाश्रयेणशिवेनविष्णुनावानिरस्ताःकुहकाःपापसमूहायेनतत्तथा । तत्क्षेत्रस्याधिपौदेवौदर्शनात्पापहौनृणाम् ॥ वि
ष्णुपिनाकिनावीशौकावेरीतटसंस्थितावित्यपितन्माहात्म्ये । पुनःकिंभूतंसत्यंमोक्षंपिपर्त्तिपालयतिपूरयातिददातिस्वसेविनामितिसत्यं
परं । पिपर्त्तेःखप्रत्ययः । शिवकांचीविष्णुकांचीमोक्षदात्रीस्वसेविनामितिच ॥ इतिकांचीक्षेत्रपक्षः ॥ ५९ ॥ ॥छ॥
॥ अथावंतिकापक्षः ॥ ॥ वयंतदवंतिकाक्षेत्रंसदाहृदाधीमहि । तत्किंयत्रत्रयाणांशिप्रागंधवतीमहाकालेश्वराणांसर्गःस्थितिरमृषा । शि
सर्वाघहागंगातथागंधवतीसरित् ॥ महाकालेश्वरोदेवोवन्तिकायांसदास्थिताः ॥ दर्शनस्पर्शनस्नानैर्नृणांभवविमोचकाः ॥ इतिविशाला
माहात्म्योक्तेः । कथं यथातेजोवारिमृदामविनिमयःस्वरूपावस्थानममृषेति । किंचयतःसकाशादाद्यस्यवेदस्यजन्मसस्वराट्कृष्णःइतरो
बलोपियत्रान्वयात्जगाम । किंकर्त्तुंआदिकवयेआदिकविंवेदमध्येतुं । तुमोप्रयुक्तस्योतिचतुर्थी । आदौसृष्ट्यादौकौतिपरभक्तिरूपंशब्दं
करोति जयजयजह्यजामित्यादिलक्षणमित्यादिकविर्वेदस्तस्मै । किंभूतःस्वराट्इतरश्चअर्थेषुसर्वपदार्थेष्वभिज्ञःउभावेवार्थाभिज्ञौलोकसंग्र
हार्थमवंतिकांगत्वासांदीपिनेर्गुरोस्सकाशात्पठेतुः । तद्वक्ष्यतिश्रीदशमे । प्रभवौसर्वविद्यानांसर्वज्ञौजगदीश्वरौ ॥ नान्यसिद्धामलंज्ञानंगू
हमानौनरेहितैः ॥ अथोगुरुकुलेवासमिच्छंताउपजग्मतुः ॥ काश्यांसांदीपिनिंनामह्यवंतीपुरवासिनम् ॥ अथोपसाद्यतौदांतौगुरुवृत्तिम
निंदिताम् ॥ ग्राहयंता वुपेतौस्मभक्त्यादेवमिवादृतौ । इति ॥ यःसांदीपिनिःस्वराडितराभ्यांकृष्णबलदेवाभ्यांब्रह्मतेने । तयोर्द्विजवर
स्तुष्टश्शुद्धभावानुवृत्तिभिः । प्रोवाचवेदान्निखिलान्सांगोपनिषदोगुरुः ॥ सरहस्यंधनुर्वेदंधर्मान्न्यायपथांस्तथा ॥ तथाचान्वीक्षिकींविद्यांरा
जनीतिश्चषड्विधाम् ॥ यच्छब्देनसांदीपिनिबोधस्तुत्यदादीनांबुद्धिस्थपरामर्शकत्वमितिभाष्यात् । यस्मिन्ब्रह्मणिसूरयोविद्वांसोब्र



ह्मादयोपिमुह्यंति । किंभूतंक्षेत्रंस्वेनधाम्नाश्रयेणमहाकालेश्वरेणपरंसर्वोत्कृष्टंसर्वपापहरं । तदुक्तंस्कांदे । नभसितारकालिंगंपातालेहाटकेश्व
रम् ॥ मर्त्यलोकेमहाकालंदृष्ट्वापापैःप्रमुच्यते ॥ इति । पुनःकिंभूतंसत्यंसत्यरूपमोक्षदत्वात् सप्तपुरीषुगणितत्वेन । तदुक्तं अयोध्यामथुरा
मायाकाशीकांचीह्यवंतिका ॥ द्वारावतीपुरीज्ञेयाः सप्तैतामोक्षदायिकाः ॥ इति ॥ इत्यवंतिकापक्षः ॥ ६० ॥ ॥ ॥ ॥
॥ अथपुरुषोत्तमक्षेत्रपक्षः ॥ वयंतत्पुरुषोत्तमक्षेत्रंसदाहृदाधीमहि । तत्किंयत्रत्रयाणामुत्तममध्यमाधमानांसर्गोमृषा । एकत्रभोजित्वात् । ब्र
ह्मक्षत्रविशांचैवशूद्राणामितरस्यच ॥ भोजनालौनसंभेदःसर्वेविप्रस्वरूपिणः ॥ पुरुषोत्तमक्षेत्रेतुनीलाद्रौजागदीशके ॥ इतितन्माहात्म्ये ।
कथंयथातेजोवारिमृदांविनिमयोमृषा । यतोयस्मिन्क्षेत्रेआद्यस्यजगदीशसंज्ञकस्यविष्णोर्जन्मशालिग्रामरूपेणजन्माविर्भावोभूत् । इत
रतइतरयोःसुभद्राबलदेवयोश्चजन्माभूत् । तथाचर्ग्वेदीयौत्क्रमणप्रकरणे । यत्रदेवोजगन्नाथोदक्षिणस्यमहोदधेः ॥ बलभद्रः सुभद्रा
चतत्रमाममृतंक्वधीत्युक्तमपि । तेनश्रौतामिदंक्षेत्रमेतत्पाद्मेस्पष्टम् ॥ यदाइतरतःइतरोपिजनः यतोयत्राद्यस्यात्तुंयोग्यस्यश्रीजगन्नाथनैवे
द्यस्यान्वयादर्थेष्वभिज्ञश्चस्यात् । जगन्नाथान्नशेषंतुभुक्त्वाज्ञानभिवेत्ध्रुवमित्यादिमाहात्म्ये । यत्क्षेत्रंस्वराट्स्वेशकृतप्रकाशमितिभावः ।
यस्मिन् क्षेत्रेयेसूरयोभगवत्प्रसादमाहात्म्याभिज्ञास्तेनमुह्यंति । इइतिआश्चर्ये । किंकर्त्तुंआदिकवयेआदिकविंश्रीजगन्नाथंद्रष्टुं । किंभूतंस्वे
नधाम्नाप्रभावेणपरंपरत्वापादकम् । परत्वंब्राह्मणत्वम् । तदुक्तं जगन्नाथमुखंदृष्ट्वापद्मनाभंजनार्दनम् ॥ कोटिजन्मसुविप्रःस्या
द्धनाढ्योवेदपारगः ॥ इतिजगन्नाथमाहात्म्ये । ब्राह्मणानांपरत्वमाह । ब्राह्मण्यंदुर्लभंलोकेसुकृतैर्विविधैरपि ॥ नयज्ञदानैर्नतपोभिरुग्रैर्न
पुण्यसंघैरपरैरपीष्टैः ॥ अस्माद्वशोभूपतयोर्थवंतोनतेलभंतेऽवनिदैवतत्वम् ॥ इति । किंच निगमोधर्मशास्त्रंचयदाधारेप्रवर्त्तते ॥ वि
प्रास्तेवैष्णवीमूर्तिः पावनीपरमामता ॥ सर्वंशुभंजगतिधर्मतरावलम्ब्यंतस्यप्रमानिगमतो नृपधर्मशास्त्रात् ॥ नूनंतयोरपिगतिर्भुविभू
मिदेवास्तैरर्चितैरिहजगत्पतिरर्चितः स्यात् ॥ नयज्ञयोगैर्नतपोभिरन्यैर्नयोगयुक्त्यानसमर्चनेन ॥ तथाविभुस्तुष्यतिदेवदेवोयथामही
दैवततोषणेन ॥ इतिपातालखंडेंबरीषोक्तेः । किंचनारदेनापिसत्यभामादत्तोविष्णुर्यदामेजन्मतदाब्राह्मणस्यैवनान्यस्येतिकृष्णंप्रार्थ्य

ततस्तदंगीकारयित्वैवमुक्तोतोपिज्ञायतेब्राह्मणमहत्त्वमितिहरिवंशेस्पष्टम् । पुनः सत्यंसत्यमूर्त्तेर्विष्णोरधिकरणत्वात् ॥ पुनः ब्रह्मबृहत् जगन्नाथपुरादन्यत्क्षेत्रंभूमौबृहन्नहि ॥ यत्रगत्वान्नमास्वाद्यवैकुंठस्याप्रियोभवेदिति । किंचक्षेत्रंमहानसंसर्वपूतंवंद्यंसदामरैः ॥ यत्रंग त्वेतरोमर्त्योविप्ररूपोभवेद्ध्रुवम ॥ स्पृश्यास्पृश्यविचारस्तुतत्रकार्योनवैक्वचित् ॥ इत्यलम् ॥ विशेषस्तुतन्माहात्म्येद्रष्टव्यः ॥ इ तिपुरुषोत्तमक्षेत्रपक्षः ॥ ६१ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥

अथप्रसंगागतंभगवन्नैवेद्यपक्षमाह॥वयंतद्भगवन्नैवेद्यंसदाहृदाधीमहि । तत्किं यत्रत्रयाणांपितृदेवमनुष्याणांसर्गस्तदशननिश्चयोऽमृषा॥त थाचश्रुतिः। एकएवाग्रेनारायणआसीन्नब्रह्मानेमे द्यावापृथिव्यौसर्वेदेवाः सर्वेपितरःसर्वेमनुष्याविष्णुनाशितमश्नंतिविष्णुनाघ्रातंजिघ्रंतिवि ष्णुनापीतंपिबंतितस्माद्विद्वांसोविष्णूपहृतंभक्षयेयुरिति। कथंयथातेजोवारिमृदामविनिमयोऽमृषा । यतोयस्यान्वयात्पुमान्अर्थेषुवांछि तेष्वभिज्ञोभवतितांल्लभतेइत्यर्थः । तदुक्तं तुलसीदललग्नंहिप्रसादान्नंहरेर्नरः ॥ योभक्षयतिराजेंद्रलभतेचिंतितंहिसः ॥ इतिब्रह्मांडे । य न्नैवेद्यमितरतइतरदेवनैवेद्येभ्यःस्वराट्बहुफलं। तदुक्तं भुक्त्वान्यदेवनैवेद्यंनरश्चांद्रायणंचरेत्॥ भुक्त्वाकेशवनैवेद्यंकोटियज्ञफलंलभेदितिपा द्मे । किंच विष्णोर्निवेदितान्नेनयष्टव्यंदेवतांतरम् ॥ पितृभ्यश्चापितद्देयंतदानन्त्यायकल्पते ॥ इतिस्कांदे । भक्ष्यंभोज्यंचयत्किंचिद निवेद्याग्रभोक्तरि ॥ नदेयंपितृदेवेभ्यःप्रायश्चित्तीयतोभवेत् ॥ सर्गादौकल्पितोदेवैरग्रभुग्भगवान्हरिः॥यज्ञभागभुजोदेवास्ततस्तेनैवकल्पि ताः॥तेनानिवेदितंविष्णोर्नगृह्णन्तिदिवौकसः॥व्यतिक्रमभयात्सर्वस्वामिनोजगदीशितुः॥स्वादयेयुश्चपितरोभृत्याइन्द्रादयःसुराः॥अतस्त द्भुक्तशेषंतुहरेर्ब्रह्मादिसद्गुरोरितिविष्णुरहस्ये॥नारदीयेतुपितृशेषंतुयोदद्याद्धरये परमात्मने॥रेतोधाःपितरस्तस्यभवंतिक्लेशभागिनः ॥ इति किंभूतस्य यत आद्यस्यात्तुंविधेयस्य । तदुक्तं पादोदकंपिबेन्नित्यंनैवेद्यंभक्षयेद्यतः ॥ शेषंचमस्तकेधार्यमितिवेदानुशासनमितिगारुडे ॥पत्रं पुष्पंफलंतोयंचान्नपानाद्यमौषधम् ॥ अनिवेद्यनभुंजीतयदाहारायकल्पितम् ॥ अनिवेद्यतुभुंजानःप्रायश्चित्तीभवेन्नरः ॥ तस्मात्सर्वंनि वेद्यैवविष्णोर्भुंजीतनान्यथेतिपाद्मे । यस्मिन्नैवेद्येसूरयस्तेनमुह्यंति । इइतिवितर्के । अन्येतुशाक्तादयोमुह्यंत्येवतत्राभक्ष्यबुद्धिंकुर्वंति॥वि



ष्णोर्नामनगृह्णीयान्नस्पृशेत्तुलसीदलं॥तन्नैवेद्यंनचाश्नीयान्नचपादोदकंपिबेदित्यादिवाक्यानिवदंतीतिभावः॥ महाप्रसादेगोविंदेनामब्रह्माणि वैष्णवे॥स्वल्पपुण्यवतांराजन्विश्वासोनैवजायतइतिविष्णुधर्मोक्तेश्च॥किंकर्तुमादिकवयेआदिकविंप्राप्तुं । योनैवेद्यंहरेर्भुंक्तेसविष्णुंलभतेपर मितिविष्णुधर्मे । किंभूतंस्वेनधाम्नाप्रभावेणनिरस्तः कुहकोभक्ष्याभक्ष्यविचारोयस्मिन् । ब्रह्मांडपुराणेउक्तमपि । नैवेद्यंजगदीशस्यह्यन्न पानादिकंचयत् ॥ भक्ष्याभक्ष्यविचारस्तुनास्तितद्भक्षणेद्विजाः ॥ कौर्म्येपि । कुक्कुरस्यमुखाद्भ्रष्टंमदन्नंयदिलभ्यते । भाग्यतःकुत्रचिद्भक्ष्य मिंद्रादीनांतुदुर्लभमिति । पुनःकिंभूतंनैवेद्यंब्रह्मब्रह्मवत् । तदुक्तंब्रह्मवन्निर्विकारंहियथाविष्णुस्तथैवतत् ॥ विचारंयेप्रकुर्वंतितेनश्यंतिनरा धमाः । इतिवाराहे । नैवेद्यंप्रकृत्योक्तंब्रह्मार्पणंब्रह्महविरितिगीतोपनिषदि। पुनः किंभूतंसत्यंसद्रूपंविष्णुरूपत्वात्तदुक्तमेव । पुनःपरंसर्वव्रता दिभ्यउत्कृष्टफलदं।षड्भिर्मासोपवासैस्तुयत्फलंपरिकीर्तितम् ॥ विष्णोर्नैवेद्यसिक्थेनतत्फलंभुंजतांकलौ ॥ किंचनैवेद्यमन्नंतुलसीविमिश्रं विशेषतःपादजलेनसिक्तम् ॥ योश्नातिनित्यंपुरतोमुरारेःप्राप्नोतियज्ञायुतकोटिपुण्यमितिस्कांदे ॥ मुकुंदाशनशेषंतुयोभुंक्तेहिदिनेदिने ॥ सिक्थेसिक्थेभवेत्पुण्यंचांद्रायणशताधिकम् ॥ इत्यलंप्रपंचेन ॥ इतिभगवन्नैवेद्यपक्षः ॥ ६२ ॥ ॥ ॥

अथविष्णुचरणामृतपक्षमाह ॥ वयंतद्धरिपादोदकंसदाहृदाधीमहि । तत्किंयत्रत्रयाणांभूतभाविवर्तमानपापानांसर्गोमृषा । भूतंभाव्यं वर्तमानंपापंनश्यातितत्क्षणात्॥ हरेःपादामृतंपीत्वासत्यंसत्यंनसंशय इतिभक्तिचंद्रोदये । कथंयथातेजोवारिमृदांविनिमयः यतोयस्यान्व यात्सेवनादर्थेष्वाद्यस्यधर्मस्यजन्म।विष्णोःपादोदकंपीत्वासर्वधर्मफलंलभेदितिस्कांदाद्युक्तेः। किंचयतइतरतः प्राकृतोपिजनः स्वराट्भव ति। शालिग्रामशिलातोयंयःपिबेद्बिंदुनासमम् ॥ मातुःस्तन्यंपुनर्नैवसभवेन्मुक्तिभाङ्नरइतिपाद्मे।स्कांदे स्नानपादोदकंविष्णोः पिबन्नाशिर सिधारयन् ॥ सर्वपापविनिर्मुक्तोविष्णुलोकंसगच्छति ॥ किंच छिन्नस्तेनमहासेनगर्भवासोहिदारुणः ॥ पीतंयेनसकृद्भक्त्याश्रीकृष्णचर णोदकमिति । योभिज्ञःविवेकीअर्थाच्छिवस्तच्चरणोदकंआदिकवयेकार्त्तिकेयायब्रह्मतद्रूपंतेनप्रकाशितवान् । गांगंपादोदकंविष्णोर्नार्मदंयामुनंतथा ॥ तद्ब्रह्मरूपंसततंवारिनैवामृतंहितत् ॥ कार्तिकेयमहाभागतत्पानाद्यैर्भवेद्धिसः॥इति।सर्वागमप्रणेताचवांछितार्थप्रदायकः॥ इति

प्रज्ञावर्द्धनस्तोत्रेकार्त्तिकेयस्यसर्वागमप्रणेतृत्वेनकवित्वंनिश्चितमेव॥यस्मिन्पादोदकेसूरयोविद्वांसोपिनास्तिकाभासामुह्यंति । किंभूतंस्वे
नधाम्नाप्रतापेनानिरस्तःकुहकोऽपावित्र्यलक्षणोयेनतत्तथा। आशौचंनैवविद्येतसूतकेमृतकेपिवा॥येषांपादोदकंमूर्ध्निश्रीकृष्णस्यपतेद्यदि।
सुलभंकिंनसेवेतहरेःपादोदकंशुभम्। यस्यसंस्पर्शमात्रेणपूतोभवतिमानवः॥इतिब्रह्मांडे।पुनःसत्यंब्रह्मरूपत्वात्।पुनःपरमुत्कृष्टतरंसर्वपावने
भ्यः। तदुक्तं यानिकानिचतीर्थानिब्रह्मांडांतर्गतानिच॥ विष्णुपादोदकस्यैवकलांनार्हंतिषोडशीमितिगरुडे।प्रसंगात्पादोदकस्वरूपमाह
चंदनंतुलसीविप्रःशंखोघंटांबुचक्रकम्॥ शिलाताम्रस्यपात्रंतुविष्णोःसूक्तंपदामृतमिति । पाद्मे । अथान्यदाह बल्यादिभ्योह्यदत्वाथकरणे
पिबतेयादे ॥हरिपादोदकंनित्यंसुरांपिबतिसध्रुवमित्याचारार्के। बल्यादयस्तुबलिर्बिभीषणोभीष्मःप्रल्हादोनारदोर्जुनः॥षडेतेवैष्णवानि
त्यंगृह्णंतुचरणोदकमितिस्मृतिसंग्रहे।गरुडेपि विष्णुपादोदकंपीतंकोटिजन्माघनाशकम्॥पात्रांतरेणतद्ग्राह्यंकरेणसुरयासमम्॥इति।विष्णोः
पादोदकंपीतंमहापातकनाशनम् ॥ महापातकदंतद्धिभूमौबिंदुनिपातनादितिस्कांदे । तद्ग्रहणमन्त्रश्च अकालमृत्युहरणंसर्वव्याधिविना
शनम् ॥विष्णुपादोदकंपीत्वाशिरसाधारयाम्यहमिति। विष्णुपादोदकंमूढोह्यपीत्वायस्तुमस्तके ॥ प्रक्षेपणंप्रकुर्वीतब्रह्महासनिगद्यते ॥
इति। पाद्मेपि येपिबंतिनरानित्यंशालिग्रामशिलाजलम्॥पञ्चगव्यसहस्रैस्तुप्राशितैःकिंप्रयोजनमिति॥अयमेवपरोधर्मस्त्विदमेवपरंतपः॥
इदमेवपरंतीर्थंविष्णुपादांबुसंपिबेदिति।स्कांदेतुस्पष्टमेवपरत्वंप्रतिपादितं॥इतिविष्णुपादोदकपक्षः॥ ६३ ॥ ॥छ॥
॥अथतुलसीतरुपक्षमाह॥ वयंतंतुलसीतरुंसदाहृदाधीमहि । तंकंयत्रयस्मिन्रोपितेत्रयाणांकायिकवाचिकमानसिकपापानामध्यात्मादि
तापत्रयाणांवासर्गउत्पत्तिर्मृषा। तदुक्तं आरोपितेतरौतापंपापश्चत्रिविधंतथा॥तुलस्यानाशमायातितदुत्पत्तिःपुनर्नहीतितुलसीमाहात्म्ये।
रोपणात्पालनात्सेकात्स्पर्शनाद्दर्शनान्नृणां॥तुलसीदहतेपापंवाङ्मनःकायसंचितं॥ इतिपाद्मेपि।यद्वायत्रत्रयाणांपत्रपुष्पकाष्ठादीनांसर्गो
मृषैव। ब्रह्मरूपत्वादस्य।तुलसीतरुरूपेणसाक्षाद्ब्रह्मैववर्तते।प्रतीतिः पत्रपुष्पादेर्मायायैवनचान्यथेतिस्कांदपाद्मयोः॥गौतमीतंत्रेपितस्याब्र
ह्मरूपत्वमुक्तं। यज्ञोपवीतवद्धार्यातुलसीमालिकासदा॥नाशौचंधारणेतस्यायतःसाब्रह्मरूपिणीति। यद्वात्रयाणांवेदानांदेवानामग्नीनांवावि



तृणांसन्ध्यानांसर्गोयत्रामृषासत्यःसर्गः।स्थितिस्तदुक्तंपाद्मे।त्रयोवेदास्त्रयोदेवास्तिस्रःसन्ध्यास्त्रयोग्नयः॥ तुलसीवृक्षमासाद्यसदातिष्ठंतिस
त्तमेति। कथंयथातेजोवारिमृदांविनिमयोअविनिमये।वायतोयस्यास्तुलस्याआद्यस्यश्रीहरेरर्चनायजन्माविर्भावःअर्चनायेतिशेषः।विष्णो
राराधनार्थायवृन्देजातासिशोभने॥ इतिवृन्दांप्रतिगोपिकोक्तेः। चपुनःयोवृन्दातरुरितरतइतरवृक्षेभ्यःस्वराट्प्रशस्ततरोबहुबलप्रदत्वात्।
तदुक्तंपाद्मे।आम्रारोपसहस्रेणपिप्पलानांशतेनच॥ यत्फलंहितदेकेनतुलसीविटपेनत्विति। यद्वाइतरपुष्पेभ्यःस्वराड्बहुफलं। मणिकांच
नपुष्पाणितथामुक्तामयानिच ॥ तुलसीपत्रदानस्यकलांनार्हन्तिषोडशीमिति। वक्ष्यत्यपि। मन्दारकुन्दकुटजोत्पलचम्पकार्णपुन्नागनाग
बकुलांबुजपारिजाताः। गन्धेर्चितेतुलसिकाभरणेनतस्यायस्मिंस्तपःसुमनसोबहुमानयन्तीति।किंच यतोयस्यान्वयाद्दर्शनादिसंबन्धात्पु
मानर्थेष्वनेकेष्वभिज्ञोभवाति। तदुक्तं यादृष्टानिखिलाघसंघशमनीस्पृष्टावपुःपावनीरोगाणामभिवंदितानिरसनीसिक्तांतकत्रासिनी ॥ प्र
त्यासन्नविधायिनीभगवतःकृष्णस्यसंरोपितान्यस्तातच्चरणेविमुक्तिफलदातस्यैतुलस्यैनमः॥ इत्येकादशीमाहात्म्योक्तेः। यस्तुलसीतरु
रादिकवयेनारदायब्रह्मज्ञानंतेने। प्राप्तोज्ञानंपरंवृंदासेवनान्नारदोमुनिरित्यादिपुराणात्।यद्यपिवृंदयादेवतारूपेणनारदायज्ञानंदत्तंतथापि
सैवदेवतातरुरूपाबभूवेतिनदोषः। यस्मिन्वृंदातरौसूरयोपियथाकथंचिद्वाममार्गगानस्पृशेत्तुलसीदलमित्यादिमोहंप्राप्नुवंति। किंभूतंस्वे
नतेजसायद्वाधाम्नाश्रयेणहरिणानिरस्ताःकुहकायमकिंकरायेनतं । तदुक्तं।तुलसीकाननंवैश्यगृहेयस्यावतिष्ठते॥तद्गृहंतीर्थभूतंहिनोयांति
यमकिंकराः॥इतिदेवदूतविकुंडलसंवादोक्तेः। पुनःसत्यंसत्यरूपविष्णुरूपत्वात्। अमृतिजन्मवत्त्वात्। अविर्भावतिरोभावौतुलस्यास्तो
नसंशयः। इतितन्माहात्म्योक्तेः। पुनःपरंसर्वसुगंधिद्रव्येभ्यउत्कृष्टम्। कर्पूरंरोचनंदिव्यंपाटीरंमलयोद्भवम्॥ मृगनाभिसमुद्भूतंयदन्यद्गं
धवद्वसु॥नतथातैर्हरिर्नित्यंप्रमोदतेवृन्दयायथेति । किञ्चतावद्गर्जंतिपुष्पाणिमालत्यादीनिभूसुर। यावन्नप्राप्यतेपुण्यातुलसीविष्णुवल्लभे
तिस्कांदोक्तेश्च। अथप्रसंगादन्यदपितन्महत्त्वमाह । तुलसीदललग्नेनचंदनेनजनार्दनम्॥ विलेपयतियोनित्यंलभतेचिंतितंफलमितिग
रुडे। तत्रैवतच्चंदनमहत्त्वंनारदेनोक्तम् । योददातिहरेर्नित्यंतुलसीकाष्ठचंदनम्॥ युगानिवसतेस्वर्गेह्यनंतानिनरोत्तमः॥ महाविष्णोः

कलौभक्त्यादत्वातुलसिचंदनम् ॥ योर्चयेन्मालतीपुष्पैर्नभूयःस्तनपोभवेत् ॥ सर्वेषामेवदेवानांतुलसीकाष्ठचंदनम् ॥ पितॄणांचविशेषे
णसदाभीष्टंहरेर्यथा ॥ मृत्युकालेतुसंप्राप्तेतुलसीतरुचंदनम् ॥ लिप्यतेयस्यदेहेसहरिर्भूत्वाहरिंव्रजेत् ॥ तावन्मलयजंविष्णोर्भातिकृष्णागुरुर्नृप ॥
यावन्नदृश्यतेपुण्यंतुलसीकाष्ठचंदनम् ॥ तावत्कस्तूरिकामोदंकर्पूरस्यसुगंधता ॥ यावन्नदीयतेविष्णोस्तुलसीकाष्ठचंदनम् ॥ कलौयच्छं
तियेविष्णोस्तुलसीकाष्ठचंदनम् ॥ धुंधुमारनवैमर्त्याःपुनरायांतितेभुवम् ॥ योहिभागवतोभूत्वाकलौतुलसिचंदनम् ॥ नार्पयतिसदावि
ष्णोर्नसभागवतोनरः ॥ हरेर्मलयजंश्रेष्ठंतदभावेमरदारुजमिति । प्रल्हादसंहितायांतु तुलसीकाष्ठमाहात्म्यंकथयामिबलेशृणु ॥ यच्छु
त्वामुच्यतेपापात्कृताज्जन्मशतैरपि ॥ पत्रंपुष्पंफलंमूलंशाखाकाष्ठादिकंचयत् ॥ तुलसीसंभवंसर्वंपावनंमृत्तिकादिकम् ॥ शरीरंदह्यतेयेषां
तुलसीकाष्ठवह्निना ॥ नतेषांपुनरावृत्तिर्विष्णुलोकात्कथंचन ॥ ग्रस्तोयदिमहापापैरगम्यागमनादिकैः ॥ मृतःशुध्यतिदाहेनतुलसीकाष्ठव
ह्निना ॥ दत्वातुतुलसीकाष्ठंसर्वांगेषुमृतस्यच ॥ पश्चाद्यःकुरुतेदाहंसोपिपापात्प्रमुच्यते ॥ तीर्थंयदिनसंप्राप्तंकीर्तनंस्मरणंहरेः ॥ तुलसी
काष्ठदग्धस्यनतस्यपुनरागतिः ॥ यद्येकंतुलसीकाष्ठंमध्येकाष्ठशतस्यच ॥ दाहकालेभवेन्मुक्तिःपापकोटियुतस्यच ॥ गंगांभसाभिषेकेण
यांतितोयानिपुण्यताम् ॥ तुलसीकाष्ठमिश्राणियांतिदारूणिपुण्यताम् ॥ तुलसीकाष्ठदग्धस्यपुनर्जन्मनविद्यते ॥ कृष्णरूपवपुर्भूत्वाक
ल्पानिवसतेदिवि ॥ तुलसीकाष्ठसंमिश्रामृतस्यज्वलतेचिता ॥ दह्यंतेतस्यपापानिकल्पकोटिकृतानिच ॥ दह्यमानंनरंदृष्ट्वातुलसीकाष्ठ
वह्निना ॥ विमानस्थाःसुरगणाःक्षिपंतिकुसुमांजलीन् ॥ नृत्यंत्यप्सरसःप्रीतागीतंकुर्वंतिगायकाः ॥ कुरुतेवीक्षणंविष्णुःसंतुष्टःशम्भुनास
ह ॥ गृहीत्वातंकरेसौरिःस्वपुरेतस्यचाग्रतः ॥ मार्जतेतस्यपापानिपश्यतांत्रिदिवौकसाम् ॥ महोत्सवंकारयित्वाजयशब्दपुरस्सरम् ॥
ज्वलतेतत्रदैत्येंद्रतुलसीकाष्ठसंभवम् ॥ अग्न्यागारेश्मशानेचदह्यतेपातकंनृणाम् ॥ होमंकुर्वंतियेविप्रास्तुलसीकाष्ठवह्निना ॥ शतक्रतुसमं
पुण्यंगोशतंलभतेफलम् ॥ नैवेद्यंपचतेयस्तुतुलसीकाष्ठवह्निना ॥ मेरुतुल्यंभवेद्दत्तंतदन्नंकेशवस्यहि ॥ तुलसीपावकेयोवैदीपकंकुरुतेहरेः ॥

१–तत्सदृशस्तत्पार्षदोभूत्वेत्यर्थः ।

दीपलक्षसहस्राणांपुण्यंभवतिदैत्यराट् ॥ नतेनसदृशोलोकेवैष्णवोभुविदृश्यते ॥ तुलसीदारुजातेनचंदनेनकलौनरः ॥ विलिप्यभक्तितो
विष्णुंरमतेसन्निधौहरेः ॥ तुलसीचंदनाद्यागःकुरुतेविष्णुपूजनम् ॥ पूजाशतंदिनैकेनलभतेशतवार्षिकम् ॥ विलेपनार्थंकृष्णस्यतुलसीका
ष्ठचंदनम् ॥ मंदिरेतिष्ठतेयावत्तावत्पुण्यफलंशृणु ॥ तिलप्रस्थाष्टकंदत्त्वायत्पुण्यंचोत्तरायणे ॥ तत्पुण्यंजायतेपुंसांप्रसादाच्चक्रपाणिनः ॥
योददातिपितॄणांचतुलसीकाष्ठचंदनम् ॥ पितॄणांजायतेतृप्तिःश्राद्धकालेशताधिका ॥ नारदीयेपि । यथाविष्णोःसदाभीष्टंनैवेद्यंशालिस
भवम् ॥ शुकेनोक्तंपुराणंचतथातुलसिचंदनम् ॥ पाद्मे । तावद्वर्षसहस्राणियावद्बीजदलानिच ॥ वसंतिवैष्णवेलोकेतुलसींरोपयंतिये ॥ तु
लसीगन्धमाघ्रायपितरस्तुष्टमानसाः प्रयांतिगरुडारूढास्तद्विष्णोःपरमंपदम् ॥ दर्शनंनर्मदायास्तुगङ्गास्नानंविशांवर ॥ तुलसीदल
संस्पर्शःसममेतत्त्रयंस्मृतम् ॥ पक्षेपक्षेतुसंप्राप्तेतुलसीवनपूजनम् ॥ ब्रह्मादयोपिकुर्वंतिद्वादश्यांवैश्यसत्तम ॥ यन्मूलेसर्वतीर्थानियन्मध्ये
सर्वदेवताः ॥ यदग्रेचतुरोवेदास्तुलसितेनमोनमः ॥ पुष्करादीनितीर्थानिगंगाद्याःसरितस्तथा ॥ वासुदेवादयोदेवावसंतितुलसीदले ॥ श्र
वणंकीर्तनंध्यानंस्मरणंजलसेचनम् ॥ प्राशनंवीक्षणंपूजाष्टधातुलसिसेवनम् ॥ तुलसींप्राप्ययोनित्यंनकरोतिममार्चनम् ॥ तस्याहंप्राति
गृह्णामिनपूजांशतवार्षिकीम् ॥ गरुडे । कृतंयेनमहाभागतुलसीवनरोपणम् ॥ मुक्तिस्तेनभवेद्दत्ताप्राणिनांविनतासुत ॥ स्कांदेतु । तुलसी
वनजाछायायत्रयत्रभवेद्द्विज ॥ तत्रश्राद्धंप्रदातव्यंगयाश्राद्धफलाधिकम् ॥ नददातिगयांगत्वापिण्डंपुत्रोयदामुने ॥ तुलसीकाननेश्राद्धं
कृत्वासंतारयेत्पितॄन् ॥ पितृपिंडार्चनंश्राद्धंयत्कृतंतुलसीदलैः ॥ तृप्यंतिपितरोत्यर्थंयावच्चंद्रार्कमेदिनी ॥ तुलसीकाननेजंतोर्यदिमृत्युर्भवे
त्क्वचित् ॥ सन्निधौपद्मनाभस्यसयात्यत्रनसंशयः ॥ रोपितातुलसीयावत्कुरुतेमूलविस्तरम् ॥ तावद्युगसहस्राणितनोतिसुकृतंमुने ॥
स्कांदे । तुलसींविनायाक्रियतेनपूजास्नानंनयत्तत्तुलसींविनाकृतम् ॥ भुक्तंनतद्यत्तुलसीविवर्जितंपीतंनतद्यत्तुलसीविवर्जितम् ॥ यःकृत्वातु
लसीपत्रंशिरसाविष्णुतत्परः ॥ करोतिधर्मकार्याणिफलमाप्नोतिचाक्षयम् ॥ तुलसींयेप्रयच्छंतिपुराणाद्यर्चनायच ॥ रोपयंतिशुचौ
देशेतेषांलोकोक्षयःस्मृतः ॥ रोपितांतुलसींदृष्ट्वानरेणभुविभूमिप ॥ विवर्णवदनोभूत्वातत्पापंमार्जयेद्यमः ॥ तुलसीतिचयोब्रूयात्त्रिकाल

वंदयेद्यदि ॥ नित्यंसगोसहस्रस्यफलमाप्नोतिमानवः ॥ नित्यंसमर्चयेद्विष्णुंतुलस्यायस्तुभक्तितः ॥ महापापानिनश्यंतिकिंपुनश्चो
पपातकम् ॥ गृहंनरःसदायस्तुतुलसीदलविप्रुषैः ॥ त्रिसंध्यंप्रोक्षयेद्भक्त्यामहापापात्प्रमुच्यते । घटैर्यत्रघटीभिश्वसिक्तंतुलसिकावनम् ॥
जलधाराप्रवाहेणप्रीणितंभुवनत्रयम् ॥ त्यक्त्वापिमालतीपुष्पंपुष्पंचापिसरोरुहम् ॥ गृह्णातितुलसींशुद्धामपिपर्युषितांहरिः ॥ व्या
सः । पक्वंहितुलसीपत्रंशुष्कंपर्युषितंचयत् ॥ आनीयतत्प्रयत्नेनपूजयेत्पुरुषोत्तमम् ॥ किंच । तुलसीकाष्ठजंयस्तु चंदनंधारयेन्नरः ॥
तद्देहंनस्पृशेत्पापंक्रियमाणमपीहयत् ॥ स्कांदेतुतन्मालाधारणमुक्तम् । नजह्यात्तुलसीमालांधात्रीमालांविशेषतः ॥ महापातकसं
हर्त्रींधर्मकामार्थदायिनीम् ॥ विष्णुधर्मेपिविष्णुः । तुलसीकाष्ठजांमालांकंठस्थांवहतेतुयः ॥ अप्यशौचोप्यनाचारोमामेवैतिनसंशयः ॥
तुलसीकाष्ठसम्भूतांयोमालांवहतेनरः ॥ प्रायश्चित्तंनतस्यास्तिनाशौचंतस्यविग्रहे ॥ स्कान्दे । यस्यकण्ठोविरहितस्तुलसीकाष्ठमाल
या ॥ तंविलोक्यथवास्पृष्ट्वासवासाजलमाविशेत् ॥ निवेद्यकेशवेमालांतुलसीकाष्ठसम्भवाम् ॥ वहतेयोनरोभक्त्यातस्यनैवास्तिपातक
म् ॥ शयनेभोजनेस्नानेमलमूत्रविसर्जने । नत्यजेत्तुलसीमालांकंठलग्नांकदाचन ॥ जपेद्यःपुरुषोनित्यंतुलसीकाष्ठमालया ॥ मन्त्रान्निगम
जान्ब्रह्मन्सचानंतफलंलभेत् ॥ तुलसीकाननंयत्रयत्रपद्माकराःशुभाः ॥ वैष्णवायत्रतिष्ठंतितत्रसंनिहितोहरिः ॥ तुलसीदलगंधेनमालतीकु
सुमेनच ॥ कपिलाक्षीरदानेनसद्यस्तुष्यतिकेशवः ॥ गुह्यानियानिपापानिह्यनाख्येयानिमानवैः ॥ नाशयेत्तुलसीतानिधृतामाधवमू
र्द्धनि ॥ उपोष्यद्वादशींशुद्धांपारणेतुलसीदलम् ॥ प्राशयेच्चाथविप्रेंद्रअश्वमेधाष्टकंलभेत् ॥ हंतिपातकिनांपापंपुण्यवृद्धिंतथाश्रियम् ॥ क
रोतिपूजितादेवीतुलसीहरिवासरे ॥ द्वादश्यांयेकरिष्यंतितुलसीवनपूजनम् ॥ गृहारामेवनेवापिशृणुतेषांतुयत्फलम् ॥ प्रयागेतपसिस्ना
नेकाश्यांप्राणविमोक्षणे ॥ यत्फलंविहितंदेवैस्तुलसीपूजनेनतत् ॥ चतुरोवार्षिकान्मासांस्तुलस्यानियमेनाहि ॥ पूजयेद्यदिवैकुंठंगोसह
स्रफलंलभेत् ॥ जगद्धातरिगोविंदेप्रसुप्तेवर्णिनाकृते ॥ नमंतितुलसींनित्यांचांद्रायणशतंफलम् ॥ मासेप्रौष्ठपदेचैवद्वादश्यांबुधवासरे ॥ के
शवायतनेयस्तुकारयेत्तुलसीवनम् लभतेचाक्षयंस्थानंपितृभिःसहवैष्णवम् ॥ देवालयेषुसर्वेषुपुण्यक्षेत्रेषुयोनरः ॥ वापयेत्तुलसींपुण्यांतुष्ट्य



र्थंचक्रपाणिनः । गारुडेनारदः । तुलसीकाननेयस्तुमुहूर्तमपिविश्रमेत् । जन्मकोटिकृतात्पापान्मुच्यतेनात्रसंशयः ॥ प्रदक्षिणंयः
कुरुतेपठन्नामसहस्रकम् ॥ तुलसीकाननेनित्यंयज्ञायुतफलंलभेत् ॥ अशकुनमरिष्टंचयोनरः पथिपश्यति ॥ मनसाचिंत्यतुलसींपुनर्गच्छे
तत्पथम् ॥ यदिनप्राप्यतेस्वृक्षंशुभलग्नमथापिवा ॥ बलंचंद्रस्यगमनेप्रस्थानेतुलसींस्मरेत् ॥ यःस्मृत्वाततुलसींयानिकार्यंप्रतिनरोत्तमः
तस्यकार्यस्यसंसिद्धिर्जायतेनात्रसंशयः ॥ हरेर्मूर्त्त्यवशेषंचतुलसीकाष्ठचंदनम् स्वदेहेधारयेधस्तुतीर्थकोटिफलंलभेत् ॥ तीर्थाधिकंयज्ञशता
च्चपावनंजलंसदाकेशवदृष्टिसंस्थितम् ॥ छिनत्तिपापंतुलसीविमिश्रितंविशेषतश्चक्रशिलातलच्युतम् ॥ मुखेतुतुलसीपत्रंदृष्ट्वाशिरसिकर्ण
योः ॥ कुरुतेभास्करिस्तस्यदुष्कृतस्यापिमार्जनम् ॥ पुनःकृष्णोगरुडम् । त्रिकालंविनतापुत्रप्राशयेत्तुलसींतुयः ॥ विशिष्यतेकायशु
द्धिश्चांद्रायणव्रतंविना ॥ किंच चांद्रायणसहस्रस्यपाराकाणांशतस्यच ॥ तुल्यंफलमवाप्नोतितुलसीपत्रभक्षणात् ॥ श्रीकृष्णमूर्ध्निविन्य
स्तातुलसीपत्रमंजरी ॥ सुवर्णपुष्पकोटीनांफलंयच्छेतचाधिकम् ॥ पूजितंतुमहेशानंतुलसीदलमालया ॥ यःसंपश्यतिभूपालसगोकोटि
फलंलभेत् ॥ होमकालेतुसंप्राप्तेपूजयेज्जातवेदसम् ॥ ददातिवांछितान्कामांस्तुलसीदलपूजितः ॥ मृत्युकालेतुसंप्राप्तेभक्षयेत्तुलसीदलम् ॥ नि
र्वाणंयातिपक्षींद्रपापकोटियुतोपिसन् ॥ कृष्णपादाब्जसंलग्नामहोरात्रोषितांशुभाम् ॥ तुलसींधारयेद्यस्तुतस्यपुण्यमनंतकम् ॥ इत्युक्त्वा
भगवान्विष्णुस्तत्रैवांतरधीयत ॥ योनरःपठतेनित्यंमाहात्म्यंतुलसीभवम् ॥ गृहेतिष्ठतिराजेंद्रतस्यश्रीः सर्वतोमुखी ॥ एकादश्यांजाग
रणेयःपठेत्तुलसीस्तवम् ॥ द्वात्रिंशदपराधांश्चक्षमतेतस्यकंसहा ॥ प्रसंगात्तदर्चनमाह । कृष्णप्रियेप्रियावासेनित्यंश्रीधरसंस्तुते ॥ भक्त्या
दत्तंमयादेविअर्घंगृह्णनमोस्तुते ॥ पूजामंत्रः निर्मितात्वंपुराविप्रैरर्चितात्वंपुरासुरैः ॥ तुलसिहरमेपापंपूजांगृह्णनमोस्तुते । अथप्रार्थना ।
श्रियंदेहियशोदेहिदेहिसौख्यंतथाजयम् ॥ बलंपुष्टिंतथातुष्टिंतुलसित्वंप्रयच्छमे ॥ अथतदवचयमंत्रः । तुलस्यमृतजन्मासिसदात्वंकेश
वप्रिया ॥ केशवार्थंविचिन्वामिवरदाभवशोभने ॥ गरुडे । मोक्षैकहेतोर्धरणीप्रसूतेर्विष्णोः समस्तस्यगुरोःप्रियासि ॥ आराधनार्थंसुदलैः
सुपुष्पैर्लुनामिपत्रंतुलसिप्रसीद ॥ अवचयेनिषेधमाह ॥ भृगुभौमार्कवारेषुद्वादश्यांनिशिपर्वणि ॥ तुलसींयेविचिन्वंतितेछिंदंतिहरेःशिरः

इति ॥ वक्तव्यंचात्रबह्वस्तीत्यलंप्रपंचेन ॥ इतितुलसीपक्षः ॥ ९४ ॥ ॥ ॥ ॥ ॥
॥ अथशालिग्रामपक्षः ॥ ॥ वयंतंशालग्रामंतद्रुपंविष्णुंहृदाधीमहि । तंकंयत्रत्रयाणांलोकानांसर्गःस्थितिरमृषा । तदुक्तंस्कांदे ।
शालग्रामशिलायांतुत्रैलोक्यंसचराचरम् ॥ मयासहमहासेनलीनंतिष्ठतिसर्वदा ॥ कथं यथातेजोबारिमृदामविनिमयोऽमृषा । किञ्चयतो
पियस्यान्वयात्सेवनादितरतःप्राकृतोपिस्वराड्विष्णुर्भवति । तदुक्तंस्कांदे । कामासक्तोपियोनित्यंभक्तिभावविवर्जितः ॥ शालग्राम
शिलांपुत्रसंपूज्यैवाच्युतोभवेदिति । किञ्च यतोयस्यशालिग्रामस्यब्रह्ममहत्त्वंयोर्थेष्वभिज्ञःशिवःसोप्यादिकवयेकार्तिकेयायतेने । त
च्चमहत्त्वमनुपदमेववक्ष्यामः । किंच यतोयत्राद्यस्यसर्वादिकारणस्यविष्णोःसदाजन्माविर्भावः ॥ शालग्रामशिलाचक्रंद्वारिकायांसमु
द्भवम् ॥ कलिकालेपिभोपार्थनजहातिजनार्दनः । इतिजैमिनीयेनारदोक्तेः ॥ श्रीकृष्णस्यसदाविप्राःशालिग्रामेष्ववस्थितिः ॥ आविर्भा
वोहरेस्तत्रसेवनाज्जायतेभृशमितिपुराणांतराच्च । शालिग्रामार्चनेनैवह्यावाहनविसर्जने ॥ शालग्रामेतुभगवानाविर्भूतः सदाहरिः ॥ न
तथान्यत्रसूर्यादौवैकुंठेपिचसर्वगइतिस्कांदोक्तेश्च ॥ यस्मिन्शालिग्रामेसूरयोपिमुह्यंतिपाषाणसामान्यदृष्ट्यानास्तिकादयोमोहंप्राप्नुवंति
चैतन्यरूपत्वाद्धरेर्नपाषाणेहरिरास्तिजडत्वादित्यादितर्कयंतीभावः । किंभूतंस्वेनधाम्नाप्रतापेनार्चकानांनिरस्ताः कुहकाःपापसमूहाये
नसतथातम् । नश्यंत्याशुपापपुंजाः शालग्रामशिलार्चनादित्यादिपुराणात् । पुनःसत्यंसत्यस्वरूपहरेरधिष्ठानत्वात् ॥ तदुक्तंपाद्मे ।
शालिग्रामशिलाचक्रंवज्रकीटविनिर्मितम् ॥ अधिष्ठानंहितद्विष्णोःसर्वपापप्रणाशनमिति । भगवद्रूपत्वाद्वासत्यम् । द्वेरूपेदेवदेवस्य
चरंचाचरमेवच ॥ चरंसंन्यासिनंप्राहुरचरंचक्रचिह्नितमितिजैमिनीयोक्तेः । पुनःपरंसर्वाधिष्ठानेभ्यउत्कृष्टम् । पूजास्थानानिसर्वाणिसू
र्यादीनितथानाहि ॥ प्रियाणिममराजेंद्रशालग्रामाभिधंयथेत्यादिपुराणात् । प्रसंगात्तन्महत्त्वाद्याह । यःपूजयेद्धरिंचक्रेशालग्रामसमुद्भवे ॥
राजसूयसहस्रेणतेनेष्टंप्रतिवासरम् ॥ महत्काष्ठस्थितोवह्निर्मथनेनप्रकाशते ॥ यथातथाहरिर्व्यापीशालग्रामेप्रकाशते ॥ अग्निहोत्रंहुतं
तेनदत्तापृथ्वीससागरा ॥ येनार्चितोहरिश्चक्रेशालग्रामसमुद्भवे ॥ शिलाद्वादशभोवैश्यशालग्रामसमुद्भवाः ॥ विधिवत्पूजितायेनतस्य

पुण्यंवदामिते ॥ कोटिद्वादशभिर्लिंगैःपूजितैःस्वर्णपंकजैः ॥ यत्स्याद्द्वादशकल्पेषुदिनेनैकेनतद्भवेत् ॥ यःपुनःपूजयेद्भक्त्याशालग्राम
शिलाशतम् ॥ उषित्वासहरेर्लोकेचक्रवर्तीच्छयाभवेत् ॥ कामैःक्रोधैर्मदैर्लोभैर्व्याप्तोयोहिनराधमः ॥ सोपियातिहरेर्लोकंशालग्राम
शिलार्चनात् ॥ यःपूजयातिगोविंदंशालग्रामेसदानरः ॥ आभूतसंप्लवंयावन्नदिवःप्रच्युतोभवेत् ॥ विनायज्ञैर्विनातीर्थैर्विनादानैर्विनाम
तिम् ॥ मुक्तिंयातिनरोवैश्यशालग्रामशिलार्चनात् ॥ नरकंगर्भवासंचतिर्यक्त्वंकृमियोनिताम् ॥ नयातिवैश्यपापोपिशालग्रामेच्युता
र्चकः ॥ दीक्षाविधानमंत्रज्ञश्चक्रेयोबलिमाहरेत् ॥ सयातिवैष्णवेलोकेसत्यंसत्यंमयोदितम् ॥ नैवेद्यैर्विविधैःपुष्पैर्धूपैर्दीपैर्विलेपनैः ॥ गीत
वादित्रस्तोत्राद्यैःशालग्रामशिलार्चनम् ॥ कुरुतेमानवोयस्तुकलौभक्तिपरायणः ॥ कल्पकोटिसहस्राणिरमतेहरिसंनिधौ ॥ लिंगैस्तुको
टिभिर्दृष्टैर्यत्फलंपूजितैःस्तुतैः ॥ शालिग्रामशिलायास्तुएकेनापीहतत्फलम् ॥ सकृदभ्यर्चितेलिंगेशालग्रामसमुद्भवे ॥ मुक्तिंप्रयांतिमनुजा
नूनंसांख्येनवर्जिताः ॥ शालग्रामशिलारूपीयत्रतिष्ठतिकेशवः ॥ तत्रदेवासुरायक्षाभुवनानिचतुर्दश ॥ शालग्रामशिलाग्रेतुयःश्राद्धंकुरुते
नरः ॥ पितरस्तस्यतुष्यंतितृप्ताःकल्पशतंदिवि ॥ शालग्रामशिलायत्रतत्तीर्थंयोजनत्रयम् ॥ तत्रदानंतपोहोमःसर्वंकोटिगुणंभवेत् ॥ शा
लग्रामसमीपेतुक्रोशमात्रंसमंततः ॥ कीटकोपिमृतोयातिवैकुण्ठभवनंखलु ॥ शालग्रामशिलांयस्तुगलेबध्वाविपद्यते ॥ सकीकटेष्वपिमृ
तोयातिवैकुण्ठमन्दिरम् ॥ शालग्रामशिलाचक्रंयोदद्याद्दानमुत्तमम् ॥ भूचक्रंतेनदत्तंस्यात्सशैलवनकाननम् । इतिपाद्मे ॥ यःकथांकुरुते
विष्णोःशालग्रामशिलाग्रतः ॥ वेदशास्त्रपुराणानांफलंप्राप्यहरिंव्रजेत् ॥ सकृत्करोतिमनुजःशालग्रामशिलार्चनम् ॥ पापानितस्यनश्यं
तितमःसूर्योदयेयथा ॥ कामासक्तोथवाक्रुद्धःशालग्रामशिलार्चनम् ॥ भक्त्यावायदिवाभक्त्याकृत्वामुक्तिमवाप्नुयात् ॥ शालग्रामोद्भवंदेवंशै
लंचक्रादिमंडितम् ॥ यत्रक्वनीयतेपुत्रतत्क्षेत्रंयोजनत्रयम् ॥ वाराणस्यास्तदधिकंजायतेनात्रसंशयः ॥ मद्भक्तिबलदर्पिष्ठामत्प्रभुंननमंति
ये ॥ वासुदेवंनतेज्ञेयामद्भक्ताःपापिनोहिते ॥ पद्मकोटिसहस्रैस्तुपूजितेन्यत्रयत्फलम् ॥ तत्फलंकोटिगुणितंशालिग्रामशिलार्चनम् ॥ शा
लिग्रामशिलायांतुयःकरोतिममार्चनम् ॥ तेनार्चितःकार्तिकेययुगानामेकविंशतिः ॥ किमर्चितैर्लिंगशतैर्विष्णुभक्तिविवर्जितैः ॥ शालग्रा

मशिलाबिंबंनार्चितंयदिपुत्रक ॥ अनर्हंममनैवेद्यंपत्रंपुष्पंफलंजलम् ॥ शालग्रामशिलालग्नंसर्वंयातिपवित्रताम्॥ भक्तैर्मनुजैस्तस्मात्प्री
त्यर्थंममपुत्रक ॥ कर्तव्यंसततंनूनंशालग्रामशिलार्चनम् ॥ शालिग्रामेनमस्कारःशाठ्येनापीहयैःकृतः ॥ मांनत्वाकिंकरिष्यंतिमद्भक्तास्ते
नराभुवि ॥ शालग्रामशिलायत्रतत्राहंविष्णुनासह॥ परंमूर्खानजानंतिकलौमायाविमोहिताः॥ पुण्यबाह्यास्तुतेज्ञेयायेद्विषंतिजनार्दनम्॥
पूजांतेषांनगृह्णामियेनभक्तामहीधरे ॥ धन्यास्तेपुरुषालोकेशालग्रामशिलांकलौ ॥ येर्चयन्तिमहात्मानःषडाननतवाधिकाः ॥ शालग्राम
शिलायास्तुप्रतिष्ठानैवविद्यते ॥ महापूजांतुकृत्वादौपूजयेत्तांतथाबुधः ॥ स्निग्धाकृष्णापांडुराचपीतानीलातथैवच॥रक्तासूक्ष्माचवक्राचम
हास्थूलाचलांछिता ॥ कपिलाकर्बुरालग्नारूक्षाछिद्राकुलाचया ॥ रेखाकुलास्थिरास्थूलाबहुचक्रैकचक्रिका ॥ बृहन्मुखीबृहच्चक्रालग्नचक्रा
थवापुनः ॥ वृद्धचक्राथवायास्याद्भग्नचक्रात्वधोमुखी ॥ भग्नासुरक्तासापूज्याभिषणाभग्नचक्रिका ॥ पूजयेद्यःप्रमादेनदुःखमेवलभेत्सदा ॥
स्निग्धासिद्धिकरीज्ञेयाकृष्णाकीर्तिंददातिच ॥ पांडुरापापदहनीपीतापुत्रफलप्रदा॥ नीलासंदिशतेलक्ष्मींरक्तारोगप्रदायिका ॥ रूक्षोद्वे
गकरानित्यंवक्रादारिद्र्यदामता ॥ स्थूलानिहंतिचैवायुर्निष्फलास्यादलांछिता । इति ॥ कामार्चनेफलंचैतन्निष्कामस्याखिलाःशुभाः ॥
खण्डितंस्फुटितंभग्नंपार्श्वभिन्नंविभेदितम् ॥ शालग्रामसमुद्भूतंशैलंदोषावहंनहि॥ वाराहेतु। गृहेलिंगद्वयंनार्च्यंशालग्रामद्वयंतथा॥ द्वेचक्रे
द्वारिकायास्तुनार्च्येंसूर्यद्वयंतथा ॥ शक्तित्रयंतथानार्च्यंगणेशत्रयमेवच ॥ द्वौशंखौनार्चयेच्चैवभग्नांचप्रतिमांतथा ॥ नार्चयेच्चतथामत्स्य
कूर्मादिदशकंतथा ॥ एतेषांपूजनान्नित्यमुद्वेगंप्राप्नुयाद्गृही॥ शालग्रामाःसमाःपूज्याःसमेषुद्वितयंनहि ॥ विषमानैवपूज्यास्तुविषमेष्वेकपूज
नम् ॥ पाद्मेतु।शालग्रामाःसमाःपूज्याविषमानकदाचन ॥ समेषुनद्वयंपूज्यंविषमेषुत्रयंनहीत्युक्तं । शालग्रामशिलाभग्नापूजनीयासचक्र
का॥दद्याद्भक्ताययोदेविशालग्रामशिलांनरः ॥ सुवर्णसहितांदिव्यांपृथ्वीदानफलंलभेत् ॥ यःपुनःपूजयेद्भक्त्याशालग्रामशिलाशतम् ॥
तत्फलंनैवशक्तोहंवक्तुंवर्षशतैरपि ॥ शालग्रामशिलांयोषिच्छूद्रोवानस्पृशेत्क्वचित्॥ दूरादेवास्पृशन्पूजांकारयेत्सुसमाहितः ॥ म्लेच्छदे
शेशुचौवापिचक्रांकोयत्रातिष्ठति ॥ योजनानितथात्रीणिममक्षेत्रंवसुंधरे ॥ क्रयक्रीतामध्यमास्यादधमायाचितामता ॥ पारंपर्यागताश्रे



ष्ठागुरुदत्ताचतत्समा ॥ चतस्रोयत्रदृश्यंतेरेखाःपार्श्वेसमीपगाः॥ द्वेचक्रेमध्यदेशेतुसाशिलास्याच्चतुर्मुखी ॥ तत्राप्यामलकीतुल्यासूक्ष्माचै
वतुयाभवेत् ॥ तस्यामेवसदाब्रह्मन्श्रियासहवसाम्यहम् ॥ यथायथाशिलासूक्ष्मातथातस्यामहत्फलम्॥ तस्मात्तांपूजयेन्नित्यंधर्मकामार्थ
सिद्धये ॥ जैमिनीयेतु शालिग्रामशिलास्पर्शंयेकुर्वंतिदिनेदिने ॥ तैर्दत्तंचाक्षयंभूरिपितृविप्रदिवोकसाम् ॥ शालग्रामसमीपेतुयःश्राद्धंकुरुते
नरः॥नित्यंनैमित्तिकंचापिगयाश्राद्धसमंभवेत् ॥ शालग्रामसमीपेतुभक्त्यापुस्तकवाचनम् ॥करोतिहृष्टमनसासपुनातिबहून्जनान् ॥ शा
लग्रामशिलायस्यनित्यंतिष्ठतिवेश्मनि ॥ तत्रसर्वाणितीर्थानिसंतिनित्यंसुरामखाः ॥ नारायणसमोबंधुर्नतिथिर्द्वादशीसमा ॥ विष्णुपा
दोदकैस्तुल्यंनतीर्थंभुवनत्रये ॥ पाद्मे शालिग्रामशिलायांयोमौल्यमुद्घाटयेन्नरः ॥ विक्रेताचानुमंताचयःपरीक्षांतुकारयेत् ॥ सर्वेतेनरकंयां
तियावदाभूतसंप्लवम् ॥ अतःसंवर्जयेद्वैश्यस्तस्यास्तुक्रयविक्रयमिति । शालिग्रामशिलाविप्रपूजनीयाद्विजातिभिः ॥ स्त्रीशूद्रकरसंस्पर्शो
वज्रपातसमोहरेः ॥ शालग्रामशिलास्पर्शाच्छूद्रश्चांडालतांव्रजेदित्यादिपुराणे । अथशालिग्रामाविर्भावमाह । सर्वेषांचैवलोकानांहिताय
तपतोहरेः॥ गण्डस्थलादंबुधाराह्याविर्भूतातयाथसः॥प्रार्थितःसुंदरागत्वात्वंमेपुत्रोभवेतिवै ॥ एतदर्थंतपस्तप्तंतयावैजलधारया॥ ततःप्र
सन्नोभगवानाहतांतेसुतोऽनघे ॥ भवामिचशालग्रामपाषाणप्रतिरूपतः ॥ गंडस्थलोद्भवत्वाच्चत्वंजातागण्डकीनदी ॥ शालग्रामोगिरि
स्तत्रतच्च्युतायेत्वथोपलाः॥ सर्वेतेविष्णुरूपाहिवज्रकीटविनिर्मिताः॥ ग्राहायोत्सृष्टचक्रेणलांछिताश्चक्रिणोभवन् ॥ शालोपलक्षितोग्रामः
शालिनैवोपलक्षितः ॥ यत्रकुंडसमीपेस्तिशालग्रामस्तदुद्भवः॥ इतिवाराहे।अत्रबहुवक्तव्यमस्तीत्यलंप्रपंचेन ॥ इतिशालग्रामपक्षः॥६९
॥ अथबदरिकाक्षेत्रपक्षः॥ ॥ वयंतद्वदरीक्षेत्रंसदाहृदाधीमहि। तत्किंयत्रतिसृणांभागीरथ्यलकनंदामंदाकिनीनांसर्गोऽमृषा । कथंयथाते
जोवारिमृदामविनिमयोऽमृषा । भागीरथ्यलकनंदातथामंदाकिनीसरित्॥ विलसंतिसदादेवदेशेकेदारसंज्ञके ॥ केदारक्षेत्रमेवाहुर्बदरीक्षेत्र
मुज्ज्वलम् ॥ योनातत्रसमागच्छेत्सनभूयोभिजायते ॥ इतितन्माहात्म्ये।यद्वात्रिभ्यःकायिकादिपापेभ्यःसर्गोनिर्मोक्षोयत्रामृषा। कायस्थं
मानसंगीर्जंपापंनश्यतिसर्वथा ॥ यद्दर्शनात्प्रणश्येत्तांबदरींकोनचाश्रयेत्॥इत्यपितत्रैव । किञ्च यतोयस्यान्वयात्सेवनात्पुमान्स्वराड्वि

ष्णुरभिन्नःशिवश्चस्यात्।ज्ञानमिच्छेन्महेश्वरादितिस्मृतेश्शिवएवाभिन्नः। किञ्चयत्राद्यस्यविष्णोरितरतइतरस्यमन्मथारेःशिवस्यचसदा जन्माविर्भावोस्ति। यत्रसाक्षान्महादेवोवसत्तेचमहामते ॥ श्रीविष्णुश्चमहाभागनरनारायणस्तथा ॥ सदान्यैर्दैवतैःसार्द्धमितिकेदारखंडो क्तेः। योदेशआदिकवयेनारदादिरूपायब्रह्मज्ञानंतेने। केनस्वेनधाम्नाश्रयेणविष्णुना। एकदानारदोलोकान्पर्यटन्भगवत्प्रियः ॥ सनातन मृषिंद्रष्टुंययौनारायणाश्रममित्यादिनाग्रेस्फुटीभविष्यति। अन्यत्रापिबहुशएतदुक्तम्। यस्मिन्क्षेत्रेज्ञानेवासूरयोपिनास्तिकाद्यामुह्यंति तन्महत्त्वंनाद्रियंते। किंभूतंक्षेत्रंनिरस्तंस्वसेविनांकुहकंसर्वपापंयेनतत्तथा। इदमेवमहास्थानंपुराप्राहसदाशिवः ॥ यस्यदर्शनमात्रेणसर्व पापैःप्रमुच्यते ॥ इतिनारदंप्रतिस्कन्दोक्तेः। पुनःअर्थेषुधर्मादिषुसत्यंमोक्षप्रदत्वान्मोक्षरूपं। तत्रापिमोक्षएवार्थआत्यंतिकतयेष्यते ॥ त्रैवर्ग्योर्थोयतोनित्यंकृतांतभयसंयुतः ॥ इतिवक्ष्यमाणत्वात्। इदंक्षेत्रंतुयत्प्रोक्तंकेदाराख्यंसुपुण्यदम् ॥ तच्छ्रुत्वापितरोयांतिशिवसायुज्य तांमुने ॥ इमंदेशंसकृद्दृष्ट्वाकृतकृत्योभवेन्नरः ॥ इतिकेदारखंडे। पुनःपरंसर्वेभ्यःक्षेत्रेभ्यःपरमुत्कृष्टं। तदुक्तं यथासर्वेषुदेवेषुश्रीशिवःपरिकीर्ति तः॥ तथासर्वेषुदेशेषुहिमवद्देशकःस्मृतः॥ यथासर्वेषुवेदेषुसामवेदःप्रकीर्तितः॥ तथायंसर्वदेशेषुदेशराजोविधीयते॥ यथारण्येषुसर्वेषुनैमिषा रण्यसंज्ञितः ॥ यथासर्वशिलानांहिशालग्रामशिलावरा ॥ यथानदीषुसर्वासुजाह्नवीसमुदीरिता ॥ यथासर्वेषुभक्तेषुभक्तराजोहिनारदः ॥ त थायंसर्वक्षेत्रेषुक्षेत्रःकेदारसंज्ञितः ॥ नन्दापर्वतमारभ्ययावत्काष्ठागिरिर्भवेत् ॥ तावत्केदारकंक्षेत्रंशिवेनपरिभाषितम् ॥ किंचादौकेदारंगत्वा पश्चाद्बदरींगच्छेत्। तदुक्तम्। अकृत्वादर्शनंवैश्यकेदारस्याघनाशिनः ॥ योगच्छेद्बदरींतस्ययात्रानिष्फलतांव्रजेत् ॥ तस्मात्सर्वप्रयत्ने नपूर्वंकेदारदर्शनम् ॥ कार्यंपुण्येप्सुनाश्रेष्ठिन्नभेदःशिवकृष्णयोरितिकेदारखण्डेऽरुन्धतीवसिष्ठसंवादेचन्द्रगुप्तंप्रतिधर्मदत्तः ॥ इतिके दाराभिन्नबदरीपक्षः ॥ ६६ ॥ ॥ ॥ ॥ ॥ ॥

॥ अथसेतुपक्षः ॥ ॥ वयंतंसेतुंहृदाधीमहि। तंकंयत्रत्रयाणामुच्चत्वदैर्घ्यायामानांसर्गोऽमृषासत्यःकथंयथाऽविनिमयः। दशयोजनविस्ती र्णंशतयोजनमायतम् ॥ बबंधसागरेसेतुंपर्वतोच्चंनलोहरिः॥ इतिरामायणे। यतोयत्राद्यस्यसर्वादिकारणस्यशिवस्यजन्माविर्भावोस्ति।



यस्याद्यस्यान्वयात्स्थापनार्चनादिरूपात्सेवनात्स्वराडसाधारणःप्रतापेणश्रीरामचंद्रोर्थेष्वाहवकरणीयार्थेष्वभिज्ञश्चआदिचतत्कंजलमा दिकंतेनवेतिव्याप्नोतिभुवंपरितइत्यादिकवयःसमुद्रस्तस्मिंस्तथा।इहवेतेर्व्याप्त्यर्थादप्रत्ययऔणादिकः। यंसेतुंतेनेवितस्तार।यस्मिन्सेतौ सूरयोप्यहोकथंकृतोयमगाधसागरेवानरैरितिमुह्यंति। केनतेनेतेजोवारिमृदांधाम्नाऽधिकरणेनपर्वतेन।इहैकत्वंसामान्याभिप्रायंपर्वतैरित्य र्थः। इहतेजःशब्दोधातुपरःपर्वतेषुधातवोजलानिपाषाणरूपाअन्यामृदश्चसंत्येवातस्तदधिकरणताऽतत्रनविरुद्धेतिभावः। पुनःकैरित रतःईन्कामांस्तरंत्यर्थिनोयैस्तेइतरावृक्षास्तैरत्रतृतीयार्थेतसिः। तरंतिरोपकाःकामान्यैस्तेत्रतरवोमताइत्यभियुक्तोक्तेः। बबंधसेतुंशतयो जनायतंसुविस्तरंपर्वतपादपैर्दृढमितिब्रह्मांडोक्तेः। पुनःकेनब्रह्महृदा। ब्रह्मस्यात्कालदैवयोरितिकोशाद्ब्रह्मणोदैवस्यहृदानुकूल्येन। हृ दानुकूल्येस्तेनचस्वांतेज्ञानेचदर्शनेइतिधरणिधरः।अतएवश्रीरामेणसेतुबंधावसरेलक्ष्मणंप्रत्युक्तं। पश्यलक्ष्मणकालस्यप्रातिकूल्यानुकूल्य ताम् ॥ वनवासेपिताहेतुस्समुद्रतरणेशिला ॥ इतिदैवानुकूल्यत्वकथनंमानुष्यनाट्याभिप्रायकंबोध्यमन्यथानीश्वरत्वप्रसक्तेरितिभावः। किंभूतंसेतुंस्वस्येनःस्वामीरामेश्वरःससीदतितिष्ठत्यत्रेतिस्वेनसत्तेन। क्विबत्राधिकरणे। निरस्तंस्वसेविनांकुहकंब्रह्महत्यादिरूपंमहापात कंयेनतंतथा। तदुक्तंब्रह्मांडे सेतुमारभमाणस्तुतत्ररामेश्वरंशिवम् ॥ संस्थाप्यपूजयित्वाहरामोलोकहितायच ॥ प्रणमेत्सेतुबंधंयोदृष्ट्वारामे श्वरंहरम् ॥ ब्रह्महत्यादिपापेभ्योमुच्यतेमदनुग्रहात् ॥ संकल्पनियतोभूत्वागत्वावाराणसींनरः॥ आनीयगंगासलिलंरामेशमभिपूज्यच ॥ स मुद्रेक्षिप्ततद्भारोब्रह्मप्राप्नोत्यसंशयः ॥ इति। बलरामेणापितीर्थयात्रावसरेतत्रगतमितिवक्ष्याति। समुद्रसेतुमगमन्महापातकनाशनम् ॥ त त्रायुतमदाद्धेनूर्ब्राह्मणेभ्योहलायुधः ॥ इतिदशमे। पुनःसत्यंसत्यरूपहराधिष्ठानत्वात्। पुनःपरंपापहरणेप्रकृष्टम्। महापातकनाशार्थंनसे तोर्विद्यतेपरम् ॥ सेतुंदृष्ट्वाथस्पृष्ट्वाचमुच्यतेपंचपातकात् ॥ इतिपुराणांतरात् ॥ इतिसेतुपक्षः ॥ ६७ ॥ ॥ ॥

॥ अथप्रसंगात्समुद्रपक्षमाह ॥ ॥ वयंतंसमुद्रंसदाहृदाधीमहि। तंकंयत्रत्रयाणांगांभीर्याच्छत्वदुर्लंघ्यत्वादीनांसर्गोऽमृषा। कथंयथाते जोवारिमृदामविनिमयोऽमृषा। यतःसमुद्रात् स्वराडिंद्रःआद्यस्यातुंयोग्यस्यामृतस्यइतरतइतरेषामैरावतकौस्तुभोच्चैःश्रवोलक्ष्म्यादी

नाश्वजन्मान्वयात् । यःसमुद्रोऽर्थेषुकर्त्तव्यार्थेष्वभिज्ञोनिपुणः । तन्नैपुण्यंयुद्धकांडेहनुमतोलंकागमनावसरेतेनमैनाकंप्रतिहनुमद्विश्रामा
र्थंप्रकटितंतत्तत्रत्यवाक्यानिविस्तरभियानोक्तानि । यःसमुद्रःआदिकवयेश्रीरामायश्रीराममुद्दिश्यब्रह्मस्तुतिंतेने । तच्चनवमस्कंधेस्फुटं ।
यद्दोषविभ्रमविवृत्तकटाक्षपातसंभ्रांतनक्रमकरोभयगीर्णघोषः ॥ सिंधुःशिरस्यर्हणंपरिगृह्यरूपीपादारविंदमुपगम्यबभाषएतत् ॥ नत्वांवयं
जडधियोनुविदामभूमन्नित्यादिनावाल्मीकीये । ततोमध्यात्समुद्रस्यसागरःस्वयमुत्थितः ॥ अब्रवीत्प्रांजलिर्वाक्यंराघवंशरपाणिनम् ॥ पृ
थिवीवायुराकाशमापोज्योतिश्चराघव ॥ स्वभावेसौम्यतिष्ठंतिशाश्वतंमार्गमाश्रिताः ॥ तत्स्वभावोममाप्येषयदगाधोहमप्लवः ॥ इत्यादि
ना । ब्रह्मांडेपि एतस्मिन्नंतरेसाक्षात्सागरोदिव्यरूपधृक् ॥ दिव्याभरणसम्पन्नःस्वभासाभासयन्दिशः ॥ स्वांतःस्थदिव्यरत्नानिकरा
भ्यांपरिगृह्यसः ॥ पादयोःपुरतःक्षिप्त्वारामस्योपायनंबहु ॥ दण्डवत्प्रणिपत्याहरामंरक्तांतलोचनम् ॥ त्राहित्राहिजगन्नाथेत्यादिदश
श्लोकैःस्फुटतरामिति। यस्मिन्समुद्रेसूरयोपिमुह्यंतिकथमयमगाधोरत्नाकरश्चकथंनप्रसर्पतिपरितइत्यादिमोहंप्राप्नुवंति । यद्वायस्मिन्रामे
सूरयोनास्तिकाद्याःपण्डिताअपिमनुष्योयंराजायंनत्वीश्वरोयंसुग्रीवाद्याश्रयणादित्यादिरूपंमोहंप्राप्नुवंति। मर्त्यावतारस्त्विहमर्त्यशिक्षणं
रक्षोवधायैवनकेवलंविभोरित्यादिनातस्येश्वरत्वमग्रेस्फुटयिष्यत्येव। किंभूतंस्वेनस्वरूपेणधाम्नाश्रयेणनिरस्ताःस्वस्मिन्प्राक्षिप्ताःकुहकाः
पञ्चजनजलंधरप्रभृतयोयेनतं । पुनःसत्यंसत्यरूपहरेर्विभूतित्वात्सरसामस्मिसागरइतिगीतोक्तेः । पुनःपरमनुपमं सागरंसागरोपममिति
वाल्मीकीयात् ॥ इतिसमुद्रपक्षः ॥ ६८ ॥ ॥छ॥ ॥छ॥ ॥छ॥
अथकाश्मीरमंडलपक्षः॥वयंतत्काश्मीरमंडलंधीमहि । तत्किंयत्रत्रयाणांहिमशिल्पप्रशस्तोर्णानांसर्गोऽमृषा । कथंयथातेजआदीनामवि
निमयोऽमृषा।यत्राद्यस्यादिवराहस्यजन्माभूत् । यतोयस्यमंडलस्यान्वयात्सेवनात्इतारतिर्यस्यसइतरतोमृतः स्वराट्विष्णुरूपोभवति।
मृताविष्णुपुरंयांतिक्षेत्रेवाराहसंज्ञके॥ इतिवाराहे। चपुनरर्थेष्वभिज्ञोभवतितत्रसरस्वतीवासात् । वाग्देवीवसतेकाश्यांकिञ्चित्कालंवसुंधरे॥
काश्मीरमंडलंवाणीसर्वकालंनमुंचति ॥ प्रज्ञांवर्द्धयतीतिष्ठेद्वाराहक्षेत्रसेविनाम्॥ इत्यपितत्रैव । किंकर्तुंआदिकवयेआदिकविंविष्णुंप्राप्तुं ।



तुमोप्रयुक्तस्येतिचतुर्थी । किंभूतायब्रह्महृदायब्रह्मवेदोहृदियस्यसब्रह्महृदस्तस्मै । समासांतोत्राप्रत्ययः । वेदप्रवर्त्तकाय । किंभूतंस्वेन
धाम्नाश्रयेणसदानिरस्तः कुहकःपापसमूहस्स्वसेविनांयेनतत्तथा । काश्मीरमंडलावासात्सर्वपापक्षयोनृणामित्यपितत्रैव । पुनःसत्यंभग
वत्क्षेत्रत्वात् । सदातिष्ठामिकाश्मीरमंडलेहंवसुंधरे । इत्युक्तेः । पुनःपरंसर्वोत्कृष्टफलदं । तदुक्तं। तीर्थानिनिवसंतीहसप्तकोटिश्चसप्ततिः ॥
वाराहक्षेत्रेकाश्मीरेतथासर्वाश्चदेवताः ॥ मृतास्तत्रपुरंयांतिमनुजाश्चक्रधारिणः॥ तत्रश्राद्धेनतृप्तिःस्यात्पितॄणांबहुवार्षिकी ॥ आनंदाश्रु
समुद्भूतावितस्ताश्रीहरेःसरित् ॥ तत्रस्नानात्सर्वतीर्थस्नानस्यफलमाप्नुयात् ॥ बहुनाकिमिहोक्तेननकाश्मीरात्परंभुवि ॥ इतिवाराहे ।
काश्मीरमंडलेदेविआदिवाराहसंभवइतिशिवेनाप्युक्तम् ॥ इतिकाश्मीरपक्षः ॥ ६९ ॥ ॥ ॥ ॥
॥ अथभारतखंडपक्षः ॥ वयंतद्भारतखंडंसदाहृदाधीमहि । तत्किंयत्रत्रयाणामुत्तमाधममध्यमानांसर्गोरचनाऽमृषासत्यः। कथंयथेतिदृष्टांतः
पूर्ववत् । उत्तमाधममध्यानांसृष्टिर्भारतसंज्ञके ॥ वर्षेखिलासोत्तमास्याद्धरिसंश्रयणादिह॥इतिकौशिकसंहितायाम् । यद्वायत्रहरिकथाभा
गवतसंगयज्ञेशोत्सवानांसर्गोऽमृषा । वैकुंठस्यकथासंगोजनानांश्रीहरेरिह॥श्रीविष्णोरुत्सवावर्षेनान्यस्मिन्भारतंविना ॥ इतिब्रह्मसंहिता
यांचोक्तेः।यद्वातिसृणांदिव्यमानुषनारकगतीनांसर्गोऽमृषा । वक्ष्यतितथा । अस्मिन्नेववर्षेपुरुषैर्लब्धजन्मभिःशुक्ललोहितकृष्णवर्णेनस्वा
रब्धेनकर्मणादिव्यमानुषनारकगतयोबह्व्यआत्मनआनुपूर्व्येणसर्वाह्येवसर्वेषांविधीयन्तइति । यत्रचाद्यस्यश्रीविष्णोरितरतइतरेषांश्री
रुद्रप्रभृतिदेवानाञ्चजन्माविर्भावोस्ति । तदुक्तंआविर्भावंलभंतेस्मभारतेत्वजनाभके । सर्वेदेवाश्चरुद्राद्याः सशक्तयउशत्तम ॥ श्री
विष्णुश्चतथानेकैः स्वरूपैरिहजायते ॥ वेदावनायदुष्टानांसंहाराययुगेयुगे । इत्यादिपुराणे । यतोयस्याजनाभस्यान्वयात्सेवनात्पुमान
र्थेष्वभिज्ञःधर्मार्थकाममोक्षेषुयथार्थज्ञानवान्भवति । चतुर्वर्गस्यसंप्राप्तिर्नान्यथाभारतंविना ॥ केवलंभोगभूमित्वादन्यवर्षाणिमानद ॥
सर्वाणिकाममुख्यानिकर्मभूमिश्चभारतमितिविष्णुपुराणादौ। यद्भारतंस्वराट्असाधारणप्रभावः।अन्येतुखण्डाभारतकृतपुण्यावशेषलभ्याः
नत्वयंतत्रत्यकर्मणालभ्यइतिभावः।किंकर्त्तुंआदिकवयेआदिकविंविष्णुंसेवितुं । तुमोप्रयुक्तस्येतिचतुर्थी । यद्यपिविष्णुसेवान्यत्रापिखंडेष्व

स्तितथापिभारतेसातिशीघ्रफलदा।तदुक्तं । सेवनंतुमहाविष्णोः सर्वत्रैवप्रवर्तते ॥ अजनाभेविशेषेणविष्णुराशुप्रसीदति । इत्यजनाभमाहा
त्म्ये।यःखंडोनिजवासिनांब्रह्मापवर्गंतेने । तदग्रेवक्ष्यतियथावर्णविधानमपवर्गश्चापिभवतियोसौभगवतिसर्वभूतान्यनात्म्येनिरुक्तेनिलयने
परमात्मनिवासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणोनानागतिनिमित्ताविद्याग्रंथिरंधनद्वारेणयदाहिमहापुरुषपुरुषप्रसंगइति । यस्मिन्नपवर्गे
सूरयोपिमुह्यंतिजन्मांतरीयदुष्कृतवशात्तन्नांद्रियंतइतिभावः। किंभूतंस्वेननिजेनधाम्नाप्रभावेणनिरस्तोऽप्राकृतःकुहकःपापाचरणमहत्त्वरू
पोयेनतत्तथा । अत्रपुण्यकर्मणएवमहत्त्वंनतुपापकर्मणोपीतिभावः । पुनःसत्यंसत्यरूपहरेःप्रापकत्वात्। पुनःपरंसर्वभूमंडलोत्कृष्टं । तदुक्तं
वैष्णवे अत्रापिभारतंश्रेष्ठंजंबूद्वीपेमहामते॥यतोहिकर्मभूरेषाततोन्याभोगभूमयः॥अत्रजन्मसहस्राणांसहस्रैर्द्विजसत्तम ॥ कदाचिल्लभतेजंतु
र्मानुष्यंपुण्यसंचयात्॥गायंतिदेवाःकिलगीतकानिधन्यास्तुयेभारतभूमिभागे॥ स्वर्गापवर्गस्यचहेतुभूतेभवन्तिभूयःपुरुषाःसुरत्वात्॥ कर्मा
ण्यसंकल्पिततत्फलानिसंन्यस्यविष्णौपरमात्मभूते ॥ अवाप्यतांकर्ममहीमनंतेह्यस्मिँल्लयंयेत्वमलाःप्रयांति॥ जानीमनैतत्क्ववयंविलीनाः
स्वर्गप्रदेकर्मणिदेहबंधम् ॥ प्राप्स्यामधन्याः खलुतेमनुष्यायेभारतेनेंद्रियविप्रहीनाः ॥ इति । भारतोपि इहैवनरकव्याधिचिकित्सांनकरोति
यः ॥ गत्वानिरौषधंदेशंसरोगीकिंकरिष्यति ॥ इति।पंचमेपिवक्ष्यति तत्रापिभारतमेववर्षंकर्मक्षेत्रमन्यान्यष्टवर्षाणिस्वर्गिणांपुण्यशेषोपभो
गस्थानानिभौमानिस्वर्गपदानिव्यपदिशंति । किंचएतदेवहिदेवागायंति अहोअमीषांकिमकारिशोभनंप्रसन्नएषांस्विदुतस्वयंहरिः ॥ यै
र्जन्मलब्धंनृषुभारताजिरेमुकुंदसेवोपयिकंस्पृहाहिनः ॥ किंदुष्करैर्नःक्रतुभिस्तपोव्रतैर्दानादिभिर्वाद्युजयेनफल्गुना ॥ नयत्रनारायणपादपं
कजस्मृतिः प्रमुष्टातिशयेंद्रियोत्सवात् ॥ कल्पायुषांस्थानजयात्पुनर्भवात्क्षणायुषांभारतभूजयोवरम् ॥ क्षणेनमर्त्येनकृतंमनस्विनः सं
न्यस्यसंयांत्यभयंपदंहरेः ॥ नयत्रवैकुंठकथासुधापगानसाधवोभागवतास्तदाश्रयाः ॥ नयत्रयज्ञेशमखामहोत्सवाःसुरेशलोकोपिनवैससे
व्यताम् ॥ प्राप्तानृजातिंत्विहयेचजंतवोज्ञानक्रियाद्रव्यकलापसंभृताम् ॥ नवैयतेरन्नपुनर्भवायतेभूयोवनौकाइवयांतिबंधनम् ॥ यद्यत्र

१—सुकर्मनकुर्वंति



नःस्वर्गसुखावशेषितंस्विष्टस्यसूक्तस्यकृतस्यशोभनम् ॥ तेनाजनाभेस्मृतिमज्जन्मनःस्याद्वर्षेहरिर्यद्भजतांशंतनोति । इतित्यलंवाग्जाले
न ॥ इति भारतखंडपक्षः ॥ ७० ॥ ॥ ॥ ॥ ॥

॥ अथकालपक्षः ॥ वयंतंकालंसदाहृदाधीमहि । तंकंयत्रत्रयाणांभूतत्वभविष्यत्त्ववर्तमानत्वानांसर्गोमृषा । कालस्यैकत्वेपिस्वतोभूतत्वा
द्यभावेपिकालत्रयवर्तिनांराज्ञांभूतादिभेदभिन्नपालनादिक्रियाभेदाद्भूतादिव्यवहारः । तथाहिनलादिकालेपर्वतास्तस्थुरिदानींतनराज
कालेतिष्ठन्तिकल्किकालेस्थास्यंतीति । यद्वात्रयाणांशीतोष्णवर्षाणांसर्गोऽमृषासत्यः। उभयत्रदृष्टांतोयोज्यःपूर्ववत्।यतोयस्यान्वयात्संबं
धादाद्यस्यबीजस्येतरतइतरेणरूपेणांकुरपत्रपुष्पादिरूपेणजन्माविर्भावः । यःसृज्यशक्तिमुरुधोच्छ्वसयन्स्वशक्त्येत्यादिनाग्रेवक्ष्यमाणत्वा
त्।यःकालःस्वराट्अन्यानधीनः अन्येतुतदधीनाः। तद्वक्ष्यतिमातरंश्रीकपिलःभूतानांमहदादीनांयतोभिन्नदृशांभयं ॥ योंतःप्रविश्यभूता
निभूतैरत्त्यखिलाश्रयः ॥ सविष्णवाख्योऽधियज्ञोसौकालःकलयतांप्रभुः ॥ नचास्यकश्चिद्दयितोनद्वेष्योनचबांधवः ॥ आविशत्यप्रमत्तोसौ
प्रमत्तंजनमंतकृत् ॥ यद्भयाद्वातिवातोयंसूर्यस्तपतियद्भयात् ॥ यद्भयाद्वर्षतेदेवोभगणोभातियद्भयात् ॥ यद्वनस्पतयोभीतालताश्चौष
धिभिःसह॥स्वेस्वेकालेभिगृह्णंतिपुष्पाणिचफलानिच ॥ स्रवंतिसरितोभीतानोत्सर्पत्युदधिर्यतः॥ अग्निरिंधेसगिरिभिर्भूर्नमज्जातियद्भयात् ॥
नभोददातिश्वसतांपदंयन्नियमादरः ॥ लोकंस्वदेहंतनुतेमहान्सप्तभिरावृतम् ॥ गुणाभिमानिनोदेवाःसर्गादिस्तस्ययद्भयात्॥ वर्ततेनुयुगं
येषांवशएतच्चराचरम् ॥ सोनंतोंतकरःकालोनादिरादिकृदव्ययः ॥ जनंजनेनजनयन्मारयन्मृत्युनांतकमिति । कालाधीनंजगत्सर्व
मितिभविष्येपि । यश्चपुनः अर्थेषुसंयोगवियोगवयःपरिणत्यादिकरणरूपेष्वभिज्ञः । तद्वक्ष्यति ससयुंनक्तिभूतानिसएववियुनक्तिचेति
बाल्ययौवनमध्यादिरूपांपरिणतिंतनोः ॥ कालोनृणांकरोत्येषस्वयतद्राहितःप्रभुरित्यन्यत्र । यःकालः कवयेशास्त्राभ्यासंकुर्वतेआदि
प्राक्तनंब्रह्मतेनेशास्त्राभ्यासवतेज्ञानंतद्विहीनायचेतरत् ॥ तनुतेभगवान्कालस्तत्तद्दैवसहायवानित्युक्तेः । अतएवार्जुनंप्रस्तुत्यवक्ष्यत्यपि
गीतंभगवताज्ञानंयत्तत्संग्राममूर्द्धनि ॥ कालकर्मतमोरुद्धंपुनरध्यगमद्विभुरिति। यस्मिन्कालेप्रातिकूलेसतिसूरयोपिमुह्यंतिकार्याकार्यविवेक

च्युताभवंति । तदुक्तं । रामोहेममृगंनवेत्तिनहुषोयानेयुनक्तिद्विजान् विप्रादेवसवत्सधेनुहरणेजातामतिश्चार्जुने ॥ द्यूतेभ्रातृचतुष्टयंचमहिषींधर्मात्मजोदत्तवान्प्रायःसत्पुरुषोपिनाशसमयेबुद्ध्यापरित्यज्यते ॥ इत्यभियुक्तोक्तेः।किंभूतंस्वेनधाम्नातेजसानिरस्तंकुहकमत्याश्चर्यरचनावत्त्वेनविस्मयजनकंजगद्येनतंतथा । कालेसर्वंप्रणश्यतीत्युक्तेः । पुनः सत्यंसर्वथाऽबाध्यं । कालोगयातोवयमेवयाताइतिहरिभर्तृणोक्तेः ॥ कालात्मनोश्चनित्यत्वात्साधयिष्येतथात्मनइतिहिरण्यकशिपूक्तेरपिकालस्यनित्यत्वाच्चकालोनष्टोजातश्चेत्यप्रतीतेश्च । कालःकलयतामहमितिभगवद्विभूतित्वाच्चकालस्यतेऽव्यक्तगतेरितिभगवद्रूपताभिधानाद्वा । पुनः किंभूतंपरंसर्वथादुर्लंघ्यं । बलेनसचिवैर्बुद्ध्याद्गैर्मंत्रौषधादिभिः ॥ सामादिभिरुपायैश्चकालंनात्येतिवैजनः ॥ इत्यष्टमेवक्ष्यति । यद्वापरंसर्वबलिष्ठं । कालोबलीयान्बलिनांभगवानीश्वरोव्ययः ॥ प्रजाःकालयतेसर्वाइतिमुचुकुंदंप्रतिदेवोक्तेः ॥ इतिकालपक्षः ॥ ७१ ॥ ॥ ॥

अथमनःस्थैर्यपक्षः ॥ वयंतन्मनस्स्थैर्यंसदाहृदाधीमहि । तत्किंयत्रत्रयाणांकामक्रोधलोभानांगुणानांकर्मणांवासर्गोमृषाऽसत्यः । कथंयथातेजआदीनांविनिमयोमृषा । कामक्रोधादयःसर्वेऽमतिरक्षाण्यहंकृतिः ॥ गुणाविविधकर्माणिविलीयंतेमनःक्षयादितिशार्ङ्गधरोक्तेः । क्षयोत्रस्वकारणेब्रह्मणिस्थितिरेवेत्यर्थः । यतोयस्यमनस्थैर्यस्यान्वयादर्थैष्वाद्यस्यधर्मस्यजन्मभवति । धर्मस्योत्पादनेहेतुर्मनसः स्थितिरेवहि ॥ असंयतेचमनसिनहिधर्मः प्रवर्तते ॥ इतिपुराणात् । सर्वधर्मसमुद्भावोमनसः क्षणनिग्रहादित्यन्यत्राप्युक्तेः । चपुनरितरतइतरेषामभयादीनांजन्मभवति । तदुक्तंगौडपादाचार्यैः । मनसोनिग्रहायत्तमभयंसर्वयोगिनाम् ॥ दुःखक्षयःप्रबोधश्चाप्यक्षयाशांतिरेवच॥इति ॥ किंचयतोभिज्ञोब्रह्मज्ञोभवति । तक्रयोगाद्यथादुग्धकाठिन्यमुपगच्छति ॥ तथाजीवोमनःस्थैर्यात्परंब्रह्माधिगच्छतीतिशार्ङ्गधरवज्योक्तेः । यतःस्वराट्स्वतंत्रश्चस्यात्तद्वक्ष्याति। मनोवशेन्येह्यभवन्स्मदेवामनश्चनान्यस्यवशंसमेति ॥ भीष्मोहिदेवःसहसःसहीयान्युंज्याद्वशेतंसहिदेवदेवः ॥ इत्येकादशे । मनोजितंयेनाजितंहिसर्वमितिशुकर्गातोक्तेश्च । विंकर्त्तुमादिकवयेआदिकविंश्रीविष्णुंप्राप्तुंमदास्थिर्मनसिस्थिरेइतिभगवदुक्तेः।योमनःस्थैर्यरूपोधर्मःब्रह्मवेदंतेने।स्थिरेवेदार्थविज्ञानंमनासिस्फुटमुद्भवेत्।आस्थिरेताद्विनाशःस्यादितिवेदांतकदंबे। यस्मिन्मनःस्थैर्येतन्निग्रहोपायेसूरयोपिमुह्यंति । तंत्रासक्ताःसंतःप्रायोनाद्रियंते । येचोपायाजीवन्मुक्तिविवेकेउक्ताःश्रीविद्यारण्यस्वामिना । सत्संगोवासनात्यागोऽध्यात्मविद्याविचारणं॥प्राणस्यंदनिरोधश्चेत्युपायामनसोजयइति । किंभूतंतत्स्वेननिजेनधाम्नाप्रभावेणनिरस्ताःकुहकामोक्षविघ्नारागादयोयेनतत्तथा । मोक्षविघ्नाविनश्यंतिरागद्वेषादयोखिलाः ॥ मनःस्थैर्येद्विजश्रेष्ठततःसिद्धिमवाप्स्यसीतिनारदेनोक्तंशौनकंप्रतिस्वीयसंहितायां। पुनःसत्यमिंद्रियाणांमनश्चास्मीतिभगवद्विभूतित्वात्।पुनःपरंदुर्निग्रहत्वान्मनसोन्यनिग्रहापेक्षयोत्कृष्टम्।तदुक्तं.गीतासुचंचलंहिमनःकृष्णप्रमाथिवलवद्दृढम् ॥ तस्याहंनिग्रहंमन्येवायोरिवसुदुष्करम् ॥ इतिपार्थप्रश्नादसंशयंमहाबाहोमनोदुर्निग्रहंचलमितितत्रैवभगवदुक्तेश्चेतिमनःस्थैर्यपक्षः ॥ ७२ ॥ ॥ ॥ ॥ ॥ ७ ॥

॥ अथहिरण्यगर्भपक्षः ॥ वयंताहिरण्यगर्भंसदाहृदाधीमहि । तंकंयत्रतिसृणांगुणकृतब्रह्मादिसंज्ञानांसर्गोमृषाऽसत्यः । योविष्णुःसतुवैरुद्रोयोरुद्रःसपितामहः ॥ एकमूर्त्तिस्त्रयोदेवारुद्रविष्णुपितामहाः ॥ इतिहरिवंशात् । वक्ष्यत्यपिसप्तमे । आत्मनात्रिवृताचेदंसृजत्यवतिलुंपति । रजःसत्त्वतमोधाम्नेपरायमहतेनम॥इतिहिरण्यकशिपुः । यतःसकाशादाद्यस्यवेदस्यजन्म । अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवा । आदौवेदमयीदिव्यायतःसर्वाःप्रवृत्तयः ॥ इतिस्मृतेः । वक्ष्यत्यपि तृतीये ऋग्यजुःसामाथर्वाख्यान्वेदादीन्मुखतोऽसृजदिति । किंचयतोब्रह्मणइतरेषामुपवेदपुराणादीनामपिजन्म । आयुर्वेदंधनुर्वेदंगांधर्ववेदमात्मनः ॥ स्थापत्यंचासृजद्वेदंक्रमात्पूर्वादिभिर्मुखैरितिवक्ष्यमाणत्वात् । यश्चार्थेषुकर्त्तव्यसृष्टिविषयेष्वभिज्ञः । यश्चस्वराट्सर्वपातेः । हिरण्यगर्भःसमवर्त्ततग्रेभूतस्यजातःपतिरेकआसीदितिश्रुतेः । यश्चकवयेनारदादिरूपायादिसनातनंब्रह्मश्रीभागवतंतेने । यश्चतेजोवारिमृदांविनिरंचनांयथायथावदन्वयात्तज्ज्ञातवान् । धातायथापूर्वमकल्पयदितिश्रुतेः । यश्चअंवासुदेवंयातिभूम्यादिभारनिवेदनार्थमित्ययः । ब्रह्मातदुपधार्याथसहदेवैस्तयासह ॥ जगामसत्रिनयनस्तीरंक्षीरपयोनिधेः ॥ इत्यादिनाश्रीदशमेवक्ष्याते । किंचयस्मिन्ब्रह्मणिसूरयोविद्वांसोपित.त्पर्यज्ञानंविनामुह्यंति । अहोऽयंपुत्रीगामीत्यादिवि

१ मनोविलासे । २ ब्रह्माणं ।

कल्प्यभ्रांताभवंतीतिभावः। सुरूपांसुतामपिलोकाअनुगमिष्यंत्यतःसुरूपासंगोऽनर्थहेतुरितिबोधनायानुजगामनतुकामार्त्तइतितथात्वेनमे हृषीकाणिपतंत्यसत्पथइत्युक्तिविरोधःस्यादितितात्पर्य्यम् । किंभूतंस्वेनधाम्नानिरस्तःकुहकोगुरुस्त्रीहारिचन्द्रोयेनतं । तन्नवमेविशदी भविष्यति । वाक्यानिविस्तरभियानोक्तानि । पुनःसत्यंसत्यलोकगम् । पुनःपरंसर्वप्रजापतिभ्यउत्कृष्टंप्रजापतीनांसपतिश्चक्रूपेकान्प्रजा पतिरितिवक्ष्यमाणत्वात् ॥ इतिहिरण्यगर्भपक्षः ॥ ७३ ॥ ॥छ॥ ॥ ॥छ॥ ॥

॥ अथकार्त्तिकेयपक्षः ॥ ॥ वयंतंकार्त्तिकेयंसदाहृदाधीमहि । तंकंयत्रत्रयाणांक्रौंचतारकधीमांद्यानांसर्गस्तद्भेदननिश्चयोऽमृषासत्यः कथंदृष्टांतःपूर्ववत् । धीमांद्यहारीक्रौंचघ्नस्तथातारकभेदनइतितस्तवोक्तेः । यतोयस्याद्यस्यशिवस्यसकाशाज्जन्म । स्वामीशंकरनन्दनइ त्युक्तेः । किंचयतोयस्यान्वयात्सेवनादितरतइतरोपिअर्थेषुशास्त्रार्थेषुअभिज्ञःस्यात् । सेवनात्कार्त्तिकेयस्यमूकोवाचस्पतिर्भवेदितिस्कांदो क्तेः । यःकार्त्तिकेयःस्वराट्देवसेनानीत्वात् । स्वःस्वर्गेआसमन्तादटतीतिस्वराट् । क्विबत्रकर्त्तरि । यआदिकवयेनारदायब्रह्मवेदरूपंस्कांदा र्थंतेने । तच्चस्कांदेस्फुटं । देवषण्मुखदेवेशपार्वतीसुतनायकेत्यादिनानारदेनपृष्टःस्कन्दोधन्योसित्वंमहाप्राज्ञधन्यानांप्रवरोमुनिरितितंसं श्लाघ्य सर्वस्यजगतोबीजंजन्मादिपरिवर्जितम् ॥ ब्रह्मांडाःकोटयोयस्यरोम्णांचविवरेषुवै ॥ मत्प्रवातप्रेरिताश्चविशंतिप्रविशंतिच ॥ दिक्का लापरिणामानंजगदीशंजगन्मयम् ॥ अनादिमध्यनिधनंनमस्कृत्यब्रवीमिते ॥ इति । यस्मिन्ब्रह्मणिकार्त्तिकेयेवासूरयोपिमुह्यंतिकार्त्तिकेय स्यबहुधोत्पत्तिंश्रुत्वामुह्यंति । वेदेतात्पर्यानभिज्ञत्वान्मुह्यंतीतिभावः । किंभूतंस्वेनधाम्नातेजसानिरस्तःकुहकोऽतिमायावीमहिषोवादैत्य निवहोवातारकोयेनतं । निरस्तस्तारकोयेनक्रौंचेरंध्रंविनिर्मितम् । मयूरोवाहनंयस्यसमेस्कंदःप्रसीदत्वितितत्स्तवोक्तेः । पुनःसत्यंब्रह्म त्वात् । ब्रह्मैवस्कन्दरूपेणपार्वतीनन्दनोभवदित्यादिस्कांदोक्तेः । सेनानीनामहंस्कंदइतिगीतोपनिषदाचार्येणवासुदेवेनस्वांतेवासिनमर्जुनं प्रतिनिजविभूतित्वोक्तेश्च । पुनःपरंऐहिकामुष्मिकफलदंष्परःसत्येपरोदूरेभोगमोक्षप्रदेपरइत्यभिधानादर्शोक्तेः । अतएवभोगमोक्षप्रदःप्रभु रितिप्रज्ञावर्द्धनस्तोत्रेप्युक्तमितितत्स्तोत्रमपिप्रज्ञानवर्द्धकत्वादत्राह । योगीश्वरोमहासेनःकार्त्तिकेयोग्निनंदनः ॥ स्कंदःकुमारःसेनानीःस्वा



मीशंकरसंभवः ॥ १ ॥ गांगेयस्ताम्रचूडीचब्रह्मचारीशिखिध्वजः ॥ तारकारिरुमापुत्रःक्रौंचारिश्चषडाननः ॥ २ ॥ शब्दब्रह्मसमुद्रश्चसि द्धःसारस्वतोगुहः ॥ सनत्कुमारोभगवान्भोगमोक्षप्रदःप्रभुः ॥ ३ ॥ शरजन्मागणाधीशपूर्वजोमुक्तिमार्गकृत् ॥ सर्वागमप्रणेताचवांछिता र्थप्रदायकः ॥ ४ ॥ अष्टाविंशतिनामानिमदीयानीतियःपठेत् ॥ प्रत्यूषेश्रद्धयायुक्तोमूकोवाचस्पतिर्भवेत् ॥ ५ ॥ महामंत्रमयानीत्रमम नाम्नांप्रकीर्त्तनात् ॥ महाप्रज्ञामवाप्नोतिनात्रकार्याविचारणा ॥ ६ ॥ पुष्यर्क्षात्पुष्यपर्यंतमश्वत्थांघ्रौचयोन्वहम् ॥ दशावृत्त्यापठेत्स्तोत्रं सप्तविंशतिभिर्दिनैः ॥ पुरश्चरणफलंप्राप्यमहाप्रज्ञांलभेद्ध्रुवम् ॥ इतिप्रज्ञावर्द्धनंस्तोत्रम् ॥ इतिकार्त्तिकेयपक्षः ॥ ७४ ॥ ॥

॥ अथजननीजनकपक्षः ॥ ॥ वयंतंजननीजनकंसदाहृदाधीमहि । तंकंयत्रत्रयाणांत्वङ्मांसरुधिराणांसर्गःयद्वामेदोमज्जास्थ्नांचसर्गो ऽमृषासत्यः । मातृतस्त्रीणिजायन्तेतथात्रीणितुपितृतः ॥ मातुस्त्वङ्मांसरुधिराःपितुर्मज्जास्थिमेदसः ॥ इत्यादिपुराणात् । यद्वात्रया णांपालनलालनप्रीणनानांसर्गोऽमृषासत्यःदृष्टांतःपूर्ववत् । यतोजन्मजनिरभूत् । कस्यार्थेषुधर्मादिषुआद्यस्यकारणस्यदेहस्येतियावत् । नहिदेहंविनाधर्मादयउत्पद्यंतइतिभावः । तद्वक्ष्यतिश्रीकृष्णः सर्वार्थसम्भवोदेहोजनितःपोषितोयतः ॥ नतयोर्यातिनिर्वेशंपित्रोर्मर्त्यःश तायुषा ॥ इतिदशमे । योजननीजनकःस्वराट्स्वंस्वकीयंपुत्रंराजयतीतिस्वराट्पुत्रस्यपालनादिनाप्रकाशकः । योभिंभयंजनयतिसंपादय तीतिभिज्ञः । भिर्भयेपिप्रकीर्त्तितइतिसौभर्युक्तेः । भ्युपपदाज्जनेःकः । श्ववराहादिर्नभिज्ञोयेनसोभिज्ञःपुत्रभयनिवर्त्तकः । यद्वापुत्रपालनादि प्रकारज्ञः । कुतोऽन्वयात्परंपरातः । यथाहंमत्पित्रादिनापालितस्तथायमपिमयापाल्यइत्येवंज्ञानादित्यर्थः । किंकर्त्तुंआदिकविंश्रीहरिं प्राप्तुंमातृपितृसेविनांदर्शनार्थंस्वयमेवहरिरायाति । एतच्चबहुधापुराणेषुप्रसिद्धं । दक्षिणदेशेपितृसेविदर्शनार्थमागतोविष्णुरद्यापिप्रसिद्धइ ष्टिकेश्वरनाम्नेति । जैमिनीयेतुचंद्रहासेनसाक्षादेवलक्ष्मीनारायणरूपौताउक्तौ । पितृभक्तिंविनाकिञ्चिल्लभ्यतेभुविनोनरैः ॥ लक्ष्मीना रायणावेतौपितरौचिंतयाम्यहमिति । यश्चब्रह्मतेनेतत्प्राप्तिसाधनंदेहंतेने । पालनादिनाप्रसादेनबलविस्तृतिंचक्रे । पुत्रोयद्दत्तदेहेनज्ञा

१ जनन्यासहितोजनकस्तम् । २ जनन्यांजनकेवा । ३ विठ्ठल ।

नंलब्ध्वाधिगच्छाति ॥ परंब्रह्मनसंदेहः पितरौतौसदाभजेदित्याभित्युक्तोक्तेः । यस्मिन्‌जननीजनकेसूरयोपिमनुष्यबुद्ध्यामुह्यंति । नहितौ
मनुष्यौपितरौसर्वदेवताइतिस्मृतेः । किंभूतंस्वेनधाम्नागृहेणतत्समर्पणेननिरस्तोऽपास्तःकुहकःपुत्रक्लेशोयेनतं । पुनःसत्यंसेवयासत्यस्व
रूपहरिप्रापकं । विष्णोःस्थानमवाप्नोतिपितृसेवापरोनरइतिपुराणात्  । पुनःइतरतइतरेभ्योदानयज्ञादिभ्यःपरंसर्वोत्कृष्टमैहिकामुष्मिक
फलदं । तदुक्तंरामचन्द्रेणश्रीवाल्मीकीये नसत्यंदानमानौवायज्ञोवाप्याप्तदक्षिणः ॥ तथाबलकराःसीतेयथासेवापितुर्मता ॥ सर्गोधनंवाधा
न्यंवाविद्याःपुत्राःसुखानिच ॥ गुरुवृत्त्यनुरोधेननकिंचिदपिदुर्लभम् ॥ दैवगांधर्वलोकांश्चब्रह्मलोकांस्तथापरान् ॥ प्राप्नुवंतिमहात्मानो
मातापितृपरायणाः ॥इति। किञ्च तीर्थरूपत्वादपिपरं । तदुक्तंशैवे अपहायगृहेयोवैपितरौतीर्थकंव्रजेत् ॥ तस्यपापंतथाप्रोक्तंयत्तयोर्हननेभ
वेत् ॥ पुत्रस्यचस्त्रियाश्चैवतीर्थंगेहेसुशोभनम् ॥ पुत्रस्यापितरौतीर्थंस्त्रियाभर्त्ताउदाहृतः ॥ इति॥पित्रोश्चपूजनंकृत्वाप्रक्रांतिंप्रकरोतियः ॥
तस्यभूप्रक्रमोद्भूतंफलंभवातिनिश्चितमितिशैवेपि । भारतादावप्येतद्बहुशउक्तमतोलम् ॥ इतिजननीजनकपक्षः ॥ ७९ ॥ ॥
॥ अथप्रद्युम्नपक्षः ॥ ॥ वयंतंप्रद्युम्नंसदाहृदाधीमहि । तंकंयतोयस्याद्यस्यश्रीवासुदेवस्यसकाशाज्जन्माभूत् । सएवजातोवैदर्भ्यांकृ
ष्णवीर्यसमुद्भवः ॥ प्रद्युम्नइतिविख्यातःसर्वतोनवमःपितुरितिदशमेवक्ष्यति । यतोयस्यान्वयात्संबन्धादितरतःइतरःप्राकृतःकुरूपोपिपु
मान्स्वराट्स्वेनैवराजतइतिनिरुक्तेःशोभनदीप्तिर्भवेत् । पुमानित्युपलक्षणंस्त्रियाअपि । तदुक्तमभियुक्तैः शरीरेयस्यप्राकव्यात्कुरूपोपिसु
रूपवान् ॥ विरूपाजायतेकाम्यातस्मैकामायतेनमः इति । यश्चार्थेषुस्त्रीसंगातिकरणापायेषुअभिज्ञःबोधजनकः । यश्चप्रद्युम्नःकवयेक
विभ्योर्थाद्यदुपुंगवेभ्यःआदिसनातनंब्रह्मज्ञानंतेने । अत्रकवयइत्येकत्वमविवक्षितंग्रहंसंमार्ष्टीतिवत् । एतद्वृत्तमुक्तंविश्वजित्खण्डेहिरण्याक्ष
सुतयुद्धप्रस्तावे तत्सैन्यंभीषणंदृष्ट्वाप्रद्युम्नोधन्विनांवरः ॥ बलीधैर्यकरःकार्ष्णिःप्राहेदंयदुपुंगवान् ॥ प्रद्युम्नउवाच ॥ इदंशरीरंभुविपाश्च
नौतिकंफेनोपमंकर्मगुणादिनिर्मितम् ॥ गतागतंकालवशंकदापिहिबुधानशोचंतियथार्भककृतमित्यारभ्यश्लोकत्रयोदशकैर्ज्ञानंतेनइति
भावः।यस्मिञ्ज्ञानेसतित्रिसर्गेदेहादिर्मृषेतिप्रतीयतेज्ञानेत्रिसर्गोलीयेतशुक्तिकारजतादिवदित्युक्तेः । कथंयथातेजआदीनांव्यत्यासस्तत्त्वा

केबोधेमृषेति । किञ्चयस्मिंस्त्रिसर्गेसूरयोमुह्यंतिदेहादीह्लालयेन्नैवतदावेशात्प्रमाद्यतीतिशिष्टगीतोक्तेः । किंभूतंस्वेनधाम्नानिरस्ताःशंब
रप्रभृतयःकुहकामायाविदैत्यायेनतं । पुनःसत्यंश्रीकृष्णात्मजत्वात् । यःपितासतुवैसुतइतिस्मृतेः । अंगादंगात्सभवतिहृदयादभिजाय
ते ॥आत्मावैपुत्रनामासीत्यादिश्रुतेश्च । अतएवपरंदुर्द्धर्षकामावतारत्वात् । सर्वेषांबलिनांमध्येकामोहिपरमोबली इत्यलंप्रपञ्चेन ॥ इ
तिप्रद्युम्नपक्षः ॥ ७६ ॥ ॥ छ ॥ ॥ छ ॥ ॥छ॥ ॥ छ ॥ ॥छ॥
॥ अथानिरुद्धपक्षः ॥ ॥ वयंतमनिरुद्धंपरंचतुर्व्यूहांतर्गतत्वात्परमेशंसदाहृदाधीमहि । तंकंयतोयस्याद्यस्यश्रीकृष्णस्यान्वयात्पु
त्रात्प्रद्युम्नाज्जन्माभूत् । यःस्वराट्स्वरेषुशब्देष्वटतिकारणत्वेनव्याप्नोतीतिव्युत्पत्तेः । शब्दकारणत्वंचतृतीये । अपिस्विदास्तेभगवा
न्सुखंवोयस्सात्वतांकामदुघोनिरुद्धः । यमामनंतिस्महशब्दयोनिंमनोमयंसत्वतुरीयतत्वमिति ॥ चित्ताहंकारबुद्धिमनसामंतःकरणभे
दानांक्रमेणवासुदेवसंकर्षणप्रद्युम्नानिरुद्धाह्यधिष्ठातारःमनसश्चशब्दयोनित्वंप्रसिद्धम् । मनःपूर्वरूपंवागुत्तररूपमितितथान्योंतरआत्मा
मनोमयइतिप्रस्तुत्यतस्ययजुरेवशिरःऋग्दक्षिणःपक्षःसामोत्तरःपक्षइत्यादिश्रुतेः । तथाचशिक्षायांआत्माबुद्ध्यासमेत्यार्थान्मनोयुंक्तेविव
क्षया ॥ मनःकायाग्निमाहत्यसंप्रेरयतिमारुतम् ॥ मारुतस्तूरसिचरन्मंद्रंजनयतिस्वरमित्यादि । यश्चार्थेषुसर्वार्थेषुअभिज्ञः अभितो
ज्ञापयतिसर्वानात्मानमित्यभिज्ञःआत्मानंज्ञापयन्सर्वानखिलार्थेषुकामजइत्यादिपुराणात् । यद्वाभिंभयंजानातीतिभिज्ञोनभिज्ञोऽभि
ज्ञः । अतएववक्ष्यति । सतंप्रविष्टंवृतमाततायिभिर्भटैरनेकैरवलोक्यमाधवः ॥ उद्यम्यमौर्वंपरिघंव्यवस्थितोयथांतकोदंडधरोजिघां
सयेतिदशमे । यद्वाऽभ्यानिर्भययाचित्रलेखयाज्ञायतेइत्यभिज्ञः । चित्रलेखातमाज्ञायपौत्रंकृष्णस्ययोगिनीतिवक्ष्यमाणत्वात् । योनि
रुद्धआदिकवयेभीष्मायब्रह्मकोर्थोब्रह्मास्त्रंतेनेयुयोज । नामैकदेशेनसर्वनाम्नोग्रहणमितिन्यायाद्ब्रह्मपदंब्रह्मास्त्रपरंबोध्यम् । इतरतइतरो
ऽर्थादनिरुद्धेतरोभीष्मोपियस्मैब्रह्मास्त्रंतेने । तदुक्तंविश्वजित्खंडे भीष्मोन्यंधनुरादायसज्यंकृत्वातदात्मवान् ॥ सर्वेषांपश्यतांतत्रब्रह्मास्त्रं
संदधेमृधे ॥ ततःप्रादुष्कृतंतेजःप्रचंडंवक्ष्यिमाधवः ॥ स्वबलस्यापिरक्षार्थंब्रह्मास्त्रंसंदधेस्वयम् ॥ द्वादशादित्यसंकाशंयुयुधातेपरस्प

रम् ॥ त्रीह्लौंकान्दहतीद्वियेऽनिरुद्धस्तेजहारहेत्यादिनानारदेनबहुलाश्वंप्रति । यस्मिन्ब्रह्मास्त्रेसूरयोऽर्जुनप्रभृतयोपिमुह्यंतिकिमिदंकुतो वेतिनजानंति । अतएवोक्तम् । किमिदंस्वित्कुतोवेतिदेवदेवनवेद्म्यहमित्यादिनोक्तमर्जुनेन । यत्रानिरुद्धेत्रिसर्गोदेहित्वेनप्रतीतिर्मृषा । कथंयथातेजोवारिमृदांविनिमयोमृषा । किंभूतंस्वेनधाम्नातेजसा ॥ दोःसहस्रंत्वयादत्तंपरंभारायमेभवत् ॥ त्रिलोक्यांप्रतियोद्धारंनलभे त्वदृतेसममितितदुक्तेर्निर्गतोऽस्तःक्षेपकोयस्यसनिरस्तोबाणासुरस्तस्यापिकुहकोऽहोयंमय्यागतेपिनिर्भयइतिविस्मयजनकस्तम् ॥ यद्वानिरस्तःकुहकस्सहस्रबाहुत्वेनविस्मयजनकोबाणोयेनतं । पुनःसत्यंयोगिध्येयं । तद्वक्ष्यति । यद्विदुर्ह्यनिरुद्धाख्यंसंराध्यंयोगिभिः शनैः । शारदेंदीवरश्यामम्हृषीकाणामधीश्वरम् ॥ इत्यनिरुद्धपक्षः ॥ ७७ ॥ ॥ ॥ ॥

॥ अथार्जुनपक्षः ॥ ॥ वयंतमर्जुनंसदाहृदाधीमहि । तंकंयत्रत्रयाणांबलवीर्यधैर्याणांसर्गोरचनाऽमृषा ॥ कथंयथातेजोवारिमृदामविनिमयइति । यतोयस्यार्जुनस्याद्यस्यादेः कश्यपस्यापत्यमाद्यइंद्रस्तस्यान्वयात्संबंधादर्थात्कुंत्यांजन्माभूत् ॥ यश्चस्वराट्स्वर्स्वर्गमाटतिदेवशत्रुवधार्थमितिस्वराट् । तयोःषष्टिसहस्राणियज्ञघ्नांस्तेपितुःपिता ॥ जघानस्वर्गतोराजन्नेकइंद्रप्रियंकरः ॥ इतिषष्ठेवक्ष्यति । यद्वास्वरान्भैरवमालकौशादिरागस्वरानटतिजानातीतिस्वराट् । स्वरकुशलतयारागकर्त्ताऽर्जुनोभूदितिपाद्मीयसप्ताहमाहात्म्यषष्ठाध्यायोक्तेः । यश्चार्थेष्वभिज्ञः अर्थाःसत्यायमुद्दिश्यत्यक्तास्तद्भेदनशीलाश्चतइषवोबाणाअर्थेषवस्तानभितोजानातीत्यर्थेष्वभिज्ञः अमोघबाणविद्याकुशलइत्यर्थः । यश्चइतेसर्वत्रगतेकृष्णेरतिःप्रीतिर्यस्यसइतरतः । समासांतोत्रडः । अमोघबाणोबीभत्सुःश्रीकृष्णेत्वनुरागवानितिभारतादौ । यश्चकवयेविवेकवतेसात्यकयेआदिप्राक्तनंब्रह्मधनुर्वेदंतेने । यस्मिन्सूरयोपिमुह्यंतिअन्यशास्त्रेकृताभ्यासाअपि बाणसन्धानादिषुव्याकुलाभवंति । किंभूतंस्वेनधाम्नाश्रयेणश्रीकृष्णेननिरस्तंकुहकमज्ञानंयस्यतंकुहकाजयद्रथप्रभृतयोवा । सत्यं नापांडवमिदंजगदितिभारतोक्तेः । पांडवानांसदाविद्यमानत्वेनसत्यं । पुनःपरंपरविभूतित्वात्तदुक्तं पांडवानांधनंजयइतिगितायां । यद्वापरन्दैन्यपलायनरहितत्वादुत्कृष्टं । तदुक्तमभियुक्तैःआयूरक्षातिमर्माणिह्यायुरन्नंप्रयच्छाति ॥ अर्जुनस्यप्रतिज्ञेद्वेनदैन्यंनपलायनमिति । यद्वासत्यं पिप



र्त्तिंपालयतीतिसत्यंपरस्तंसत्यप्रतिज्ञंतद्भारतेस्फुटं । यद्वा सत्यःसत्यपराक्रमइतिसहस्रनामोक्तेःसत्येनश्रीकृष्णेनपूर्यतेपाल्यतइतिसत्यंपरस्तं । महाभारतेस्फुटमेतज्जैमिनीयेपिहंसध्वजोपाख्यानेच । औणादिकः खःकर्मणि ॥ इत्यर्जुनपक्षः ॥ ७८ ॥ ॥ ॥ ॥

॥ अथोद्धवपक्षः ॥ वयंतमुद्धवंसदाहृदाधीमहि । तंकंयउद्धवोजन्मनांजीवानामाद्यस्यहरेरन्वयात्सेवनात्स्वराड्ज्ञानीजातः ॥ तद्वक्ष्यत्येकादशेसएव । विद्रावितोमोहमहांधकारोयआश्रितोमेतवसंनिधानादित्यादिना । यश्चार्थइष्यतेप्राप्यतेऽनेनेत्यर्थेषुनीतिशास्त्रंतत्राभिज्ञः यद्वान्वीक्षिकीदंडनीतिस्तर्कविद्यार्थशास्त्रयोरित्यमरोक्तेरर्थेषुदण्डनीतिप्रतिपादकशास्त्रार्थेष्वभिज्ञः । तत्रार्थशास्त्रेतिसृणांप्रभावोत्साहदण्डशक्तीनांसर्गोऽमृषा । यद्वाक्षयःस्थानञ्चवृद्धिश्चत्रिवर्गोनीतिवेदिनामित्यमरोक्तेस्त्रयाणांक्षयादीनांसर्गःइतरतइतरेषांसंध्यादीनांषण्णांभेदाद्युपायचतुष्टयस्यसर्गोऽमृषा । जन्मप्राकट्यम् । संधिर्नाविग्रहोयानमासनंद्वैधमाश्रयः ॥ षड्गुणाइत्यमरः । भेदोदण्डःसामदानमित्युपायचतुष्टयमितिच । किञ्चकोषदण्डबलंप्रभुशक्तिः बलमुत्साहशक्तिःमन्त्रशक्तिः पंचांगमंत्रोमंत्रशक्तिःअष्टवर्गस्यापचयःक्षयःउपचयोवृद्धिःअपचयोपचयाभावःस्थानंकृषिर्वणिक्पथोदुर्गसेतुःकुंजरबन्धनम् ॥ खन्याकरखलादानंशून्यानांचनिवेशनमित्यष्टवर्गइति । यतो यस्मैउद्धवायतेजोवारिमृदांविनिमयोदेहादिर्यत्रमृषासकृष्णआदिसनातनंब्रह्मज्ञानंतेने ॥ अत्रयतइतिचतुर्थ्यर्थेतसिः । कस्यसुखस्यवयोविस्ताराथंयस्मिन्ब्रह्मणिसूरयोपिमुह्यंति ॥ किंभूतंस्वेनधाम्नाविद्याप्रतापेननिरस्तोव्यापादितःकुहकोऽनीतिवर्त्तिनामन्वयोयेनतं । अन्यायेषुप्रवृत्तायेतेश्रुत्वोद्धवभाषितम् ॥ सुन्यायवर्तिनोजाताः किंवक्ष्येतस्यकौशलमित्युक्तं तपस्यवर्यैः । पुनःसत्यंसदाव्रजवल्ल्यादिषुस्थितत्वात्तदुक्तंस्कांदे कालिन्द्याकृष्णपत्नीभ्यः । साधनभूमिर्बदरींव्रजताकृष्णेनमंत्रिणेप्रोक्ता ॥ तत्रास्तेसतुसाक्षात्तद्वयुनंग्राहयह्लौंकान् ॥ फलभूमिर्व्रजभूमिर्दत्तातस्मैपुरैवसरहस्या ॥ फलमिहनिरोहितंसदातादिहैवसउद्धवो लक्ष्यः ॥ गोवर्द्धनागिरिनिकटेसखीस्थलेपद्रजःकामः ॥ तत्रत्यांकुरवल्लीरूपेणास्तेसउद्धवोनूनमित्युक्त्वा । ततःपश्यत्सुसर्वेषुतृणगुल्मलताचयात् आजगामोद्धवःस्रग्वीश्यामःपीतांबरावृतः ॥ गुंजमामालाधरोगायन्बल्लवीवल्लभंमुहुः ॥ इत्यादिनोद्धवस्थितिरुक्तासदाव्रजे । पुनःपरंसर्वोत्कृष्टम् । नोद्धवोण्वपिमन्न्यूनइतिश्रीकृष्णोक्तेः ॥ इतिउद्धवपक्षः ॥ ७९ ॥

अथहनुमत्पक्षः॥ वयंतंहनुमन्तंसदाहृदाधीमहि । तंकंयोहनुमानाद्यस्यश्रुतिविहिताद्युत्पत्तेराकाशस्यान्वयात्पुत्ररूपाद्वायोर्जन्मआये प्राप । यतोयस्मैकवयेविदुषेस्वराट्श्रीरामआदिसनातनंब्रह्मरामहृदयरूपंतेने । तदुक्तंब्रह्मांडे । ततोरामःस्वयंप्राहहनूमंतमुपस्थितम् ॥ शृणुतत्वंप्रवक्ष्यामिह्यात्मानात्मपरात्मनाम्॥ आकाशस्ययथाभेदास्त्रिविधोदृश्यतेमहानित्यारभ्येदंरहस्यमित्यंतैर्नवभिः। योहनुमानितरतः ईकामंतरतिजयतीतीतरःसएवेतरतःजितेंद्रियः । अत्रप्रथमार्थेतसिः । अर्थेषुशब्दार्थेष्वभिज्ञः । शब्दशास्त्रमशेषेणश्रुतंनूनमनेकधा॥ अनेनभाषितंकृत्स्नंनकिंचिदपशब्दितमितिब्रह्मांडे तस्यशब्दकौशल्योक्तेः । अर्थकौशल्यस्यशब्दकौशल्यनांतरीयकतयार्थेष्वभिज्ञइत्यु क्तं । यद्वाकार्याकार्येष्वभिज्ञः । श्रीरामदूतत्वात् । दूतःसर्वार्थकुशलःक्रियतेराजसत्तमैरितिनीतिशास्त्रात् ॥ मनोजवंमारुततुल्यवेगंजितेंद्रि यंबुद्धिमतांवरिष्ठम् ॥ वातात्मजंवानरयूथमुख्यंश्रीरामदूतंशिरसानमामीतिसर्वत्रपदेषुमानंबोध्यम् । यस्मिन्हनूमतिसूरयोपींद्रादयस्तत्प्र भावानभिज्ञाःसंतःप्राकृतंवानरंमत्वावज्रप्रक्षेपादिरूपंमोहंप्राप्नुवंति । यत्रहनूमतित्रयाणांवीर्यधैर्यकौशलत्वानांसर्गोऽमृषा । वीर्यंधैर्यंकौश लत्वंयथावीरेहनूमति ॥ नतथान्यत्रदृश्यंतेतेनायंप्रबलोभितः ॥ इतिजांबवदुक्तेः । दृष्टांतःपूर्ववत् । किंभूतंस्वेनधाम्नातेजसानिरस्ताःकुह काअक्षप्रभृतयोराक्षसायेनतं ॥ पुनःसत्यंसत्यरूपहरेर्विभूतित्वात् । किंपुरुषाणांहनूमानित्येकादशेश्रीमुखोक्तेः ॥ परमत्युत्कृष्टंरामसेवक त्वाद्रामादप्युत्कृष्टतयाप्रकाशितबलंरामःसेतुनावारिधिमतरत्सचकूर्दनेनेत्युत्कर्षस्तदुक्तमभियुक्तैःप्रसिद्धमेतल्लोकेत्रस्वामिनःसेवकोधिकः॥ सेतुंकृत्वातरद्रामोवायुजोब्धिंचकूर्दनादिति । यद्वारामोद्विर्नाव्भाषतइतिप्राचेतसोक्तेःसत्यंपिपर्त्तिपालयतीतिसत्यंपरोरामः ॥ खोत्रप्रत्य यःखित्त्वात्पूर्वपदस्यमुम् । सविद्यतेउपास्यत्वेनयस्यससत्यंपरस्तं । मत्वर्थीयोत्राच् । श्रीरामोपासनपरम् ॥ इतिहनुमत्पक्षः ॥ ८० ॥ ॥ अथगरुडपक्षः ॥ वयंतंगरुडंसदाधीमहि ॥ तंकंयतोयस्याद्यस्यब्रह्मणोऽन्वयाद्वंशाज्जन्मब्रह्मपुत्रोमरीचिर्मरीचेःकश्यपस्तस्माद्गरुड इति॥ योगरुडःस्वराट्स्वर्गमाटतिप्राप्नोत्यमृतानयनार्थंमातृदासीभावापनोदायेतिस्वराट् ।अत्रचेत्थंभारतीयाख्यानमनुसंधेयं।कद्रूर्विनताच कश्यपस्यभार्येकश्यपाद्गर्भंस्वीकृत्यांडानिसुषुवातेकद्रूस्तुप्रथममेवांडानिविभिद्यात्मजान्लालयामास ।विनताचकश्यपेनोक्तातवद्वेअंडेभ



विष्यतस्तेचसहस्रवर्षादर्वाङ्नभेत्तव्येपुत्रौतेऽतीवप्रबलौभविष्यतः ।साचैवंश्रुत्वाजानंत्यपिकद्रूसुतान्सर्पान्वीक्ष्यैकमंडंपश्चशतवर्षांतेबिभे दतन्मध्यादनूरुरात्मजोजातःसन्मातरंयत्त्वयाऽपूर्णांगस्यममांडंविभिन्नमतस्त्वंदासीभविष्यसीतिशशाप । द्वितीयंत्वयांडंनभेत्तव्यमिति चोवाच।ततोब्दसहस्रांतेद्वितीयांडेगरुडोबभूव । सचातीवबलवत्तरःएवंस्थितेकदाचित्कद्रूविनतयोःसूर्याश्वपुच्छाःकृष्णवर्णाहरिद्वर्णावेति विवदमानयोर्विनतयोक्तंहरिद्वर्णाःकद्र्वाचोक्तंकृष्णवर्णाइतिविवादेकद्रूरुवाचयदिकृष्णवर्णाःसूर्याश्वपुच्छास्तर्हित्वंमेदासीभविष्यसिहरिद्व र्णाश्चेत्तर्ह्यहंतेदासीभविष्यामीतिताभ्यामुक्तं ।तत्रगत्वाद्रष्टव्यास्तेततोगमनावसरेस्वात्मजान्नागान्प्रोवाचहेपुत्रायूयंरोमरूपाणिकृत्वाश्या मीभूयसूर्याश्वपुच्छेषुलग्नाभविष्यथान्यथाहंविनतादासीभविष्यामीत्युवाचतेचतथैवचक्रुस्ततस्तेउड्डीयकृष्णवर्णानेवपुच्छान्ददृशातेतदा विनताकद्रूदासीजाता ।कदाचिद्गरुडःस्वमातरंकद्रूदास्येप्रवृत्तांवीक्ष्यमातस्त्वंकथंदासीजातेतिपप्रच्छतयाचसर्ववृत्तंगरुडायोक्तंतच्छ्रुत्वाग रुडोमातरंप्राहमातस्त्वंमेमनांपृच्छकथंमेदासीत्वंनिवर्त्तिष्यतेसाचतथैवपप्रच्छतयोक्तंयदित्वदात्मजोगरुडःस्वर्गान्मदात्मजानाममृतत्वाप्त येमृतमानयेत्तदातेदास्यत्वंनंक्ष्यति । तयाचतथैवगरुडायोक्तंसचस्वर्गंगत्वेन्द्रादीन्निर्जित्यामृतकलशमानयामासइंद्रश्चगरुडंपप्रच्छकिमर्थ ममृतंनेष्यसितेनोक्तंनागार्थंततइंद्रःप्रोवाचतेतुस्वभावतएवक्रूराअमृतंतेभ्योनदेयंततोगरुडउवाचमयातत्रनेतव्यमेवनतेभ्योदानेहठःकिंतु मातृदास्यत्वापनुत्तयेएवहठोऽतस्त्वयाततःकथंचिदानेयमित्युक्त्वाकलशंगृहीत्वाकद्रूंप्रोवाचैतदमृतकलशमानीतंपश्याधुनामन्मातुर्दासी त्वंगतंतयात्रिरुक्तंगतमिति । ततइंद्रोनागान्पानेप्रवृत्तान्ब्राह्मणोभूत्वाप्रोवाचनेदमस्नात्वापेयंतेचस्नानार्थंगताइंद्रःकलशमादायस्वर्गंयया वितिभारते । यश्चार्थेषुकर्त्तव्याकर्तव्येष्वभिज्ञःछंदोमयत्वात् । छंदोमयत्वंतुतस्यछंदोमयेनगरुडेनसमुह्यमानइत्यष्टमे । गरुडोभगवान्स्तो त्रस्तोमछंदोमयःप्रभुरितिषष्ठेच।आकीर्णयन्पत्त्ररथेंद्रपक्षैरुच्चारितंस्तोममुदीर्णसामेतितृतीयेचवक्ष्यति। बृहद्रथंतरेपक्षावितिश्रुतेश्च । त्रि वृद्वेदःसुपर्णाख्योयज्ञंवहतिपूरुषमितिद्वादशेपिवक्ष्यति । यतश्चेत्याकृष्यचतुर्थ्याविपरिणमय्ययोज्यं । ततश्चयतोयस्मैगरुडायहृद्यर्थंतंत र्यामिरूपेणेतिहृदायोविष्णुरादिब्रह्मगरुडपुराणरूपंतेनेप्रकाशितवान् । किंभूतायकवयेऽतिविदुषे । ननुवेदरूपः स्वयंकथंविष्णोःपुराण

मधीतवानितिचेच्छ्रीकृष्णादिवल्लोकसंग्रहार्थमेवेतिबोध्यम् ॥ किंचयस्मिन्गरुडेसूरयोपिनास्तिकाःकथंपक्षिणापृष्टंकथंचतस्मैप्रोक्तमितिन
संभवतीतिमोहमाप्नुवंति।यत्त्रत्रयाणांसमुद्रोच्छोषणमेरून्मूलनवासुक्यादिदमनानांसर्गः स्थितिरमृषा । दृष्टांतःपूर्ववत् । गरुडेनटिट्टिभार्थं
कदाचित्समुद्रशोषणंपक्षवोतनमेरोरुन्मूलनमपिकदाचित्कृतंवासुक्यादिदमनंप्रसिद्धमेवतस्येति। किंभूतंस्वेनधाम्नानिरस्ताःकुहकाःसमुद्रो
पकंठगानिषादायेनतं । प्रादुर्भूतोगरुडःक्षुन्निवृत्त्यर्थंपितरमुवाचक्षुधामांबाधतेतांवारयतेनोक्तंसमुद्रेएकमत्स्योऽतिविस्तृतोस्तितंभक्षयस
तंगृहीत्वाभक्षितुकामोवालखिल्यवटस्कंधेनिषसादतद्भारेणवटस्कंधोबिभेदसचतंलंबमानार्षिसमूहंस्कंधेपद्भ्यांगृहीत्वाकस्मिंश्चित्पर्वतेगत्वा
तत्रसंस्थाप्यमत्स्यंचखादतेनाप्यनिवृत्तक्षुधःपुनरागत्यपितरंमेक्षुधामत्स्याशनेननगतेतिप्रोवाचतदापित्रोक्तंसमुद्रोपकंठगान्निषादान्भ
क्षयब्राह्मणंस्वकण्ठतापेनविज्ञायत्यक्त्वेतिविस्तृतंभारते । पुनःसत्यंसुपर्णोहंपतत्रिणामितिभगवद्रूपत्वोक्तेः । पुनःपरंब्राह्मतेजसउद्भूतत्वात्स
र्वविषापहारिनामत्वाद्वा ॥ ब्राह्मतेजसउद्भूतत्वंतुभारतेसमिदाहरणावसरेइंद्रेणोपहासितैर्वालखिल्यैरिंद्रमदापनोदायप्रकाटितस्वकोपाग्निना
लोकत्रयंतापितंतत्रत्यैरर्थितःकश्यपस्तत्तेजोधृत्वाविनतागर्भेनिदधौतदेवगरुडोभूत्वेंद्रमदममृतानयनेपनुनोदेतिप्रसिद्धं । विषहारित्वंतुह
रिवंशे।गरुत्मान्विततैःपक्षैर्नखाग्रैःसलिलंमहीम् ॥ समासहस्रंसंपूर्णंचूलाग्रेणावलंबिना ॥ पर्णभारैश्चविकचैर्विस्तीर्णैर्वसुधातले ॥ रराजव
सुधाचैवपर्णैर्बहुविचित्रितैः ॥ येनवृत्तेनजीवेयुःसर्वभूतानिभारत ॥ इहलोकेमनुष्येंद्रदेवलोकेचभारत ॥ द्यौरिवाचितनक्षत्रामहीतलविस
र्पिभिरिति । अस्यार्थस्तुगुरुत्मान्सलिलंमहींचममजीवनभूतंद्वंद्वंपात्वितिशेषः ॥ पक्षभारैःकृत्स्नांपृथिवींद्याश्चव्याप्यास्थितामित्यर्थः ॥
मांपातुइतिशेषः । विततैःपक्षैर्नखाग्रैरवलंबिनाचूलाग्रेणचकीदृशंमांसंपूर्णंबाह्याभ्यंतरज्योतिर्भिःसूर्यवागादिभिःतत्प्रकाश्यंतद्व्याप्यस्थित
मित्यर्थः । एतदेवाहयःवसुब्रह्मधीयतेऽस्मिन्वसुधाशरीरंतस्यतलेगर्भेविकचैर्विकाशिभिर्विशीर्णैःसर्वतोविप्रकीर्णैःपर्णभारैःपक्षैरिवपक्षैरिंद्रि
यैस्तेषांभारैःकार्यसमूहैःरराजराजतेयोगिदृष्ट्येतिभावः॥यस्यचपर्णैस्तैरेवपक्षैर्बहुविचित्रितैर्विषयभेदात्वसुधाशरीरंचरराजयोंतःशरीरेसर्वा
त्मरूपेणराजतेशरीरश्चयेनराजतेसइत्यर्थः । मंत्रजपफलमाहयेनमंत्रेणवृत्तेनावर्त्तितेनसर्वभूतानिविषत्यागाज्जीवेयुःयेनचमंत्रेणमहीशरी

रंनिर्विषातलविसर्पिभिरिंद्रियाद्यैराचितनक्षत्राद्यौरिवरराजेत्यनुषंगः ॥ अथात्रैवमंत्रोद्धारमाह ॥ ॥ पूर्वश्लोकेचब्रह्माविधाताब्रह्मप्रणवअ
हिंसकमक्षरममृतबीजंवंबीजामित्यर्थः । विततैःदीर्घैःपक्षैःस्वरैर्युक्तेनवंबीजेनेत्यर्थः । नखाग्रैःपंचांगैर्न्यासैः । सलिलंवंबीजंमहींलंबीजंसमास
हस्रंसमासहहस्रंहकारसकाररेफानांकूटंतेवर्णाःसंपूर्णंचरमःस्वरश्चूलाशिखातस्याअग्रंवषट्पदंतेनअवलंबनशीलेनपल्लवेनचमंत्रः । मंत्रस्तु
ॐवंलंह्रःवषट्इतिषडक्षरात्मकः । ॐअस्याहिंसकमंत्रस्यब्रह्माऋषिर्गायत्रीछंदःगरुत्मान्देवतावंबीजंह्रःशक्तिःलंकीलकंविषनाशनोविनि
योगः । ॐवांगरुत्मान्हृदयायनमःअंगुष्ठयोः ॐवींगरुत्मान्शिरसेस्वाहातर्जन्योः ॐवूंगरुत्मान्शिखायैवषट्मध्यमयोः ॐवैंगरुत्मा
न्कवचायहुंअनामिकयोः ॐवौंगरुत्मान्नेत्रत्रयायवौषट्कनिष्ठिकयोःॐवः गरुत्मान्अस्त्रायफट्करतलकरपृष्ठयोरितिसवागरुडोपनिषच्च
विषहरणेमानम् ॥ इतिगरुडपक्षः ॥ ८१ ॥ ॥ ॥ ॥ ॥ ॥ ॥
॥ अथसुदर्शनपक्षः ॥ ॥ वयंतत्सुदर्शनंचक्रंसदाधीमहि । तत्किंयत्त्रत्रयाणांलोकानांसर्गःपालननिश्चयोऽमृषा । यद्वात्रयाणांदै
त्यदानवरक्षसांसर्गोनाशनिश्चयोऽमृषा । दृष्टांतःपूर्ववत् । सुदर्शनायत्रैलोक्यपालकायनमोस्तुते ॥ नाशकायनमस्तुभ्यंदैत्यदान
वरक्षसामितिनारदीयवैष्णवयोः । त्रैलोक्यगोपायविशुद्धवर्चसइत्यंबरीषोपिवक्ष्यति । यतोयस्याद्यस्यविष्णोरन्वयाद्देहादेवजन्माविर्
भावोभूत् । इतरतइतरेषांकंबुपद्मगदांबरभूषादीनामपियतोजन्माभूत् । तमद्भुतंबालकमंबुजेक्षणमित्यत्रतत्साहित्येनावतारश्रवणाच्चै
तन्यमयत्वेनात्यंतभेदाभावात्तादात्म्यमेवपरिच्छदानांबोध्यं । एतदभिप्रायेणैवोक्तंनारायणवर्मस्तोत्रांते । यथैकात्म्यानुभावानां
विकल्परहितःस्वयम् ॥ भूषणायुधलिंगाख्याधत्तेशक्तीःस्वमायया ॥ तेनैवसत्यमानेनसर्वज्ञोभगवान्हरिः ॥ पातुसर्वैःस्वरूपैर्नःसदा
सर्वत्रसर्वगः ॥ इति । ऐकात्म्यानुभावानामात्मारामाणांतदंगप्रत्यंगभेदयाथार्थ्येपिस्वयंविकल्परहितस्तैश्चैतन्यमयत्वेनाभिन्नएवानुभूत
इतितथैवस्वमाययास्वरूपशक्त्याभूषणाद्यभिधास्तद्वृत्तिरूपाःशक्तीश्चधत्तेताअपितैस्तथानुभूताइतितेनैवविद्वदनुभवरूपेणसत्यमानेन
यदितत्सत्यंपूर्वोक्तंतदातैरेवभूषणादिलक्षणैःसर्वैःस्वरूपैःस्वरूपांशैर्नःपात्वित्यर्थः । अनेनास्त्राण्यपितदंगान्येवसहजातत्वादतउक्तमन्व

यादेहादित्यर्थः । यत्सुदर्शनंस्वराट्स्वेनैवराजतेप्रधनइतिस्वराट् । तद्वक्ष्यत्यंबरीषः यदाविसृष्टस्त्वमनंजनेनवैबलंप्रविष्टोजितदैत्यदानवम् ॥ बाहूदरोर्वंघ्रिशिरोधराणिवृक्णन्नजस्रंप्रधनेविराजसे ॥ इति ॥ यद्वास्वान्निजात्राजयतिस्वसंबंधेनवैकुण्ठेनीत्वाप्रकाशयतीतिस्वराट् । अतएवोक्तंययेहताश्चक्रधरेणविष्णुनात्रैलोक्यनाथेनजनार्दनेन ॥ तेतेगताविष्णुपुरींनरेंद्राःक्रोधोपिदेवस्यवरेणतुल्यः॥इतिपांडवगीतायां । चक्रधरेणेत्युक्तेश्चक्रहतानामेवाविष्णुपदाप्तिः। किंभूतंअर्थानिच्छंतीत्यर्थैषवोदैत्यास्तेष्वभिनिर्भयंयच्चक्रंज्ञःजानातिभक्तविरोधिनमितिज्ञः । पुंस्त्वमार्षं । ननुकथंजडरूपंचक्रंजानातीतिचेन्नजडंतत्चक्रादिभिर्मूर्त्तिधरैर्निजायुधैरितिवक्ष्यमाणत्वेनचैतन्यरूपत्वमेवअन्यथामूर्त्तिधारणानुपपत्तेः । किंचसाक्षाद्भगवतानिमिषाखिरायुधेनाप्रमत्तेनतैस्तैर्भावैः परिरक्ष्यमाणानामितिभरताख्यानेनतस्याप्रमत्तोक्तिर्विनाचिद्रूपत्वंनसंगच्छते।यआदिकवयेप्राचीनविदुषेदुर्वाससेब्रह्मनिजमहत्त्वंतेने।अत्रापिपुंस्त्वंपूर्ववत्।यस्मिंश्चक्रेसूरयोऽपिशस्त्रदृष्ट्यामोहमनुभवंतिनतुतदन्यशस्त्रवद्धार्यंतस्यतुभगवदवयवत्वेनकूर्मावयवदाविर्भावतिरोभावावेवस्तोभगवच्छरीरेक्वचित्तुसुनाभंचास्मरद्धिभुरित्युक्तिः । सातदाविर्भावपराऽतएवमोहिनीरूपेणराहुशिरःकृंतनेस्वभुजात्तदैवाविर्भाव्यतच्छिरश्चकर्तेतिसंभाव्यते । पुनःकिंभूतंस्वेनधाम्नानिरस्ताःकुहकादूर्वासःप्रभृतिकृत्याद्यायेनतं । तत्सर्वमग्रेस्फुटमेव । पुनः सत्यंत्वंधर्मस्त्वमृतंसत्यमितिसत्यरूपतास्यांबरीषेणोक्ता पुनःपरंसहस्रारत्वाच्युतप्रियत्वसर्वास्त्रघातित्वात्तदुक्तं अंबरीषेणसुदर्शननमस्तुभ्यंसहस्राराच्युतप्रिय॥ सर्वास्त्रघातिन्विप्रायस्वास्तिभूयादिडस्पत इतिनवमे । यद्वात्वंतेजः पौरुषंपरमिहसाक्षादेवपरतोक्तेः ॥ इतिसुदर्शनपक्षः ॥ ८२ ॥ ॥ ॥ ॥

॥ अथश्रीलक्ष्मीपक्षः ॥ ॥ वयंतल्लक्ष्मीरूपंतेजःसदाहृदाधीमहि । तत्किंयत्त्रयाणांदैन्यदौर्भाग्यानुत्साहानांसर्गोलोकोत्सादननिश्चयोमृषा । दैन्यानुत्साहदौर्भाग्यपीडानश्यतिनिश्चितम् ॥ श्रीलक्ष्मीस्मरणादेवसत्यंसत्यंनराधिपेतिपुराणात् । कथंयथातेजआदीनांविनिमयोमृषेति। यद्वायत्त्रयाणांगुणानांसर्गःस्थितिरमृषेति । सर्वस्याद्यामहालक्ष्मीस्त्रिगुणापरमेश्वरी॥इतिप्रथमरहस्योक्तेः । यतोमहालक्ष्म्यास्सकाशादाद्यस्यविष्णोरितरतइतरेषांचजन्माविर्भावस्तस्याएवमूलप्रकृतित्वात् । महालक्ष्मीस्तयालोकेमूलप्रकृतिरेवसा ॥ ततएवसमुद्भ



ताब्रह्मविष्णुमहेश्वराः॥क्वचित्कल्पेब्रह्मणस्तेक्वाचिन्मत्तःक्वचिद्धरेः।क्वचित्स्कंदात्क्वचित्सूर्यात्क्वचिज्जातागणेश्वरा।दित्यादिस्कांदेशिवेनोमांप्रत्युक्तेः । विष्णुःशरीरग्रहणमहमीशानएवच ॥ कारितास्तेयतोतस्त्वांकस्स्तोतुंशक्तिमान्भवेदितिमार्कंडेयेपि। ततएवविष्णवाद्याविर्भावःप्रतीयते । श्रीगीतास्वपि ममयोनिर्महद्ब्रह्मेतिब्रह्मशब्देनलक्ष्म्यपरपर्यायप्रकृतिरेवाविर्भावस्थानंवर्णितेति । इतरतइहषष्ठ्यर्थेतसिः। किंचयस्याअन्वयात्संबंधात्स्वराडपिदरिद्रोप्यर्थेष्वभिज्ञोधनधान्यसमृद्धोभवेत्।तदुक्तंस्कांदे शूरःसएवसगुणीसबुधःसधन्योमान्यःसएवकुलशीलकलाकलापैः ॥ एकःशुचिःसहिपुमान्सकलेपिलोकेयत्रापतेत्तवशुभेकरुणाकटाक्षः ॥ इत्यगस्तिना । दरिद्रोपिमहापूज्योजायतेयत्कृपावशात् ॥ तांलक्ष्मींकमलावासांवन्देब्रह्मादिभिस्स्तुतामितिलक्ष्मीस्तवोक्तेः । यल्लक्ष्मीरूपंतेजआदिकवयेविष्णवेतमनुकूलयितुंब्रह्मकोर्थस्स्तुतिंतेने । तद्वक्ष्यतिपञ्चमे नमोभगवतेहृषीकेशायसर्वगुणविशेषैर्विलक्षितात्मनइत्यारभ्यमत्प्राप्तयेजेशसुरासुरादयस्तप्यंतउग्रंतपऐंद्रियेधियः ॥ ऋतेभवत्पादपरायणान्नमांविंदंत्यहंत्वद्धृदयायतोजितः ॥ सत्वंममाप्यच्युतशीर्ष्णिवंदितंकरांबुजंयत्त्वदधायिसात्वताम् ॥ बिभर्षिमालक्ष्मवरेण्यमाययाकईश्वरस्येहितमूहितुंविभुरित्यंतैर्गद्यपद्यैरिति । यस्मिंस्तेजसिसतिकवयोपिदेवमनुजाद्याइन्द्रप्रभृतयोविद्वांसोपिमुह्यंति । कोगृध्येत्पण्डितोलक्ष्मींत्रिविष्टपपतेरपि ॥ ययाहमासुरंभावंनीतोद्यविबुधेश्वर ॥ इतिषष्ठइंद्रोक्तेः । नह्यन्योजुषतोजोष्यान्बुद्धिभ्रंशोरजोगुणः ॥ श्रीमदादाभिजात्यादिर्यत्रस्त्रीद्यूतमासवः ॥ इतिदशमेनारदोक्तेश्च । राज्यैश्वर्यमदोन्नद्धोनश्रेयोविंदतेनृपः ॥ त्वन्मायामोहितोनित्यंमन्यतेसम्पदोचलाः ॥ इत्यादिजरासंधाख्यानोक्तेः । हैहयोनहुषोवेनोरावणोनरकोपरे ॥ श्रीमदाद्भ्रंशिताःस्थानाद्देवदैत्यनरेश्वराः ॥ इत्यपितत्रैवोक्तेश्च । माराज्यश्रीरभूत्पुंसःश्रेयस्कामस्यमानद ॥ सुजनानुतवाबंधून्नपश्यतिययांधदृक् ॥ इतिनंदंप्रतिवसुदेवोक्तेश्च । अतएवसुदाम्नाप्युक्तं अधनोयंधनंप्राप्यमाद्यन्नुच्चैर्नमांस्मरेत् ॥ इतिकारुणिकोनूनंधनंमेभूरिनाददात् ॥ इति । किंभूतंस्वेननिजेनधाम्नानिरस्तंकुहकंनिजसेविनांदुःखंयेनतत्तथा । लक्ष्मींश्रियंचकमलांकमलालयांचपद्मांरमांनलिनयुग्मकरांचमांच ॥ क्षीरोदजाममृतकुम्भकरेंदिरांचविष्णुप्रियामितिसदाजपतांक्वदुःखमितिस्कांदेऽगस्त्युक्तेः । पुनःसत्यंसत्यरूपस्यविष्णोरनपायिनीत्वात् । तदुक्तंप

राशरेण देवत्वेदेवदेहेयंमानुषत्वेचमानुषी ॥ विष्णोर्देहानुरूपांस्वांकरोत्येषात्मनस्तनुमिति। वैष्णवेपि नित्यैवसाजगन्माताविष्णोःश्रीरन
पायिनी ॥ यथासर्वगतोविष्णुस्तथैवेयंद्विजोत्तमेति । किञ्चेयमेवरुक्मिण्यादिरूपेत्यपिज्ञेयं । एकधाबहुधाचैवशतधाचसहस्रधा ॥ अनं
तधास्वसंकल्पादात्तकिंकरविग्रहा ॥ वाराणस्यांविशालाक्षीविमलापुरुषोत्तमे ॥ रुक्मिणीद्वारकायांतुराधावृन्दावनेवने ॥ इत्यपितत्रैव ।
वृन्दावनाधिपत्यंतुदत्तंतस्यैप्रतुष्यता ॥ कृष्णेनान्यत्रदेवीनांराधावृंदावनेवने ॥ इतिपाद्माच्चान्यत्रदेवीविशालाक्ष्यादिकेत्यर्थः । बृहद्गौ
तमीयेराधायालक्ष्मीत्वंस्मर्यते । देवस्यमूर्तिलावण्यपीतवस्त्रादिभूषिताम् ॥ देवस्याभेदरूपेणतप्तहेमसमप्रभाम् ॥ रक्तवस्त्रपरीधानांर
त्नालंकारभूषिताम् ॥ श्रीराधांवामभागेतुपूजयेद्भक्तितत्परः ॥ लक्ष्मीप्रणवमुच्चार्य्यराधिकायैनमोलिखेत् ॥ राधिकामनुराख्यातश्चतुर्द
शकलावहः ॥ चतुर्मुखऋषिश्चास्यगायत्रीछंदईरितम् ॥ देवीकृष्णमयीप्रोक्ताराधिकापरदेवता ॥ सुरूपाद्विभुजाचित्रवसनाभरणान्वि
ता ॥ सर्वलक्ष्मीमयीसर्वकांतिःसंमोहिनीपरेत्यलंप्रसक्तानुप्रसक्तेन । पुनःपरंपरब्रह्मरूपत्वाच्चजगत्कारणत्वसर्वात्मकत्वमोचकत्वेनसंग
च्छतएवास्याः । नमस्येसर्वभूतानांजननीमब्जसम्भवाम् ॥ त्वंसिद्धिस्त्वंसुधास्वाहास्वधात्वंलोकपावनी ॥ इत्यादिना । शरीरारोग्य
मैश्वर्यमरिपक्षक्षयःसुखम् ॥ देवित्वद्दृष्टिदृष्टानांपुरुषाणांनदुर्लभम् ॥ इत्यंतेनवैष्णवेउक्तं । हरिवंशेपि आवासःसर्वभूतानांनिष्ठाचपरमा
गतिः ॥ इतितस्याःसर्वाधिष्ठानत्वंमुक्तप्राप्यत्वंचोक्तं । तत्रैव त्वयाव्याप्तमिदंसर्वंजगत्स्थावरजंगममितिसर्वात्मताचोक्ता । भविष्येपि
योमांपश्यतिसर्वत्रसर्वंचमयिपश्यति ॥ तस्याहंनित्यदेहस्थासचनित्यंमयिस्थितः ॥ नपश्येत्सर्वभूतेषुनचसर्वंमयिस्थितम् ॥ सतुपर्वत
दुर्गेषुमार्गमाणोविनश्यति ॥ इति । मात्स्येच सर्वगासर्वभूतेषुद्रष्टव्यापरमेश्वरी ॥ सर्वलोकेषुयत्किंचिद्रहितंनतयाविनेति । मार्कंडेयेतु त
याविसृज्यतेविश्वंजगदेतच्चराचरम् ॥ सैषाप्रसन्नावरदानृणांभवतिमुक्तये ॥ संसारबंधहेतुश्चसैवसर्वेश्वरेश्वरी ॥ इति । वस्तुतोमहाल
क्ष्म्याब्रह्मत्वेनस्त्रीत्वमपितत्रावास्तवमेव । तदुक्तंपुरुषोत्तमतीर्थैः पुंस्त्वंनास्तिशम्भुविधिकृष्णेकलययथाजलमधिमृगतृष्णे ॥ स्त्रीत्वंना
स्तितथैवभवान्यांकमलायांचतथैवचवाण्यामितिविवेकानंदे । किंबहुना ॥ इतिश्रीलक्ष्मीपक्षः ॥ ८३॥ ॥ ॥

॥७४॥

॥ अथाष्टादशाक्षरश्रीगोपालमनुपक्षः ॥ वयंतमष्टादशाक्षरंमंत्रराजंसदाहृदाधीमहि ॥ तंकंयत्रत्रयाणांषट्कार्णानांसर्गोऽमृषा । कथं
यथातेजोवारिमृदामाविनिमयोऽमृषा।अष्टादशार्णेषुषट्कत्रयाणांसंभवादमृषेतियोग्यमेव। पुनःयतोऽष्टादशाक्षरस्यअन्वयात्सेवनात्स्वराट्
ब्रह्माऽर्थेषुसृष्ट्युत्पादकतत्वादिष्वभिज्ञोभूत् । तदुक्तंश्रीगोपालतापिन्यां तदुहोवाचब्रह्मासवनंचरतोमेध्यातःस्तुतःपरार्धांतेसोवबुध्यतगो
पवेषोमेपुरुषः पुरस्तादाविर्बभूवततःप्रणतोमयानुकूलेनहृदामह्यमष्टादशार्णस्वरूपंसृष्टयेदत्वांतर्हितः । पुनः सिसृक्षतामेप्रादुरभूतत्ते
ष्वक्षरेषुभविष्यंजगदुदयंप्रकाशयन्तदिहकादापोलात्पृथिवीईतोग्निर्बिन्दोरिन्दुस्तत्संपातात्तदर्कइतिक्लींकारादसृजत्कृष्णादाकाशंखाद्वा
युरित्युत्तरात्सुरभिविद्याःप्रादुरकार्षंतदुत्तरात्स्त्रीपुमादिचेदंसकलमिति । हरतिसर्वमितिहृतरुद्रोयतश्चाद्यस्यसर्वादिकारणस्यात्मनोजगदी
शस्यश्रीकृष्णस्यजन्माविर्भावंसाक्षात्कारामितियावत्आयेप्राप । एतस्यैवयजनेनचंद्रध्वजोगतमोहमात्मानंवेदेतितापनीयश्रुतेः । एत
स्यपंचपदस्ययजनेनजपेनचंद्रध्वजश्चंद्रमौलिः गतमोहंक्रियाविशेषणमितिश्रुतिपदार्थः । किञ्चयतोयस्येतरतइतरोपीदानींतनोप्याधि
कारीब्रह्मजपंतेने । करोत्यर्थैत्रतनिः । आदिकवयेश्रीकृष्णंप्राप्तुमितिचतुर्थीपूर्ववत् । ओंकारांतरालिकंमनुमावर्तयेत्संगरहितोभ्यानमत्त
स्मादेनंनित्यमभ्यसेदितितापनीयश्रुतिभ्याम् । प्रणवसंपुटितमष्टादशाक्षरंसंगराहितएकांतेशुचिर्भूत्वावर्त्तयेत्तेनाप्रत्यक्षमपिपरमात्मानम
भ्यानमत्साक्षात्करोतितस्मात्कृष्णप्राप्तिहेतुत्वादेनमष्टादशार्णंसदाजपेदितिश्रुतितात्पर्यम् । यस्मिन्नात्मानिमंत्रेचनास्तिकवामादिमार्गा
नुयायिनोमुह्यंतिसूरयोपिसंतः । किंभूतंस्वेनधाम्नानिजेनतेजसानिरस्तंकुहकंस्वसेविनांसंसारलक्षणंयेनतंतथा । योनानित्यंजपेन्मंत्रम
ष्टादशकवर्णकं ॥ अनायासेनसंसारंसतरेत्तस्यतेजसा॥इतितंत्रांतरात् । पुनःसत्यंसर्वदाबाध्यं । सत्यंश्रीकृष्णरूपत्वान्मंत्रमष्टादशार्णकम्॥
योमंत्रमार्गमाश्रित्यश्रीगुरोरधिगच्छाति ॥ अष्टादशपुराणार्थोमंत्रेस्मिन्वर्णसंख्यया ॥ तथाष्टादशस्मृत्यर्थोवेदसारोयमीरितः॥ पुराणस्मृ
तिवेदानांसोस्मात्फलमवाप्नुयात्॥व्यासोप्यस्यैवव्याख्यानंश्रीभागवतसंज्ञया॥प्रतिवर्णसहस्रेणश्लोकानांसंचकारहेत्यूर्ध्वाम्नायादौ।पुनःप
रंश्रीकृष्णरूपं । वायुर्यथैकोभुवनंप्रविष्टोजन्येजन्येपंचरूपोबभूव ॥ कृष्णस्तथैकोपिजगद्धितार्थंशब्देनासौपञ्चपदोविभातीतितापनीयश्रु

तेः। अष्टादशाक्षरोमन्त्रइतिगोपालसहस्रनामसूक्तेश्च । भवदाहकत्वादपिपरं । तदुक्तं प्रातर्भजामिमनुमेतदनंगबीजंकृष्णायगोंतमनुविंद
पदंचङेन्तम् ॥ गोपीपद।दनुपदंजनवल्लभायवह्नेर्वधूंमनुमिदंभवकाननाग्निरितिगौतमीसंमोहनागमयोरिति । अष्टादशाक्षरोमंत्रश्चतुर्वर्गफ
लप्रदः॥ सर्वेषामेवमंत्राणांमंत्रराजोयमीरितः॥ इतिसंमोहनोक्तेर्वापरं ॥ इत्यष्टादशाक्षरश्रीगोपालमनुपक्षः ॥ ८४ ॥ ॥ ७॥
॥ अथश्रीगीतापक्षः ॥ वयंतंश्रीगीतानिबंधंसदाहृदाधीमहि । तंकंयत्रत्रयाणांषट्कानांसगोरैचनाऽमृषा । दृष्टांतस्तुपुरोवत् । श्रीकृष्णे
नपुरागीताभारतेभीष्मपर्वणि ॥ षट्कत्रयेणसंसृष्टाध्यायानामर्जुनायच ॥ इत्यादिपुराणात् । यतोयस्यान्वयाच्छ्रवणरूपसेवनात्स्वराड
र्जुनोऽर्थेष्वाद्यस्यार्थात्क्षत्रियधर्मस्यजन्मसाक्षात्कारमायेप्राप । अभिज्ञश्चजातः। नष्टोमोहः स्मृतिर्लब्धात्वत्प्रसादाज्जनार्दनइत्युक्तेः ॥
किंभूतःइतागतारातिर्युद्धप्रीतिस्स्वजनादिदर्शनाद्यस्यतादृशोपीतिभावः । तदुक्तंश्रीगीतायामेव । नकांक्षेविजयंकृष्णेत्यादिना ॥
चपुनर्यादिकवयेऽर्जुनायब्रह्मज्ञानंतेनेयत्रसूरयोपिमुह्यंति । किंभूतंस्वेननिजेनधाम्नानुभावेनानिरस्तोऽपास्तःस्वसेविनांकुहकःसंसारोये
नतम् । तदुक्तंश्लोकंवाश्लोकमर्द्धंवापदंवाप्यक्षरंपठन् ॥ नरोभगवद्गीतायामुक्तिभागीनसंशयः ॥ इतिगीतामाहात्म्ये । पुनःकिंभूतंप
रंसत्यम् । सत्योवेदस्ततोपिपरोयंनिबंधःवेदोनिःश्वासरूपोहिसुप्तस्यपरमात्मनः ॥ गीतातुजाग्रतोवाक्यमतः किंतत्समंभुवि ॥ गी
तासुगीताकर्त्तव्याकिमन्यैः शास्त्रविस्तरैः ॥ यास्वयंपद्मनाभस्यमुखपद्माद्विनिःसृता ॥ सर्वशास्त्रमयीगीतासर्वदेवमयोहरिः ॥ सर्व
तीर्थमयीगंगेत्याद्युक्तेर्माहात्म्यंतुगीतायाःपरत्वबोधकंपाद्मेऽष्टादशाध्यायैरुक्तमतोविरम्यते ॥ इतिश्रीगीतापक्षः ॥ ८५ ॥ ॥
॥ अथवेदपक्षः ॥ ॥ वयंतंवेदंसदाहृदाधीमहि । तंकंयत्रवेदेत्रयाणामृग्यजुःसाम्नांसर्गोऽमृषा । दृष्टांतस्तूक्तप्रायएव । यतोयस्माद्वेदा
त्स्वराड्ब्रह्माआद्यस्यप्राक्कल्पीयस्यइः कामस्तद्धेतुभूतंकर्मवातीर्य्यतेऽनेनेतीतरंज्ञानं । सर्वैकामाश्चकर्माणिज्ञानसत्यतमायुरित्यभियु
क्तोक्तेः ।तस्येतरतः। षष्ठचर्थेतसिः । जन्मसाक्षात्कारमन्वयात् । अर्थेषुसृष्ट्युत्पत्त्युपयोगिष्वभिज्ञश्चाभूत् । वेदंलब्ध्वाहरब्रह्माचक्रेसृष्टिं

१ स्वयंपद्मनाभस्येत्युक्तेःश्रीकृष्णस्यावतारित्वंज्ञायतेनत्ववतारमिति ।

यथोदिताम् ॥ वेदात्सर्वार्थमाज्ञायजातोविज्ञतरोविधिरित्यादिपुराणात् । योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै । इतिश्रुते
र्धातायथापूर्वमकल्पयदितिश्रुतेश्च । तमेवार्थंस्थूणानिखननन्यायेनाह । योवेदःआदिकवयेब्रह्मणेब्रह्मज्ञानंतेने । त्रैकालिकंज्ञानंब्रह्मणोवे
दाभ्यासादेवजातं तस्यैवतद्धेतुत्वात्तदुक्तं योगियाज्ञवल्क्येन । वेदएवसदाभ्यस्योवेदश्चक्षुः सनातनः ॥ भूतंभव्यंभविष्यंचसर्वंवेदात्प्रसि
ध्यतीति।यस्मिन्वेदेसूरयोपितात्पर्यानभिज्ञतयामुह्यंति । वेदस्यचेश्वरात्मत्वात्तत्रमुह्यंतिसूरयइतिवक्ष्यमाणत्वात्। किंभूतंस्वेनधाम्नातेजसा
निरस्तंस्वसेविनांकुहकंमहापातकादिरूपंयेनतं । वेदाभ्यासरतंशांतंमहायज्ञक्रियापरम् ॥ नस्पृशंतीहपापानिमहापातकजान्यपीतियाज्ञ
वल्क्योक्तेः । पुनःसत्यंकदापिनोनष्टं । तस्माद्यज्ञात्सर्वहुत ऋचःसामानिजज्ञिरइतिश्रुतिस्त्वाविर्भावपरा। शिवाद्याऋषिपर्यंताःस्मर्त्तारो
स्यनकर्तृकाइतिस्मृतेः। अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवा ॥ आदौवेदमयीदिव्येतिस्मृतेश्च वाचाविरूपनित्ययेतिश्रुतेश्च । अस्य
महतोभूतस्यनिःश्वसितमेवैतद्यदृग्वेदोयजुर्वेदःसामवेदइतिश्रुतेर्निःश्वसितरूपत्वादपिकर्तृवर्जितएववेदः । नहिपुरुषेणनिश्श्वासःक्रियते
किंतुस्वतःसिद्धएवसभवति । एतेनयथाप्राणसंबंधशून्योदेहोऽकिंचित्करस्तथावेदंविहायेश्वरोपीतिसिद्धं । पुनःपरंपररूपत्वात् । तद्वक्ष्य
ति वेदोनारायणःसाक्षात्स्वयंभूरितिशुश्रुम ॥ इति । इहापिस्वयंभूत्वोक्त्याकर्तृशून्यतोक्तातस्य । ब्राह्मण्यापादकत्वाद्वापरं । तथाच
यमःनशूद्रोवृषलोनामवेदोहिवृषउच्यते ॥ यस्यविप्रस्यतेनालंसवैवृषलउच्यते ॥ तस्माद्वृषलभीतेनब्राह्मणेनप्रयत्नतः ॥ एकदेशोप्यध्ये
तव्योयदिसर्वोनशक्यते ॥ इति । मनुरपि । वेदमेवसदाभ्यस्येत्तपस्तप्यन्द्विजोत्तमः ॥ वेदाभ्यासोहिविप्रस्यतपःपरमिहोच्यते ॥ याज्ञ
वल्क्योपि । यज्ञानांतपसांचैवशुभानांचैवकर्मणाम् ॥ वेदएवाद्विजातीनांनिःश्रेयसकरःपरः ॥ इति । किंश्चयोधीत्यविधिवद्विप्रोवेदार्थंन
विचारयेत् ॥ ससान्वयःशूद्रसमःपात्रतांनप्रपद्यते । इतिकौर्मोक्तेः । पाठमात्रवतांनित्यंद्विजातींश्चार्थवर्जितान् ॥ पशूनिवचतान्प्राज्ञो
वाङ्मात्रेणापिनार्चयेत् ॥ वेदस्याध्ययनंसर्वंधर्मशास्त्रस्यवापियत् ॥ अजानतार्थंतत्सर्वंतुषाणांकंडनंयथा ॥ यथापशुर्भारवाहीनतस्यल
भतेफलम् ॥ द्विजस्तथार्थानभिज्ञोनवेदफलमश्नुते ॥ इतिव्यासस्मृतेश्चसार्थएववेदोध्येयइत्यलम् ॥ इतिवेदपक्षः ॥ ८६ ॥

॥ अथगायत्रीपक्षः ॥ ॥ वयंतंगायत्रीमंत्रंसदाहृदाधीमहि । तंकंथत्रयस्थांगायत्र्यांत्रयाणांवेदानामृगादीनांसर्गोरचनाऽमृषा । तस्यावे
दमातृत्वात् । गायत्रीवेदजननीगायत्रीलोकदायिनीतिकूर्मोक्तेः । दृष्टांतःपूर्ववत् । यतोयस्याअन्वयात्संबंधात्स्वेनानन्यापेक्षत्वेनराज
तेइतिस्वराट्ब्राह्मणआद्यस्यवेदस्यजन्मलभतेइतिशेषः । गृहीतगायत्रीकस्यैवसर्वकर्मस्वधिकारात् । गायत्र्याग्रहणेनैवाद्विजत्वंजायतेद्वि
जाः ॥ गायत्रीग्रहणंकार्यमौपनायनरीतितः ॥ ततःकर्माधिकारीस्यादन्यथाशूद्रसंमतः ॥ इतिस्मृतिरहस्योक्तेः । आषोडशाच्चद्वाविंशाच्चतुर्विं
शाच्चवत्सरात् ॥ ब्रह्मक्षत्रविशांकालऔपनायनिकःस्मृतः ॥ अतऊर्ध्वंपतंत्येतइतियाज्ञवल्क्येनतत्कालोपिविहितः । सचगौणएवमुख्यस्त्वा
श्वलायनेनोक्तः गर्भाष्टमेष्टमेवाब्देपंचमेसप्तमेपिवा ॥ द्विजत्वंप्राप्नुयाद्विप्रोवर्षेत्वेकादशेनृपः ॥ मनुनापि ब्रह्मवर्चसकामस्यकार्योविप्रस्यपञ्च
मे ॥ राज्ञोबलार्थिनःषष्ठेवैश्यस्यार्थार्थिनोष्टमे ॥ इति । गौणकालातिक्रमे । अग्रजाबाहुजावैश्याः स्वावधेरूर्ध्वमब्दतः ॥ अकृतोपनयाः
सर्वेवृषलाएवतेस्मृताः ॥ इति । शुद्धिर्नैवगुरोर्यस्यवर्षेप्राप्तेष्टमेयदि ॥ तस्योपनयनंकार्यंचैत्रेमीनगतेरवौ ॥ जन्मभादष्टमेसिंहेनीचेवाश
त्रुभेगुरौ ॥ मौंजीबंधःशुभःप्रोक्तश्चैत्रेमीनगतेरवावितिबहुवक्तव्यमत्रास्त्यतउपरम्यते । विशिखोव्युपवीतश्चयत्करोतिनतत्कृतमितिनिर्ण
यसिन्ध्वाद्युक्तेरपि । दक्षेणापि संध्याहीनोऽशुचिर्नित्यमनर्हःसर्वकर्मसु ॥ यदन्यत्कुरुतेकर्मनतस्यफलभाग्भवेदित्युक्तं । संध्यायामपिकृ
तोपनयनस्यैवाधिकारइतिप्रसिद्धेः । शूद्रोवानुपनीतोवापठेद्वाशृणुयाच्चयः ॥ वेदवाक्यंसकांक्षेतयब्धुंस्वांमातरंहठात् ॥ किंच यस्तात्प
र्यमविज्ञायव्याख्यांकुर्यान्निजेच्छया ॥ श्रुतेःसमात्रायभतितंदृष्ट्वास्नानमाचरेदितिसंहितोक्तेश्च । गायत्रींगृहीत्वैवविधिनाकर्माधिकारीना
न्यथेतिभावः । पाराशर्यांतु गायत्रींयोनजानातिज्ञात्वोपास्तेनयोद्विजः ॥ नामधारकमात्रोसौनविप्रःशूद्रएवसः ॥ इति । प्रकृतमनुसरा
मः । इतरतइतरावपिक्षत्रियवैश्यावप्याद्यस्यजन्मलभेतेइत्यर्थः ॥ योमन्त्रोऽर्थेष्वभिज्ञःसर्वार्थसम्पादकत्वात् । चतुर्वर्गप्रदादेवीगायत्रीभ
क्तवत्सलेतिब्राह्मणसर्वस्वात् ॥ यश्चमंत्रःकवयेविश्वामित्रायआदिब्राह्मचरुजातत्वात्तस्यतत्प्राक्सिद्धमेवब्रह्मब्राह्मणत्वंतेने । ब्रह्मेतिभावप्र
धानोनिर्देशः । गायत्र्यनुष्ठानादेवविश्वामित्रोवसिष्ठस्पर्द्धयाब्राह्मण्यमापेतिप्रसिद्धंपुराणांतरे । वक्ष्यत्यपि गाधेरभून्महातेजास्समिद्धइव

पावकः ॥ तपसाक्षात्रमुत्सृज्ययोलेभेब्रह्मवर्चसम् ॥ इति । तपसागायत्र्यनुष्ठानरूपेणतस्यैवब्राह्मण्यापादकत्वात् ॥ योगियाज्ञव
ल्क्येनोक्तमपि एषाहित्रिपदादेवीशब्दब्रह्ममयीशुभा ॥ तपसामहतादृष्टाविश्वामित्रेणधीमतेति । अज्ञात्वाचैवगायत्रींब्राह्मण्यादेवहीय
ते ॥ ज्ञात्वाचैवतुगायत्रींब्राह्मण्यंप्रतिपद्यते ॥ इतिच । गायत्र्याब्राह्मणमसृजदितिश्रुतेश्च । यस्मिन्ब्रह्मणिब्रह्मत्वेगायत्र्यांवानरसामा
न्यबुद्ध्याऽक्षरसामान्यमत्यावासूरयोनास्तिकप्रभृतयोमुह्यंति । ननुकिंब्राह्मणत्वंतत्राहब्रह्ममंत्राभिमंत्रितचर्वादिजन्यत्वब्राह्मणोयामि
तिब्राह्मणवाक्याप्यत्वस्वेच्छापुरःसरंब्रह्मवीर्यादन्यक्षेत्रोत्पत्तिमत्त्वब्रह्मवीर्याद्ब्राह्मण्यामुत्पत्तिमत्त्वान्यतमत्वंब्राह्मणत्वम् । ब्राह्मण्यांब्र
ह्मवीर्यादुत्पत्तिमत्त्वस्यलक्षणत्वाभ्युपगमेऋष्यशृंगव्यासादीनांब्राह्मणत्वंनस्यात् । ऋष्यशृंगस्यमृग्यांविभांडकोद्भूतत्वात्व्यासस्यदाश
कन्यायांपराशरोद्भूतत्वाच्च । ब्रह्मवीर्योद्भूतत्वस्यलक्षणत्वेविश्वामित्रादेर्ब्राह्मणत्वंनस्यात् । धृतराष्ट्रादेस्तत्स्यादेव । विश्वामित्रादेर्गाध्यादि
नृपोद्भूतत्वात्धृतराष्ट्रादेर्व्यासोद्भूतत्वाच्च । अतएवंलक्षणंकृतंव्यासर्ष्यशृंगयोः स्वेच्छयान्यक्षेत्रोद्भूतत्वाद्ब्राह्मणत्वंधृतराष्ट्रादेश्चपरेच्छयान्य
क्षेत्रोद्भूतत्वान्नब्राह्मणत्वंविश्वामित्रादेर्ब्राह्ममंत्राभिमंत्रितचर्वादिजन्यत्वाद्ब्राह्मणत्वमपरेषांब्राह्मण्यांब्रह्मवीर्योद्भूतत्वाद्ब्राह्मणत्वंवीतहोत्रादी
नांभृग्वादिवचनाप्यंब्राह्मणत्वंवस्तुतस्तुब्रह्मक्षेत्रंब्रह्मवीर्यंसंस्काराब्रह्मसंभवाः ॥ ब्राह्मणाचरणाद्ब्रह्मविद्याभिर्ब्राह्मणोभवेदितिस्मृतेः पञ्च
लक्षणलक्षितस्यैवमुख्यंब्राह्मणत्वमितिध्येयंमनीषिभिरितिभावः । किञ्चतद्ब्राह्मण्यंयत्नात्पालयेदित्युक्तंभारतेशुकानुशासने । संपतन्मोहजा
लानिकदाचिच्चेहमानुषे ॥ ब्राह्मण्यंलभतेजंतुस्तत्पुत्रपरिपालय । ब्राह्मणस्यचदेहोयंनकर्मार्थोपजायते ॥ इहक्लेशायतपसेप्रेत्यत्वनुपमं
सुखम् ॥ ब्राह्मण्यंबहुभिरवाप्यतेतपोभिस्तल्लब्ध्वानरतपरेणहेलितव्यम् ॥ स्वाध्यायेतपसियमेचनित्ययुक्तःक्षेमार्थीकुशलपरःसदायत
स्वेति । ब्राह्मण्यनाशकानिवाममार्गप्रवृत्तितप्तमुद्राधृतियवनीसंगसुरापानादीनिबहूनिसंतितानिचकौशिकसंहितीयभागवतमाहात्म्येउक्ता
नि । तत्रवाममार्गतप्तमुद्राधारणेचशूद्रपरेएव । ब्राह्मणादीनांतत्रप्रवृत्तिस्तुजन्मांतरीयपापादेव । अश्रौतेचांकनेकामेप्रवृत्तिःपूर्वपापतइति
वासिष्ठलैंगोक्तेः । शापाद्वागौतमादीनांपापाद्वामहतोनराः ॥ येगतावेदबाह्यत्वंयेचसंकीर्णयोनिजाः ॥ तेधिक्रियंतेतंत्रेषुस्त्रीशूद्राद्यायथाय

थम् ॥ अनुग्रहार्थमेतेषामागमानिर्मिताः पुराः ॥ तस्माद्वैवेदबाह्यानांरक्षणार्थंचपापिनाम् ॥ विमोहनायशास्त्राणिकरिष्यावोवृषध्वज ॥
एवंसंचोदितोरुद्रोमाधवेनमुरारिणा ॥ चकारमोहशास्त्राणिकेशवोपिशिवेरितः ॥ इतिलिंगार्चनचंद्रिकोक्तेर्गौतमशापाद्वा । तदुक्तंवाराहेशि
वेन।पुरासर्वजनानांतुमोक्षमार्गेव्यवस्थितिम् ॥ दृष्ट्वास्वर्गादिवैफल्यंदेवैरुक्तःस्वयंहरिः ॥ भगवन्सृष्टिनाशंत्वंशमयानुग्रहेणनः ॥ तदाहं
विष्णुनाप्रोक्तोमोहशास्त्रमकल्पयम् ॥ वेदमार्गविरुद्धंयत्तद्रौद्रंमत्प्रवर्तितम् ॥ मदट्टहासपतितामह्यांतोयस्यविंदवः ॥ असंख्यातास्तुते
रौद्राभविष्यंतिकलौयुगे ॥ कल्पयिष्यंतिशास्त्राणिसुरामांसप्रियानराः ॥ मयापिकल्पिताविष्णोराज्ञयासंहितापुरा ॥ निःश्वासाख्या
वेदबाह्यावामाचारप्रवर्तिका ॥ तत्रमच्छासनरतामदाचाराश्रयेद्विजाः ॥ तेषांवासस्तुनरकेभविष्यतिनसंशयः ॥ शूद्रैस्तदधमैर्ग्राह्यआ
चारोवामसंज्ञितः ॥ नद्विजैस्सर्वथाग्राह्यइतिसत्यंवचोमम ॥ गौतमेनचयेशप्तास्तेद्विजावाममार्गगाः ॥ भविष्यंतिश्रुतिभ्रष्टाज्ञेयास्तेन
रकौकसः ॥ इति।तप्तमुद्राधृतिस्तुकुंडगोलविप्रपरेत्यपिकेचिद्वदंति । कुंडागोलास्तुयेविप्रास्तेषांकार्योह्ययंविधिः ॥ तप्तमुद्राधारणादि
र्नशुद्धानांकदाचन । तांत्रिकत्वाद्भ्रष्टविप्रैर्गृह्यतेपूर्वपापतः ॥ यदस्यवैदिकत्वोक्तिस्तन्निर्मूलाविचारतः ॥ नविप्रास्तांत्रिकाःशुद्धावैदिकास्ते
सदैवहि ॥ तांत्रिकेष्वधिकारस्तुभ्रष्टविप्रस्यजायते ॥ इतिसंहितोक्तेः। सूतसंहितायांतु विष्ण्वागमादितंत्रेषुदीक्षितानांविधीयते ॥ शंख
चक्रगदापूर्वैरंकनंनान्यदेहिनाम् ॥ दीक्षितानांतुतंत्रेषुनराणामंकनंद्विजाः ॥ उपकारकमेवोक्तंक्रमेणमुनिपुंगवाः॥श्रुतिपथगलितानांमानु
षाणांतुतंत्रंगुरुगुरुरखिलेशःसर्ववित्प्राहशंभुः ॥ श्रुतिपथनिरतानामस्तिनैवात्रकिंचित्हितकरमिहसर्वंपुष्कलंसत्यमुक्तम् ॥ श्रुतिपथगलि
तानांमानुषाणांतुतंत्रेहरिरपिमुनिमुख्याः प्राहधर्मंस्वकीये ॥विधिरपिमनुजानामाहवर्णाश्रमांश्चश्रुतिपथगलितानामेवतंत्रेस्वकीये॥श्रुति
पथगमितानांतेनसंसेवनीयाः श्रुतिपथसममार्गोनैवसत्यंमयोक्तमिति । एतेनश्रौतमार्गएवविप्रैःसेव्योनतांत्रिकादिः । क्षत्रियवैश्याभ्यां
त्वन्योपीतिसूचितं।श्रौतार्चनंतुविप्राणांविशेषेणभवेत्सदा॥श्रौतागमार्चनंक्षत्रेवैश्येकेवलमागममितिमंत्रराजानुष्टुब्विधाने।अत्रकेवलपदंवै
श्यस्यवैदिकत्वंनिरस्यतीतिचिंत्यं।तस्यापिवैदिकत्वंश्रुतिनिर्मितत्वाद्गायत्र्याब्राह्मणमसृजत्त्रिष्टुभाराजन्यंजगत्यावैश्यमितिश्रुतेः । किंभूतं

स्वेनधाम्नातेजसानिरस्तःकुहकोगायत्र्याप्रेतत्वादिलक्षणोयेनतं । एतेनयेगायत्रींशप्तामाहुस्तेनिरस्ताः । नहिशप्तागायत्रीप्रेतत्वंनिव
र्तयितुंब्रह्मप्रापयितुंवासमर्थाभवेत् । यच्चशापमोचनादिदृश्यतेतत्सर्वमज्ञकल्पितमेवेतिध्येयं सुधिया। किंचप्रष्टव्याः । किंगायत्रीतिपद
स्यशापश्चतुर्विंशत्यक्षरात्मकतन्मंत्रस्यवाप्रतिवर्णंवैतन्मंत्राधिष्ठातुर्देवताविशेषस्यैवतज्जपफलस्यवेतिविचार्यमाणेशापोनोपलभ्यते। त
थाहि । नाद्यःतदश्रुतेः। गायत्रीतिपदंशप्तमितिकुत्रापिनश्रूयते। इत्थमेवद्वितीयपक्षोपिनिरसनीयः तृतीयेशापांगीकारेयत्रान्यमंत्रेष्वपि
तेवर्णाभवेयुस्तेपिगरसंसृष्टान्नैकदेशेपिसर्वमन्नंसविषमितिवच्छप्ताःस्युस्तेनसर्वेषांशापमोक्षाद्यन्वेषणीयंस्यादतस्तृतीयोपिनसर्वमंत्राणां
शापमोक्षानुपलब्धेः । चतुर्थेत्वेतन्मंत्राधिष्ठातृदेवंपरब्रह्मैवतस्यैवात्रप्रतिपादनान्नहिपरब्रह्मणःशापादिश्रूयतेकुत्रापि । पंचमोपिजपफल
स्यप्रत्यक्षसिद्धत्वान्नसंबोभवीति । तथाचतएवशप्ताविज्ञेयायेगायत्रींशप्तांवदंति । येचास्यमुद्रान्यासादिकरणंवदंतिनतेवैदिकास्तेचवेद
भ्रष्टास्तांत्रिकाएव । न्यासादयःप्रायोवैदिकेषुनसंतीत्यलंप्रपंचेन॥इहादिपदाज्जननादिदशमंत्रसंस्काराअकडमादिविचारश्चग्राह्यः। पुनः
सत्यंपरब्रह्मरूपत्वात् । गायत्रीवाइदंसर्वमितिश्रुतेः । गायत्रीपरमंतत्वंगायत्रीपरमागतिः ॥ सर्वामरैरियंध्यातासर्वंव्याप्तंतयाजगदिति
बृहत्पाराशरोक्तेश्च।पुनःपरं श्रेष्ठंद्विजातेर्द्वितीयजन्महेतुत्वात्प्रातरादिसवनत्रयव्यापित्वाच्च। त्रिष्टुब्जगतीभ्यांसोमाहरणार्थंगताभ्यांसोमो
नलब्धोऽक्षराणिचहारितानि जगत्यात्रीणित्रिष्टुभैकमितिचत्वारीतराक्षरैः सहसोमस्याहरणेनसर्वश्रेष्ठागायत्री । तथाहिचतुरक्षराणिहवा
अग्रेछंदांस्यासुस्ततोजगतीसोममच्छापतत्त्रीण्यक्षराणिहित्वाततस्त्रिष्टुप्सोममच्छापतत्सैकमक्षरंहित्वाजगामततोगायत्रीसोममच्छाप
तत्सातानिचाक्षराण्याहरंत्यागच्छत्सोमंचततोष्टाक्षरागायत्रीत्युपक्रम्यतदाहुर्गायत्राणिवैसर्वाणिसवनानिगायत्रीह्येवैदुपसृजमानैरितिश
तपथश्रुतेः । यद्वासर्वजप्येषूत्कृष्टतरम् । जप्यानामेवमंत्राणांगायत्रीपरमोजपः ॥ गायत्रीचतथावेदाब्रह्मणातोलितापुरा ॥ वेदेभ्यः
सषडङ्गेभ्योगायत्र्यतिगरीयसीति । जपस्त्वस्याःप्रणवोभूर्भुवस्स्वश्चपुनःप्रणवसंयुताम् ॥ अंत्योंकारसमायुक्तामन्यंतेमुनयोपरे ॥ प्रण
वांतेतथाचादावाहुरन्येजपक्रमम् ॥ तदाद्यांचतदंतांचकुर्यात्प्रणवसंपुटाम् ॥ आद्यंतरक्षितांकुर्यादितिपाराशरोब्रवीत् ॥ जपार्थंमा

लातु स्फटिकेंद्राक्षरुद्राक्षपुत्रजीवसमुद्भवैः ॥ अक्षमालाप्रकर्तव्याप्रशस्ताचोत्तरोत्तरा ॥ तत्संस्कारोपि । गंगांभस्स्नपितामालासं
स्कृतास्यान्नसंशयइतिब्रह्मवैवर्ते।जपसंख्यातु । लाक्षांकुशीदंसिंदूरंगोमयंचकरीषकम् ॥ विलोड्यगुटिकाःकृत्वाजपसंख्यांप्रकारयेत् ।
इति । नाक्षतैर्हस्तपर्वैर्वानपुष्पैर्नचधान्यकैः ॥ जपसंख्यांप्रकुर्वीतकृताचेन्निःफलाभवेदिति । किञ्चपर्वभिस्तुजपेद्देवींमालाकाम्यजपे
स्मृता ॥ गायत्र्यावेदमूलत्वाद्वेदःपर्वसुगीयते ॥ इति। गायत्रीकल्पे तिस्रोंगुल्यस्त्रिपर्वाणोमध्यमाचैकपर्विका ॥ पर्वद्वयंमध्यमायामे
रुत्वेनप्रकल्पयेत् ॥ अनामामध्यमारभ्यकनिष्ठादितएवच ॥ तर्जनीमूलपर्यंतंदशपर्वसुसंजपेत् ॥ अंगुल्यग्रेचयज्जप्तंयज्जप्तंमेरुलंघ
ने ॥ पर्वसंधिषुयज्जप्तंतत्सर्वंनिष्फलंभवेत् ॥ गणनादिविधिमुलंघ्ययोजपेत्तुजपंनरः ॥ गृह्णंतिराक्षसास्तेनगणयेत्सर्वदाबुधः ॥ इति।
गायत्रीजपोविहितएव। निषेधस्तुमालासंख्याविषयएवेति । वृद्धमनुना वस्त्रेणाच्छाद्यतुकरंदक्षिणंयःसदाजपेत् ॥ तस्यस्यात्सफलं
जप्यंतद्धीनमफलंविदुरितिप्रोक्तं। एतदेवगोमुखीयंत्रेबीजं । तन्मानमपिशिष्टैरुक्तं । हृदयान्नाभिपर्यंतंलम्बमानाजपस्थली ॥ शरचं
द्रांगुलैर्दीर्घाकरावेशसमायता ॥ कर्तव्यागोमुखाकाराविद्वद्भिराविकादिनेति । ननुपूर्वंन्यासादितांत्रिकमुक्तंकथंतर्हिपराशरादिभिर्वे
दानुयायिभिस्तल्लिखितम्। तदपिगायत्रीदीक्षावतामेव । दीक्षात्रतांत्रिकविधिकृतानतूपनयनविधिनावैदिकी । सातुप्रपंचसारेएकोन
त्रिंशपटलेगायत्रीमंत्रविधौउक्ता। सब्रह्मविष्णुरुद्रैश्चसेश्वरैःससदाशिवैः ॥ ससर्वात्माह्वयैःकुर्यादंगन्यासंसमाहितः ॥ इत्यनेनन्यासानुक्त्वा
एवंकृत्वातुसिद्ध्यर्थंगायत्रींदीक्षितोजपेदिति । व्याहृतित्रयसंयुक्तांगायत्रींदीक्षितोजपेदितिशारदायामपितथैव। तेनशुद्ध[1]वैदिकानांतन्न।
एषोंगन्यासएवमप्येकेनेच्छंतिसहिविधिरवैदिकइत्याश्वलायनगृह्यपरिशिष्टोक्तेः। वैदिकैस्तुछंदआद्येवमंत्रेषुवेदितव्यंनन्यासादि । तथा
चछंदोगब्राह्मणं । योहवाऽविदितार्षेयछंदोदैवतब्राह्मणेनमंत्रेणयाजयतिवाध्यापयतिवास्थाणुंगच्छतिगर्त्तंवापद्यतेप्रमीयतेपापीयान्भवति
यातयामान्य[2]स्यछंदांसिभवंतिअथयोमंत्रेमंत्रेवेदसर्वमाप्नोतिअयातयामान्यस्यछंदांसिभवंतितस्मान्मंत्रेमंत्रेविद्यादिति । तांत्रिक्यपिदी

१ उपनयनरीप्राप्तगायत्रीकाना। २ न्यासकृतइतिव्याख्यातंभाष्यकृद्भिरिति।



क्षाविष्णुमंत्रादीनांविहितादेवगुरोर्ग्राह्या नत्वविहितात्तदप्यत्रमंत्रप्रसंगादाह । अदीक्षितस्यवामोरुकृतंसर्वंनिरर्थकम् ॥ पशुयोनिमवाप्नो
तिदीक्षाविरहितोनरः॥द्विजानामनुपेतानांस्वकर्माध्ययनादिषु॥ यथाधिकारोनास्तीहस्याच्चोपनयनादनु ॥ तथात्रदीक्षितानांतुमंत्रतंत्रा
र्चनादिषु ॥ नाधिकारोस्त्यतःकुर्यादात्मानंशिवसंस्तुतमित्याद्युक्तेर्दीक्षापिग्राह्यैव। साचगृहस्थेनगृहस्थादेवगुरोर्ग्राह्या। तदुक्तं। नगृहस्थै
र्गृहीतव्योह्यगृहस्थाद्गुरोर्मनुः ॥ विप्रादेवसदाग्राह्योगुरुर्नान्योनृणामिह ॥ तत्वज्ञोयंत्रमंत्राणांपुरश्चर्यारतःसदा ॥ तपस्वीसत्यवादीचगृ
हस्थोगुरुरुच्यते ॥ इत्यगस्त्यसंहितायां । पाद्मेपि महाभागवतश्रेष्ठोब्राह्मणोवैगुरुर्नृणाम् ॥ सर्वेषामेवलोकानामसौपूज्योयथाहरिः ॥ आ
चार्योवेदसंपन्नोविष्णुभक्तोविमत्सरः ॥ ब्राह्मणोवीतरागश्चक्रोधलोभविवर्जितः ॥ इति। वक्ष्यत्यपितृतीये। वर्णानामाश्रमाणांचमुख्योभू
द्ब्राह्मणोगुरुरिति । वाराहेपि गर्भाधानादिकाःकृत्वापश्चाद्दीक्षणमाचरेत् ॥ तदर्थंॐनमोभगवतेसर्वरूपिणेहुंफट्स्वाहा ॥ अनेनषोडशा
र्णेनदेवदेवस्यसन्निधौ ॥ गर्भाधानादिकाःसर्वाःक्रियाःसमवधारयेत् ॥ त्रिभिराहुतिभिर्वह्नौततोदीक्षणमारभेत् ॥ विप्राद्गृहस्थात्संग्राह्यादी
क्षानान्यनरात्प्रिये ॥ गृहस्थेनविशेषेणदेवताभावसिद्धये ॥ आचार्यत्वंत्वाद्यवर्णेमयासंस्थापितंपुरा ॥ इति । किंचहरिभक्तिप्राप्त्यर्थंश्री
मधुसूदनस्वामिनापिभक्तिरसायनग्रन्थेस्फुटमेवश्रुतिरुक्ता ब्राह्मणंब्रह्मिष्ठंगुरुमुपासीतेति । तदर्थस्तुब्राह्मणंब्राह्मणत्वजातिविशिष्टंब्रह्म
वेदोस्त्यधीतत्वेनास्यास्मिन्वेतिब्रह्मीयद्वाब्रह्मपरमात्मास्त्युपास्यत्वेनास्येतिब्रह्मीअतिशयेनब्रह्मीब्रह्मिष्ठःइष्ठप्रत्ययेमतुबादिलोपोस्तीति
शाब्दिकाः। तथाचश्रोत्रियत्वंब्रह्मनिष्ठत्वंचब्राह्मणविशेषणमेवातोनेतरोगुरुर्विधेयः। अगुरुर्मनुजोऽस्पृश्योऽसम्भाष्योगुरुवर्जितः ॥ यत्किं
चित्कुरुतेपुण्यंतद्यातिबाष्कलेयकम् ॥ गुरुंविनानसंसारस्तीर्यतेबहुसाधनैः ॥ तस्माद्वेदविदंविप्रंज्येष्ठाश्रमगतंनरः ॥ गुरुंकुर्यात्प्रयत्नेन
पूजयित्वाविधानतः ॥ इति।ज्येष्ठाश्रमगतंगृहस्थमित्यर्थः। देवैश्चैवमनुष्यैश्चतिर्यग्भिश्चोपजीव्यते ॥ गृहस्थःप्रत्यहंयस्मात्तस्माज्ज्येष्ठो
गृहाश्रमीतिदत्तस्मृतेः। श्रुतिरपिश्रोत्रियंब्रह्मनिष्ठमित्याह। श्रोत्रियत्वमपिब्राह्मणेएवपर्यवस्याति अन्योन्यंगुरवोविप्रानह्येषामपरोगुरुः॥
विप्रस्तुसर्ववर्णानामाश्रमाणांचवैगुरुः ॥ सेव्यएवहिसर्वेषांविप्रोराजर्षिसत्तम ॥ देवानांदानवानांचमनुष्याणांतुकाकथा ॥ आरोपयंतिये

विप्रेसेवकत्वंनराधमाः ॥ ज्ञेयास्तेसर्वथापापाअंतेनिरयवासिनः ॥ इतिभविष्यादावपि । विपक्षेदोषमाह । यतेर्दीक्षापितुर्दीक्षादी
क्षाचवनवासिनाम् ॥ विविक्ताश्रमिणांदीक्षानसाकल्याणदायिकेतिगणेशविमर्शिन्यां । ब्राह्मे ब्राह्मणःस्वेतरान्वर्णान्गुरून्मोहात्करोतियः॥
सयातिनरकंघोरंविपन्नोपिभवेत्ध्रुवम् ॥ स्कांदे ब्राह्मणोनीचवर्णेभ्योमंत्रग्रहणमाचरन् ॥नमंत्रफलमाप्नोतिश्वयोनिंचाधिगच्छति ॥ वाराहे
उत्तमायाधमोवर्णोमन्त्रंयस्तुप्रयच्छाति ॥ सयातिपतितोभूत्वाश्वचांडालादियोनिषु ॥ ब्राह्मणःक्षत्रियोवापिवैश्योवामोहमाश्रितः ॥ न
कुर्यान्नीचवर्णेभ्योमंत्रादानंकदाचन ॥ भविष्ये शृणुराजेंद्रवक्ष्यामिमंत्रग्रहणमुत्तमम् ॥ ब्राह्मणंश्रोत्रियंशुद्धंनारायणपरायणम् ॥ प्रणम्य
विधिवद्भक्त्यामंत्रंगृह्णीतसंयतः ॥ योमोहादन्यवर्णेभ्योमंत्रंगृह्णातिकर्हिचित् ॥ वेषांतरमितेभ्योपिनसकल्याणभाग्भवेत् ॥ अतःकार्योगु
रुर्विप्रोगृहस्थोगृहिभिःसदेति ॥ वर्णोत्कृष्टोनलभतेहीनवर्णस्याशिष्यताम् ॥ हीनवर्णोपिनगुरुरुच्चवर्णस्यजायते ॥ वर्णोत्कृष्टोहीनवर्णंगुरुं
मोहाद्यदाचरेत्॥प्रायश्चित्तंतदाकृत्वागुरुमन्यंसमाश्रयेत् ॥ अन्यथागुरुशिष्यौतौजायेतेनरकौकसौ ॥ अतोज्ञात्वैवकर्तव्योगुरुशिष्योपि
धीमतेतिविश्वामित्रीयसंहितायामित्यलंपल्लवितेन ॥ किंचोपनेतारोपिगार्ग्येणोक्ताः पितापितामहोभ्राताज्ञातयोगोत्रजाग्रजाः ॥ उपना
येधिकारीस्यात्पूर्वाभावेपरःपरः ॥ इति । उक्ताधिकार्यभावेव्यासःवेदैकनिष्ठंधर्मज्ञंकुलीनंश्रोत्रियंशुचिम् ॥ स्वशाखीयमनालस्यंविप्रमा
चार्यमाश्रयेदिति । किंबहुना ॥ इतिगायत्रीपक्षः ॥ ८७ ॥ ॥ ॥छ॥ ॥ ॥छ॥
॥ अथगवांकुलस्यपक्षमाह ॥ वयंतद्गवांकुलंसदाहृदाधीमहि । तत्किंयत्रत्रयाणांदेवानांसर्गःस्थितिरमृषा ॥ शृंगमूलेस्थितोब्रह्माशृंगमध्येतु
केशवः ॥ शृंगाग्रेशंकरंविद्यात्त्रयोदेवाःप्रतिष्ठिताः ॥ इतिपराशरोक्तेरत्रावयवावयविनोरभेदोपचाराच्छृंगस्थागोस्थाएवतात्स्थात्ताच्छ
ब्द्यमितिन्यायाद्वा । दृष्टांतस्तूक्तवत् । यतोयस्यसकाशादाद्यस्यधर्माधर्मयोरुभयोराद्यस्यधर्मस्यजन्मयद्वार्थेष्वाद्यस्यधर्मस्यजन्मधर्मो
हिवृषरूपधृगितिवक्ष्यमाणत्वात् । वृषस्यजन्मेत्यर्थः । धर्मोयंभूतलेसाक्षाद्ब्रह्मणाह्यवतारितः ॥ त्रैलोक्यधारणायालमन्नानांचप्रसूतये ॥
इतिपराशरोपिप्राह ॥ किंचयतोयस्यान्वयात्सेवनादितरतःइतराण्यवेदविहितानिपरस्त्रीसंगमद्यपानादीनितनोतिविस्तारयतीतीतरःस



एवेतरतःपापकर्मास्वराड्भवति । स्वरट्शब्दोत्रगोलोकपरःस्वर्गोलोकेराजतइतिस्वराट् । गवांसेवनतोनित्यंमहापापरतोपियः॥सोपिगो
लोकमाप्नोतिकिंसुपुण्यरतोनरः ॥ इतिगोमाहात्म्योक्तेः । यद्वागांसंस्मृत्यनमस्कृत्यकुर्यात्तांचप्रदक्षिणां ॥ प्रदक्षिणीकृतातेनसप्तद्वीपाव
सुंधरा ॥ तृणोदकादिसंयुक्तंयोददातिगवाह्निकं ॥ सोश्वमेधसमंपुण्यंलभतेनात्रसंशयः ॥ गवांकंडूयनंधूमंगोप्रदानसमंभवेदितिपराशरो
क्तेरश्वमेधादिफलंस्वर्गंप्राप्नोतीतिभावः । अभिज्ञोतिनिपुणोहिपराशरःकवयेसुव्रतसंज्ञर्षयेआदिदेवविहितंयतश्चयस्यब्रह्ममहत्त्वंतेने । त
थाहि पातकानिकुतस्तेषांयेषांगृहमलंकृतम् ॥ गोभिस्सबालवत्साभिःसदास्त्रीभिरिवस्वयम् ॥ ब्राह्मणानांगवांचैवकुलमेकंद्विधाकृतम् ॥
तिष्ठंतियत्रमंत्राश्चयत्रसंतिहवींषिच ॥ गोभिर्यज्ञाःप्रवर्त्तंतेगोभिर्वेदाःप्रवर्द्धिताः॥ गोभिर्वेदाःसमुद्गीर्णाःसषडंगपदक्रमाः॥ इत्यादिबह्वस्ति।
यस्मिन्गोकुलमहत्त्वेसूरयोनास्तिकामुह्यांति अर्थवादबुद्धिंकुर्वंति । यद्वायतोयस्यसकाशादाद्यस्यवेदस्यजन्माभूत् । इतरेषांतदंगानांचज
न्माभूत् । गोभिर्वेदाःसमुद्गीर्णाःसषडंगपदक्रमाइतिपराशरोक्तेः । यत्कुलंस्वेनैवराजतइतिस्वराट् । अन्येतुगोकृतसस्यादिनेतिभावः । यतो
ऽन्वयादर्थेषुबहुविधद्रव्येष्वभिज्ञःकोर्थस्तदनुभवितास्यात् । किंकर्तुमादिकविंश्रीकृष्णंप्राप्तुं । श्रीकृष्णःप्राप्यतेविप्रनित्यंगोकुलसेवयेत्या
त्यादिपुराणात् । यद्वायस्मिन्गोकुलेसूरयोयेतेनमुह्यंतिअन्येतुपामराःपशुसामान्याधियामुह्यंत्येवेति । किंभूतंस्वेनधाम्नानुभावेननिरस्तं
निजसेविनांकुहकंदरिद्रलक्षणंवायेनतत्तथा । तीर्थरूपत्वाल्लक्ष्मीरूपत्वाद्वा । सर्वतीर्थमयागावइत्युक्तेर्यालक्ष्मीःसर्वदेवानांधेनुरूपेणसंस्थि
ताइतिमंत्राच्च । पृथिव्यांयानितीर्थानिआसमुद्रसरांसिच ॥ गवांशृंगोदकस्यापिकलांनार्हंतिषोडशीमितिस्मृतेः । स्पृष्टाश्चगावःशमयंति
पापंसंसेविताश्चोपनयंतिवित्तम् ॥ ताएवदृष्टास्त्रिदिवंनयंतिगोभिर्नतुल्यंधनमस्तिकिंचिदितिस्मृतेश्च । पुनःसत्यंसत्याधारत्वात् । गोषुस
त्यंप्रतिष्ठितमितिस्मृतेश्च । पुनःपरंसर्वोत्कृष्टंसर्वदेवादिरूपत्वात्तदुक्तंवाराहे सर्वदेवमयागावःसर्ववेदमयास्तथा ॥ अमृतंधारयंत्यश्चप्रचरंति
महीतले॥तीर्थानांपरमंतीर्थमतस्तीर्थंनविद्यते॥पवित्राणांपवित्रंचपुष्टीनांपुष्टिरेवच ॥ दध्नाचत्रिदशाःसर्वेक्षीरेणचमहेश्वरः ॥ घृतेनपावको
नित्यंपायसेनपितामहः ॥ सकृद्दत्तेनप्रीयंतेवर्षाणिचत्रयोदश ॥ पञ्चगव्येनपीतेनसर्वपापंप्रणश्यतीतिशैवेपि। समुद्रांतांधरांचैवसुवर्णपरिपू

रिताम् ॥ ददातिपुरुषोयश्चगांचैवात्रददातियः ॥ तयोःसमफलंप्रोक्तंनात्रकार्याविचारणा ॥ यस्यादुग्धंनरःपीत्वागंगोदकफलंलभेत् ॥ गोमयेवसतेलक्ष्मीर्गोमूत्रंतीर्थवारिवदितिपरत्वमुक्तं । सर्वेदेवाःस्थितादेहेसर्वदेवमयाहिगौरितिपाराशर्य्योंच । किञ्चअविद्वान्ब्राह्मणोयस्तु कुर्यात्तासांप्रतिग्रहम् ॥ ततःप्रभृतिमेध्यांतःपितरस्तस्यशेरते ॥ विद्वानपिगृहीत्वागांप्राजापत्यत्रयंचरेत् ॥ दानागतांचयोधेनुंमौल्येनप्रददातिवै ॥ पितरस्तस्यसततंतद्रोमसमसंख्यकम् ॥ कुम्भीपाकेप्रपच्यंतेमातृविक्रयएवसः ॥ साविक्रीताविभक्ताचदहत्यासप्तमंकुलम् ॥ मौल्योद्घाटनकर्त्तापिनरकंप्रतिप्रपद्यते ॥ इत्यपिवाराहे । गवांमाहात्म्यंतुवक्तुंनशक्यतेऽतोऽलम् ॥ इतिगोकुलपक्षः ॥ ८८ ॥

॥ अथरुद्राक्षपक्षः ॥ वयंतंरुद्राक्षंसदाहृदाधीमहि । तंकंयत्रत्रयाणामुत्तमाधममध्यमभावानांसर्गोऽमृषा । तदुक्तंधात्रीफलप्रमाणंयच्छ्रेष्ठमेतदुदाहृतम् ॥ बदरीफलमात्रंचमध्यमंप्रोच्यतेबुधैः ॥ अधमंचणकाकारंप्रक्रियैषामयोच्यते इतिजाबाले । दृष्टांतःपुरोवत् । यतोयस्यरुद्राक्षस्याद्यस्यश्रीशंकरस्यसकाशात्जन्माभूत् । तदुक्तंबृहज्जाबाले । अथभुशुंडःकालाग्निरुद्रंपप्रच्छकथंरुद्राक्षोत्पत्तिस्तद्धारणेकिंफलमिति सहोवाचभगवान्कालाग्निरुद्रस्त्रिपुरवधार्थायाहमामीलिताक्षोऽभवंतेभ्योजलबिंदवोभूमौपतितास्तेरुद्राक्षाजाताःसर्वानुग्रहार्थायतेषांनामोच्चारणमात्रेणदशगोदानफलंदर्शनस्पर्शनाभ्यांद्विगुणंफलमतऊर्ध्वंवक्तुंनशक्नोमीति । यतोयस्यरुद्राक्षस्यान्वयात्संबंधादितरतइतरोपिशिवभक्तिरहितोपिपुमान्स्वराट् श्रीशिवोभवति । रुद्राक्षान्कंठदेशेदश[३२]नपरिमितान्मस्तकेविंशतीद्वे[४०]षट्[६]षट्[६]कर्णप्रदेशेकरयुगलकृतेद्वादशद्वा[१२]दि[१२]शैव ॥ बाह्वोरिन्दोःकला[१६]भिर्नयनयुगकृते[१]एकमेकंशिखायांवक्षस्य[१०८]ष्टाधिकंयःकलयतिशतकंनीलकंठःस्वयंसः ॥ इतिबोपदेवोक्तेः । किंकर्तुमादिकविंश्रीशंकरंप्राप्तुं । चतुर्थीपूर्ववत् । नाविष्णुस्स्यादिहक्ष्मेशोनाशिवोवैकविर्भवेदित्यभियुक्तोक्तेः । शिवांशाज्जातःकविश्चेत्तर्हिशिवस्यादिकवित्वंकैमुतिकन्यायसिद्धमेव । यस्मिन्रुद्राक्षेसूरयोविद्वांसोपि वैष्णवाभासामुह्यंति । रुद्राक्षंधारयेन्नैवतथाभस्मत्रिपुंड्रकम् ॥ धारणात्पुण्यहानिस्स्याद्द्विजातीनांनसंशयः ॥ इत्यादिकल्पितवाक्यैर्निन्दांकुर्वंतीतिभावः । शैवोथवैष्णवोवापिसौरःशाक्तस्तथैवच ॥ तथान्यदेवभक्तस्तुकृत्वारुद्राक्षधारणम् ॥ तत्तद्देवकृपांप्राप्यतत्तद्देवपुरंव्रजेत् ॥ तुलस्याधारणंकृत्वासौरोगाणपतस्तथा ॥ शैवःशाक्तोवैष्णवो



वावैकुंठपुरमावसेदितिकौशिकसंहितायां सर्वदेवोपासकानांतुलसीरुद्राक्षोभयधारणस्यप्रतिपाद्यत्वेनवृथाकलहकारिणस्तत्तद्देवोपासकाभासाएवेतिसिद्धांतितं तत्रैव । योरुद्राक्षोब्रह्ममोक्षंतेने । ०कृत्वारुद्राक्षधारणं ॥ यःशिवंपूजयेद्भक्त्यासमोक्षमधिगच्छति । ससर्वाण्येनांसितरातिरुद्रोभूत्वाह्यमृतत्वमेतीतिश्रुतेः ॥ किंभूतंस्वेनधाम्नाप्रभावेणनिरस्तोऽपास्तःकुहकःस्वसेविनांसर्वपापलक्षणोयेनतं । रुद्राक्षदर्शनेनापिनश्यत्यघकुलंक्षणादितिशिवरहस्योक्तेः ॥ पुनःसत्यंकर्मसत्यत्वापादकं । अरुद्राक्षधरोभूत्वायत्किंचित्कर्मवैदिकम् ॥ कुर्याद्विप्रस्तुयोमोहान्नह्यवाप्नोतितत्फलमितिस्कांदोक्तेः । पुनःपरंसर्वदेवमंत्रजपेमुख्यंजपसाद्गुण्यकरं । तदुक्तंशिवपुराणे । रुद्राक्षमालयानित्यंमंत्रंजपतियोनरः ॥ तस्यनाम्नांशतेनैवसहस्रस्यफलंलभेत् । विष्णोरपिविशेषेणजपंकुर्यात्प्रयत्नतः ॥ वस्तुतः सर्वदेवानांजप्येमुख्याः प्रकीर्तिताः ॥ इति । अथान्यदप्याह । रुद्राक्षाणांफलंग्राह्यंदोविसर्षपमात्रकम् ॥ सर्षपादधिकाग्राह्याआर्द्रधात्रीफलावधि ॥ तदूर्ध्वंक्षत्रियैर्ग्राह्यावैश्यैर्ग्राह्यास्तदूर्ध्वकम् । तदूर्ध्वंशांकरैर्ग्राह्याएवंरुद्राक्षलक्षणम् ॥ ब्राह्मणोबिभृयाच्छ्वेतान्रक्तान्राजातुधारयेत् ॥ पीतान्वैश्यस्तुबिभृयात्कृष्णान्शूद्रस्तुधारयेत् ॥ स्वयमेवकृतद्वारंयत्तत्स्यादितिहोत्तमम् ॥ यत्तुपौरुषयत्नेनकृतंतन्मध्यमंभवेत् ॥ समान्स्निग्धान्दृढान्स्थूलान्कंटकैःसंयुतान्शुभान् ॥ वृत्तान्क्षौमस्यसूत्रेणधारयेत्सर्वदानरः ॥ निघर्षेहेमलेखाभायस्यरेखाप्रदृश्यते ॥ तदक्षमुत्तमंविद्यात्तद्धार्यंशिवपूजकैरिति रहस्यार्णवे । जिघ्रन्नपितथाचाश्नन्प्रलपन्नपिसंततम् ॥ कुर्वन्नपितथागच्छन्विसृजन्नपिमानवः ॥ रुद्राक्षधारणादेवसर्वैःपापैःप्रमुच्यतेइति सर्वदाधारणंविधीयते । नाशुचिर्धारयेन्मालामितिनिषेधोजपमालादिविषयोबोध्योनतुकंठस्थविषयइति । क्रिमिदुष्टंछिन्नभिन्नंकंटकैर्हीनमेवच ॥ व्रणयुक्तमवृत्तंयत्षड्रुद्राक्षाणिवर्जयेदितिस्कांदे । सहस्रंधारयेद्यस्तुरुद्राक्षान्वैप्रयत्नतः ॥ तंनमंतिसुराःसर्वेयथारुद्रस्तथैवसः ॥ इतिब्रह्मोत्तरे । ओंकारमाहात्म्येपि रुद्राक्षाणांसहस्रंतुममुक्षुर्धारयेत्सदा ॥ तदभावेशतंवापिदशनैकमथापिवेतिशंकरसंहितायां । धर्तव्यमेव सूत्रेणसौवर्णेनाथवाद्विजाः ॥ राजतेनचताम्रेणरुद्राक्षंतुगलादिषु ॥ यज्ञोपवीतेचैकंतुभस्मवत्सर्वदाद्विजाः ॥ रुद्रस्याक्षतयाविप्रारुद्राक्षमितिकीर्तितम् ॥ रुद्राक्षधारकेशंभुः परिपूर्णकटाक्षवान् ॥ ज्ञात्वायेशिवभूषणंपरतमंस्वर्गापवर्गप्रदंरुद्राक्षंविधिनामुनानिजतनौसम्य

क्‌ सदाबिभ्रति ॥ तेषांदग्धनिजैनसामिहफलंजानातिकोत्रासुधीस्त्यक्त्वाशंकरमंबिकांगणपतिंनन्दींतथाषण्मुखमितिबृहज्जाबाले । धारण मंत्राः सद्योजातेशिरसिवामदेवेनकर्णयोः ॥ अघोरेणगलेधार्यंहृदितत्पुरुषेणच ॥ ईशानाख्येनमंत्रेणकरयोर्धारयेत्सुधीः ॥ ब्रह्मचारिगृह स्थानांवनस्थानांतथैवच॥ रुद्राक्षधारणेमंत्राःप्रोक्तावैविश्वयोनिना॥ प्रणवेनैवसंधार्यायातिभिः सर्वसिद्धये ॥ द्विजानांमंत्रतःप्रोक्तमन्येषांत द्विवर्जितम्‌ ॥ रुद्राक्षौएकमुखपञ्चमुखौधारणेऽतिश्रेष्ठौ । आरभ्यैकमुखन्तावद्यावद्वक्त्राणिषोडश ॥ एतेषांद्वावतिश्रेष्ठौज्ञेयौधारयतांनृ णाम्‌ ॥ येधारयंत्येकमुखंरुद्राक्षंनित्यमेवहि ॥ जीवन्मुक्तास्तुविज्ञेयानरास्तेनात्रसंशयः ॥ एकवक्त्रःशिवःसाक्षाद्ब्रह्महत्यांव्यपोहति ॥ येरुद्राक्षंपञ्चमुखंधारयंत्यनिशंनराः ॥ रुद्रलोकेचरुद्रेणसदातिष्ठंतिमोदिताः ॥ इतिकेदारखण्डे । मालाप्रकारोरुद्रयामले त्रिंशदक्षैःकृता मालाधनदाजपकर्मणि ॥ सप्तविंशतिसंख्याकैरक्षैःपुष्टिप्रदाभवेत्‌ ॥ पञ्चविंशतिसंख्याकैःकृतामुक्तिप्रदाभवेत्‌ ॥ अक्षैस्तुपंचदशभिरभि चारफलप्रदा ॥ अष्टोत्तरशतेनापिमालासर्वार्थसाधका ॥ रुद्राक्षमूलंतद्ब्रह्मातन्नालंविष्णुरुच्यते ॥ तन्मुखंरुद्रइत्याहुर्बिंदवःसर्वदेवताः ॥ इ ति । अत्रापिबहुवक्तव्याद्उपरम्यते ॥ इतिरुद्राक्षपक्षः ॥ ८९ ॥ ॥छ॥ ॥ ॥

॥ अथपंचाक्षरपक्षः ॥ ॥ वयंतंपंचाक्षरमंत्रंसदाहृदाधीमहि । तंकंयत्रत्रयाणांपातकोपपातकमहापातकानांसर्गोमृषाऽसत्यःयथातेज आदीनांविनिमयोमृषा । जप्तेपंचाक्षरेमंत्रेविनाशंयांतिसर्वथा ॥ पातकानिमहापातकान्युपपातकानिचेतिशिवरहस्योक्तेः। नमःशिवायेति सकृज्जपित्वापापंमहद्घोरमुपैतिनाशम्‌ ॥ भूम्यंतरिक्षात्परिपूर्णकाष्ठंस्वल्पाग्निनादग्धमुपैतिनाशम्‌ ॥ रसनेरचितोयमंजलिस्तेपरनिंदा परुषैरलंवचोभिः ॥ नरकापहरंनमःशिवायेत्यमुमादिप्रणवंभजस्वमंत्रमितिनाममाहात्म्ये । यतोयस्यान्वयात्सेवनादाद्यस्यशंकरस्यज न्माविर्भावोभवति। पंचाक्षरंतुजपतआविर्भूयान्महेश्वरः॥ इतिशिवधर्मे। किंचेतरतइतरोपिशूद्रादिरपियतोमंत्रात्स्वराट्मुक्तिभाग्भवति। जाबालोपनिषदि यश्चांडालइतिवाचंवदेत्तेनसहनसंवदेतेतिकथनात्‌। शूद्रोवाप्यथवान्योवाकृत्वापंचाक्षरीजपम्‌ ॥ मुक्तिभागीभवेत्सत्यंना न्यथाहरिणोदितमितिशिवभक्तिचंद्रोदयादौ । किंचयतोर्थेष्वभिज्ञःस्यात्‌ । पंचाक्षरजपान्नित्यंसर्वशास्त्रार्थविद्भवेत्‌ ॥ शंकरस्यप्रियोभू

त्वाह्यंतेतत्पदमाप्नुयादितिस्कांदाद्युक्तेः । योमंत्रआदिकवयेब्रह्मणेनारदादिरूपायान्यस्मैवाब्रह्मज्ञानंतेने । तदुक्तं शिवषडक्षरजपाद्ब्रह्माप सर्गचातुरीम्‌ ॥ नारदाद्यास्तुऋषयोज्ञानमापुःसनातनमितिशिवधर्मे । यस्मिन्मंत्रेसूरयोवैष्णवाभासाअंत्यजानुयायिनोमुह्यंति[1]। शिवा र्चाशूद्रजातीनांनद्विजानांकदाचनेत्यादिकल्पितवाक्यैर्निंदापराभवंति । किंभूतंस्वेननिजेनधाम्नानिरस्तोऽप्राकृतोनिजोपासकानांकुह कोऽज्ञानलक्षणोयेनतं । एतच्चस्कंदशिवपुराणयोर्बहुधाख्यानैःप्रपंचितंतत्रैवान्वेष्यं । यद्वाकुहकोयमशासनक्लेशोबोध्यस्तदुक्तं नाममा हात्म्ये पञ्चाक्षरोक्तिश्शं[2]तरुद्रियोक्तिमितिपूर्वान्वयिपदद्वयम्‌। मन्नामरुद्राक्षविभूतिधारिणोममाग्रतोयस्तुपुराणवक्ता ॥ सर्वेषुपापेष्वपितेषु सत्सुप्रशास्त्यैयं[3]नैवममाधिकारः ॥ इतियमोक्तेः। पुनःसत्यंपूजासत्यतापादकं । तदुक्तंशिवरहस्ये कर्त्तव्यःशिवपूजांतेपञ्चाक्षरजपोद्विजै रिति । स्कांदेपि नमस्कारोजपश्चैवसर्वाभीष्टप्रदाउभौ ॥ पूजांतेचसदाकार्यौभोगमोक्षार्थिभिर्नरैः ॥ द्विषट्सहस्रंजप्तव्यःशैवःपञ्चाक्षरस्त दा ॥ सहस्रमप्रमादेनशतमष्टोत्तरंतथा ॥ रुद्राक्षमालयैवहिजप्तव्यस्तुषडक्षरः ॥ मोक्षप्रदोभवत्येवसत्यमेवोच्यतेमया ॥ जपेयावत्फलंप्रो क्तंविद्रुमोत्तममालया ॥ ततःसहस्रगुणितंमुक्तामालिकयाफलम्‌ ॥ ततःकोटिगुणंप्राप्यंशुद्धस्फटिकमालया ॥ ततोनंतगुणंप्रोक्तंशुद्धरुद्रा क्षमालयेति । पुनःपरंसर्वमंत्रशिरोमणिं। तदुक्तंस्कांदे पंचाक्षरःपरोमंत्रःसर्वमंत्रशिरोमणिः ॥ स्त्रीभिरप्यन्वहंजप्यःसहस्रंविधिपूर्वकम्‌ ॥ पंचाक्षरप्रभावस्तुनज्ञातोमादृशैर्जनैः ॥ किंतुवेदमहादेवस्तत्प्रभावंयथार्थतः ॥ जप्तेपंचाक्षरेमंत्रेनश्यत्यघकुलंक्षणात्‌ ॥ पंचाक्षरोमहामं त्रःसशिवात्मकएवहि ॥ विद्यासुश्रुतिरुत्कृष्टारुद्रैकादशनीश्रुतौ ॥ तत्रपंचाक्षरीतस्यांशिवइत्यक्षरद्वयम्‌ ॥ ब्रह्मोत्तरे। देवानांपरमोदेवो यथावैत्रिपुरांतकः ॥ मंत्राणांपरमोमंत्रस्तथाचैवषडक्षरः ॥ नमस्कारेणजीवत्वंशिवेतिपरमात्मनि ॥ ऐक्यंगतमतोमंत्रःपरब्रह्ममयोह्यसौ॥ किमत्रबहुभिर्मंत्रैःकिंतीर्थैःकिंतपोवरैः ॥ यस्योंनमःशिवायेतिमंत्रोहृदयगोचरे ॥ कैवल्यमार्गेदीपोयमविद्यासिंधुवाडवः॥ महापातकदा वाग्निःसोयंमंत्रःषडक्षरः ॥ पंचाक्षरःस्वतःसिद्धःसर्वदेवशिरोमणिः ॥ पूजांतेजपनीयोयंकेवलस्तुषडक्षरः ॥ वायवीयसंहितायां । पंचाक्षर

[1] अंत्योंतभवोजोजकोरायन्नाम्निसोंत्यजस्तदनुयायिनःरामानुजानुयायिनः [2] रुद्रः [3] यमः

स्तुशूद्राणांब्राह्मणानांषडक्षरः ॥ ब्राह्मणपदंद्विजातेरुपलक्षकम् । पंचाक्षरेणकर्त्तव्यंस्त्रीभिःशूद्रैर्ममार्चनम् ॥ षडक्षरेणकर्त्तव्यंब्रह्मक्षत्रविशै
स्तथा ॥ तथा आदौनमःप्रयोक्तव्यंब्रह्मक्षत्रविशैस्तथा ॥ शूद्रैरंतेप्रयोक्तव्यंतद्वत्स्त्रीणांतथैवच ॥ अयंनियमःपूजाजपयोर्नत्वातुरस्य । त
दुक्तं विश्वेश्वरसंहितायां नारीवाथनरोवाथब्राह्मणोवांत्यएववा ॥ नमोंतंवानमःपूर्वमातुरःसर्वदाजपेत् ॥ शिवरहस्येविशेषःशिवपञ्चाक्षरः
शुद्धोजपनीयोहिभाक्तितः ॥ अष्टोत्तरसहस्रंतुतांत्रिकैर्न्यासपूर्वकम् ॥ वैदिकैर्न्यासरहितोजपनीयःप्रयत्नतः ॥ इति । अनेनैवाभिप्रायेणगा
यत्र्याःषडंगनन्यासमुक्त्वाएकेनेच्छंतिएषविधिरवैदिकइत्याश्वलायनेनोक्तम् । उपदेशोस्तुमावास्तुशिवमंत्रस्यपार्वति ॥ तथापिजपनी
योयंमंत्रश्शैवषडक्षरः ॥ इतिशिवरहस्योक्तेरतएवयथोक्तलक्षणसम्पन्नगुरोरभावात् । गुरोरभावेमन्त्राणांपुस्तकंगुरुमाचरेदितिपाद्मादौ । द
क्षिणामूर्त्यादिभ्योपिदीक्षाग्राह्येत्युक्तं । कलौतूपदेशस्यैवप्राशस्त्यमुक्तं । उपदेशःकलौयुगइतितंत्रसारोक्तेस्तत्स्वरूपमपितत्रैव चन्द्रसूर्यो
परागेचसिद्धक्षेत्रेसुरालये ॥ मन्त्रमात्रप्रकथनमुपदेशःप्रकीर्त्तितःइत्यलंप्रसक्तानुप्रसक्तेन ॥ इतिपंचाक्षरपक्षः ॥ ९० ॥ ॥ छ ॥

॥ अथशिवलिंगपक्षः ॥ ॥ वयंतच्छिवलिंगंसदाहृदायेधीमहि । हृदेवायःस्थानंतस्मिन् । तत्कियत्त्रयाणांलोकानांसर्गोऽमृषाकथंयथातेजो
वारिमृदामविनिमयइतिसृष्ट्यादौसमभूल्लिंगंतस्मिँल्लोकास्त्रयःस्थिताः ॥ ब्रह्मादिद्वारानिष्क्रांतालीयंतेतत्रतेपुनरितिशिवलिंपुराणयोरुक्तेः
किञ्चयतोलिंगादाद्यस्यविष्णोरितरतइतरेषांब्रह्मादीनांसर्वेषाजन्मलिंगाद्विष्णुःसमुद्भूतोब्रह्माद्याइतरेखिलाः ॥ इत्यपितत्रैव । किञ्चयतो
ऽन्वयात्सेवनात्पुमानर्थेषुधर्मादिष्वभिज्ञोभूत्वास्वराट्जीवन्मुक्तःस्यात् लिंगार्चनेकृतेसर्वसिद्धीरुद्रास्यजायते । भुक्त्वाधर्मार्थकामांश्च
तत्फलानिचसर्वशः ॥ जीवन्मुक्तिफलंप्राप्यदेहांतेशिवमन्वयादितिलिंगादौ । यल्लिंगमादिकवयेविष्णवेन्यस्मैवाब्रह्मभुक्तिंमुक्तिंवातेने ।
तदुक्तंब्रह्मवैवर्ते द्वितीयविभागे । उपमन्युर्हरिःश्वेतोनंदिबाणदशाननाः ॥ लिंगाराधनतोन्येपिभुक्तिंमुक्तिंसमागताः ॥ इतिब्रह्मस्याद्भुक्ति
मोक्षयोरित्यपिकोशांतरात् । यस्मिँल्लिंगेसूरयोयथाकथंचिद्विद्वांसोपिवैष्णवत्वेनाभासमानानास्तिकामुह्यंति लिंगंनैवस्पृशेत्क्वचित् । शू
द्रैरर्च्यंरुद्रलिंगंद्विजोनैवार्चयेत्क्वचिदित्यादिनानिंदांकुर्वंति । किंभूतंस्वेननिजेनधाम्नातेजसानिरस्तोऽपास्तःकुहकोदुःखदोयमभृत्यादि

येनतं । तदुक्तंपाद्मे । लिंगपूजापरंशैवंनिरीक्ष्ययमकिंकराः ॥ दूरादेवपलायंतेस्मरंतोयमशासनमिति । पुनःसत्यंसदैवविद्यमानत्वात् ।
भक्तानामनुकंपार्थंसदातिष्ठतिशंकरः । लिंगाकारेणसर्वत्रपृथिव्यांमुनिसत्तमेतिशैवस्कांदयोः । पुनःपरंसर्वोत्कृष्टंअवश्यपूर्तव्यात् । तदु
क्तंशिवधर्मे गर्भधारणजःक्लेशस्तन्मातुः सफलः स्मृतः ॥ यद्गर्भान्निर्गतः पुत्रोलिंगार्चनरतोभवेत् ॥ लिंगस्यार्चनमेवैकंकलौसारतरंसुराः ॥
तदेवघोरसंसारमहासागरतारकम् ॥ संसारानलतप्तानांशिवलिंगार्चनामृतम् ॥ संसारतापपापंचसद्योदूरीकरोतिहि । इति । शिवेकिंबहुनो
क्तेननित्यंयोलिंगपूजकः ॥ सममातिप्रियतमःसत्यंसत्यंनसंशयः ॥ कलौतुमानुषंजन्मभवत्यत्यंतदुर्लभम् ॥ तत्रचेन्मानुषंजन्मकर्तव्यंलिं
गपूजनम् ॥ मानुष्येष्वपिचेज्जन्मब्राह्मण्यांब्राह्मणोयदि । तदात्ववश्यंकर्तव्यंशिवलिंगस्यपूजनम् ॥ यत्फलंप्राप्यतेराजन्शिवलिंगस्य
पूजया ॥ तत्फलंनैवसंप्राप्यमश्वमेधार्बुदैरपीतिसनत्कुमारसंहितायाम् । लिंगपदार्थस्तुमहाकालोत्तरे । लीयंतेयत्रभूतानिनिर्गच्छंतिय
तः पुनः ॥ तेनलिंगंपरंव्योमनिष्कलःपरमःशिवः ॥ लिंग्यतेचिंत्यतेयेनभावेनभगवान्शिवः ॥ योगिभिस्तत्त्रिधालिंगंव्यक्ताव्यक्तोभयात्म
कम् ॥ व्यक्तंतत्सकलंज्ञेयमव्यक्तंनिष्कलंमतम् ॥ ज्ञानज्योतिर्मयंलिंगंव्यक्ताव्यक्तमिदंस्मृतम् ॥ तथाचरामेश्वरब्रह्मेश्वरव्यासे
श्वरबिल्वकेश्वरादीनितैस्तैर्महापुरुषैः प्रतिष्ठितान्यार्चितानितत्तन्नामपूर्वाणिदृश्यंतेतद्विषयाणिशतशउपाख्यानान्यपिश्रूयंते किंचना
र्मदंलिंगंतुसर्वोत्तमं । तदुक्तं । सर्वेषामेवलिंगानांनार्मदंमेसदाप्रियम् ॥ नातःपरतरंलिंगंपूजनेशस्यतेनृणामिति । ननुनर्मदायांकथंलिंगाविर्भाव
स्तत्राह रेवयाशिवोमेपुत्रोभवत्विितिनिश्चित्यमहत्तपश्चकृतंतत्तपसाप्रसन्नेनशिवेनोक्तंनाहंकस्यापिपुत्रोभवामिसर्वेश्वरत्वात्परंतुतवभक्त्या
पाषाणलिंगरूपेणतवगर्भगोभूत्वाहंतवपुत्रोभवामीत्युक्तमतस्तद्भवलिंगंशिवरूपमितिधरांप्रतिवाराहेवाराहेणोक्तम् । ततोलिंगाराधनमे
वप्रतिमापेक्ष्याश्रेयस्करं । तदुक्तंविश्वेश्वरसंहितायां लिंगंप्राधान्यतःपूज्यंतथावेरंचगौणकम् ॥ लिंगाभावेतुवेरंस्यात्पूजायांस्थापनेमम
इति । रसलिंगंब्राह्मणानांसर्वाभीष्टप्रदंभवेत् । बाणलिंगंक्षत्रियाणांमहाराज्यप्रदंमतम् ॥ स्वर्णलिंगंतुवैश्यानांमहाधनपतिप्रदम् ॥ शिला
लिंगंतुशूद्राणांमहाशुद्धिकरंशुभम् ॥ स्वीयाभावेन्यदीयंतुपूजायांननिषिध्यते ॥ स्त्रीणांतुपार्थिवंलिंगंसभर्तॄणांविशेषतः ॥ विधवानांनिवृ

त्तानांरसलिंगंविशिष्यते । विधवानांप्रवृत्तानांस्फाटिकंपरिकीर्त्तितम् ॥ वायौ कलौतुपार्थिवंलिंगंक्षिप्रंसिद्धिकरंस्मृतम् ॥ कृतेमणिमयंलिंगं
त्रेतायांहेमसंभवम् ॥ द्वापरेपारदंलिंगंपार्थिवंतुकलौयुगे ॥ सर्ववर्णाश्रमाणांहिकलौपार्थिवमेवहीति । एतद्विषयविशेषस्तुभक्तलिंगार्चनदी
पिकायांद्रष्टव्यः बृहज्जाबालोपनिषद्यपि। अहरहः शिवलिंगमनभ्यर्च्यनाश्नीयात्फलमन्नमन्यद्वायद्यश्नीयाद्रेतोभक्षीभवेन्नापःपिबेत्पूयपो
भवेत्प्रमादेनानभ्यर्च्यभुक्त्वाभोजयित्वाकेशान्वापयित्वागव्यान्यपिपंचसंगृह्योपोष्यजलेरुद्रस्थानेवाजपेत्रिवारंशतरुद्रीयमादित्यंपश्यन्न
भिध्यायन्स्वकंकर्मततोरौद्रैरेवमंत्रैर्मार्जनंकुर्यात् । ततोभोजयित्वाब्राह्मणान्पूतोभवतिअन्यथापरेतोयातनामश्नुतइतिलिंगपूजनंसर्वथा
कार्यम् ॥ इतिशिवलिंगपक्षः ॥ ९१ ॥ ॥ ॥ ॥ ॥

॥ अथविभूतिधारणपक्षः ॥ ॥ वयंतद्विभूतिधारणंसदाहृदाधीमहि । तत्किंयत्रत्रयाणामायुष्कामभूतिकाममोक्षकामानांसर्गोऽमृषासत्यः
आयुष्कामोथवाराजन्भूतिकामोथवानरः ॥ नित्यंवैधारयेद्भस्ममोक्षकामीचवैद्विज । इतिभारतोक्तेः । यद्वात्रयाणांब्रह्मविष्णुरुद्राणांस
र्गोयत्राऽमृषादृष्टांतस्तूक्तप्रायः। विष्णुधर्मेनारदः भस्मवैपरमंपुण्यंब्रह्मविष्णुशिवात्मकम् ॥ येनदृष्टेनपापानिनाशमायांतिसर्वथेति । यतोवि
भूतेरन्वयात्सेवनादर्थेष्वाद्यस्यधर्मस्येतरतइतरेषामर्थादीनांजन्म । तदुक्तंधर्मार्थकाममोक्षाणामुत्पत्तिर्भस्मधारणादितिलैंगे । यतः पुमा
न्स्वराट्शिवोभवति । तदुक्तंसाक्षाच्छिवःसविज्ञेयोयोबिभर्त्तिसदाभसमितिस्कांदोक्तेः । अभिज्ञोजाबालिर्यद्यस्यब्रह्ममहत्त्वंतेने । किंकर्तु
मादिकविंश्रीशंकरमाप्तुं । तदुक्तंजाबाले येभस्मधारणंत्यक्त्वाकर्मकुर्वंतिमानवाः ॥ तेषांनास्तिविनिर्मोक्षःसंसाराज्जन्मकोटिभिः ॥ म
हापातकयुक्तानांपूर्वजन्मसुसर्वतः ॥ इति । शिवहरस्ये । संध्याशिवार्चनादीनिकर्माण्येतानिवस्तुतः ॥ वैदिकानिततस्तेषुकर्तव्यंभस्म
धारणमिति। येअस्मिन्मुह्यंतितेसूरयोनविद्वांसःकिंतुमूर्खाएव । शास्त्रतात्पर्यानभिज्ञाइतियावत् । जन्मांतरीयदुष्कृतवशात्तेविभूतिंनि
न्दन्तीतिभावः । तदुक्तंमहापापवतांनृणांवेदासिद्धेमहेश्वराः ॥ त्रिपुंड्रोद्धूलनादौचप्रद्वेषोहिप्रजायते ॥ इतिपराशरीये । विप्राणांदाक्षिणा
त्यानांप्रायोपहतचेतसाम् ॥ शिवेभस्मनिरुद्राक्षेकिंचिच्छ्रद्धानविद्यते । इत्यादित्यपुराणेपि । सूतसंहितायामपि श्रुतौचैवमहादेवेत्रिपुं

ड्रभस्मगुंठने ॥ श्रद्धांनकुरुतेमर्त्यःपुण्यलेशविवर्जितः ॥ किंभूतंतत्स्वेननिजेनाधारणेनधाम्नाप्रभावेणनिरस्तःकुहकःपापलक्षणोयेन
तत्तथा। सर्वेषांचैवपापानांप्रायश्चित्तमिदंस्मृतम् ॥ भस्मनोधारणंयच्चस्मरणंशंकरस्ययदितिब्रह्मोत्तराद्युक्तेः पुनः सत्यंशिवार्चनसत्यतापाद
कं । तद्विनातस्यनिरर्थकत्वात् । तदुक्तंसनत्कुमारसंहितायां यथैवचांडालोच्छिष्टंश्राद्धार्थेनोपयुज्यते ॥ पूतिपर्युषितंयच्चनिर्भस्मैवशिवा
र्चनम् ॥ दायादहीनोनपुनर्मृतःपिंडमवास्यति ॥ तथाभस्मविहीनोपिशिवार्चनफलंनरःइति। पुनःपरमत्युत्कृष्टमन्वर्थपञ्चनामवत्त्वात्तदुक्तं
तत्रैव॥ विभूतिर्भसितंभस्मक्षाररक्षेतिभस्मनः ॥ भवंतिपंचनामानिपंचभिर्हेतुभिर्भृशम् ॥ ऐश्वर्यकारणाद्भूतिर्भस्मसर्वाघभक्षणात् ॥ भास
नाद्भसितंप्रोक्तंक्षारणात्क्षारमापदाम् ॥ रक्षारक्षोगणेभ्यश्चरक्षणात्परिकीर्तितम् ॥ तत्पुनर्द्विविधंप्रोक्तंमुख्यंगौणंतथैवच ॥ मुख्यंप्रोक्तं
परंब्रह्मगौणमाग्नेयमुच्यते ॥ गौणंनानाविधंब्रह्मन्विद्धिवेदविदांवर ॥ अग्निहोत्राग्निजंतद्वाद्विरजाहोमजंमुने ॥ औपासनसमुद्भूतंसमिदग्निस
मुद्भवम् ॥ पचनाग्निसमुद्भूतंदावानलसमुद्भवम् ॥ स्कांदे ब्रह्मक्षत्रियवैश्यैश्चह्यग्निहोत्रसमुद्भवम् ॥ शूद्राणांश्रोत्रियागारपचनाग्निसमुद्भव
म् ॥ अन्येषांमानवानांतुस्मृतंदावानलोद्भवम् ॥ समिदग्निसमुद्भूतंधार्यंवैब्रह्मचारिभिः ॥ अग्निहोत्रसमुद्भूतंगृहस्थैर्वनवासिभिः ॥ श्रौता
ग्निरहितायेचतेषामौपासनोद्भवम् ॥ पुलस्त्यः अग्निरित्यादिभिर्मंत्रैःशुद्धंभस्माभिमंत्रितम् ॥ शिवमंत्रेणवाधार्यंमंत्रेणाष्टाक्षरेणवा ॥
गायत्र्यावापिदेवर्षेमंत्रेणप्रणवेनवा ॥ करोतिशिवमंत्रेणललाटेयस्त्रिपुंड्रकम् ॥ विष्णोःपदमवाप्नोतिनान्यथाश्रुतिनोदितम् ॥ सौरंपदम
वाप्नोतिगायत्र्यामुनिसत्तम ॥ प्राप्नोतिब्रह्मणोरूपंप्रणवेननसंशयः ॥ लैंगेतुत्र्यैयायुषेणमंत्रेणत्रिपुंड्रंब्रह्मचारिणा ॥ अग्निरित्यादिभिर्मंत्रैःप
श्चब्रह्ममयैस्तथा ॥ त्रैयंबकेनमंत्रेणतारेणचतथैवच ॥ पञ्चाक्षरेणमंत्रेणप्रणवेनान्वितेनच । त्रिपुंड्रंधारयेन्नित्यंगृहस्थश्चवनाश्रमी ॥ प्रण
वेनैवसंधार्य्यंसंन्यासाश्रमवर्तिभिः ॥ नमोंतेनशिवेनैवधार्यंस्त्रीभिश्चपादजैः ॥ अन्येषामपिसर्वेषांविनामंत्रेणसुव्रत ॥ भस्मनोद्धारणंप्रो
क्तंनित्यंशैवागमेषुच ॥ केदारखंडे । उद्धूलनंत्रिपुंड्रंचनित्यंधार्यंप्रयत्नत इत्युक्तेरुद्धूलनमाहजाबाले । आदरेणसमादायभस्मपात्रेनिधायच॥
प्रक्षाल्यपादौहस्तौचद्विराचम्यसमाहितः ॥ गृहीत्वाभस्मनोमुष्टिंसद्योजातादिभिर्गृही ॥ प्राणायामत्रयंकृत्वाध्यात्वाचैवसदाशिवम् ॥ अ

भ्रिरित्यादिभिर्मंत्रैस्त्रिवारमभिमंत्र्यतत् ॥ ईशानेनपंचधाभस्माविकिरेन्मूर्ध्नियत्नतः ॥ मुखेत्रिस्तत्पुरुषेणाथाघोरेणाष्टधाहृदि ॥ वामेनगुह्य
देशेतुत्रिदशस्थानभेदतः ॥ अष्टधासद्योमंत्रेणपादावुद्धूल्ययत्नतइतिस्मृतिसंग्रहे । धार्यंभस्मत्रिसंध्यंतुगृहिणाजलसंयुतम् ॥ सर्वकालंभवे
त्स्त्रीणांयतीनांजलवर्जितम् ॥ वनस्थयतिकन्यानांदीक्षाहीननृणांतथा ॥ मध्याह्नात्प्राक्जलैर्युक्तंपरतोजलवर्जितमिति । किंबहुनात्रवक्त
व्यंबह्वस्तितेनोपरम्यते । किंचशैवैरेवशिवार्चनसाफल्यायभस्मधार्यंतत्रापिदीक्षितैरितिसिद्धांतितं । नागोजीभट्टेनसप्तशतीव्याख्याने
होमांतेतुवैदिकैर्धार्यमेव । तदुक्तंप्रयोगपारिजाते । स्नात्वापुंड्रंमृदाकुर्याद्धुत्वाचैवतुभस्मना ॥ देवानभ्यर्च्यगंधेनजलमध्येजलेनच ॥ ऊर्ध्व
पुंड्रंमृदाकुर्याद्भस्मनातुत्रिपुंड्रकम् ॥ चंदनेनोभयंकुर्यात्तोयेनाप्यूर्ध्वपुंड्रकमिति । वस्तुतस्तुशिवागमदीक्षितैरेवभस्मत्रिपुंड्रंधार्यमित्यलम
इतिविभूतिधारणपक्षः ॥ ९२ ॥ ॥ ॥ ॥ ॥ ॥ ॥
॥ अथबिल्ववृक्षपक्षः ॥ ॥ वयंतंश्रीवृक्षंसदाहृदाधीमहि श्रीवृक्षस्त्वादित्यत्पुराणउक्तः । गोमयादुत्थितःश्रीमान्बिल्ववृक्षःशिवप्रियः ॥
तत्रास्तेपद्महस्ताश्रीः श्रीवृक्षस्तेनचोच्यते॥ तंकंयत्रसोऽर्तेतेशिवायार्पितेवेतिशेषःत्रयाणांधर्मार्थकामानांसर्गःइतरतइतरस्यमोक्षस्यसर्गो
मृषासत्यः । दृष्टांतःपूर्ववत् । धर्मार्थकामसिद्ध्यर्थंश्रीवृक्षंसेवयेत्सदा ॥ मोक्षार्थ्यपिनरोधीमाँल्लक्ष्मीवृक्षंसदाश्रयेदितिशैवे । इहसमासांत
र्गतःसर्गशब्दइतरतइत्यनेनसंबध्यते।भीष्मद्रोणप्रमुखतःसर्वेषांचमहीक्षितामित्यत्रयथाप्रमुखतइतिपदंसमासांतर्गतमपिमहीक्षितामित्यने
नसंबध्यतेतद्वदत्रापि । वक्ष्यत्यपितत्कथ्यतांमहाभागयदिकृष्णकथाश्रयम् ॥ अथवास्यपदांभोजमकरंदलिहांसतामिहयथाश्रयमितिपदं
समासेकृष्णपदसंबद्धमपिसतामितिपदेनसंबध्यतेतथेहापीतिविप्रकीर्णजटाछन्नंरौरवेणाजिनेनचेतिवद्वायतोयस्यबिल्वस्यान्वयात्संबंधा
त्स्वराट्दरिद्रोदुरुद्रुहव्याधोमृगसंगतोऽर्थेष्वाद्यस्यनधर्मोस्तिदयासमइत्युक्तेर्दयारूपधर्मस्यजन्मोत्पत्तिमाये । अयगतावतोलिट्आर्ष
त्वान्नाम् । यद्वाद्यस्यश्रीरामचंद्रस्यजन्मसंगतिभाये । एतच्चाशिवपुराणेशिवरात्रिमाहात्म्येविस्तृतमस्ति । वाक्यानितत्रत्यानिविस्तर
भियेहनोक्तानि । तेनशिवरात्रिदिनेनकिंचिदाहाराद्यात्तवतारात्रौबिल्वमारुह्यसरस्तटेमृगादिवधार्थंस्थितंतत्रसमागतमृगवधार्थंबाणसं



धानावसरेबिल्वपत्राणित्रुटित्वाशिवोपरिसजलानिपतितानितैश्चमृगमृग्यादिभिस्तस्मैधर्मोद्घाटनपूर्वकंशपथंकृत्वागतंपुनरागतांस्तान्
दृष्ट्वासदयायुतोभूत्ततआविर्भूयशिवस्तंतवगृहेरामआगमिष्यतितत्संगतस्तेमुक्तिर्भविष्यतीत्युक्त्वांतर्दधेइतितत्रत्यवाक्यकदंबतात्पर्यम् ।
अभिज्ञःसूतःयतोयस्यचब्रह्ममहत्त्वमादिवेदबोधितंकवयेशौनकायतेने । स्कंदलिंगशिवपुराणेषुतद्द्रष्टव्यं । यद्वाऽभिज्ञःश्रीशंकरएववाय
तोबिल्वस्यमहत्त्वमादिकवयेनारदायसौरपुराणेतेने । एकंबिल्वदलंरम्यंमद्भक्तेनार्पितंमयि ॥ अनंताघहरंनूनंसत्यमेवोच्यतेमया ॥ दर्शना
द्बिल्ववृक्षस्यस्पर्शनाद्वंदनादपि ॥ अहोरात्रकृतंपापंनश्यतेनात्रसंशयइति । यस्मिन्बिल्वेशंकरेवासूरयोपिशास्त्राभिज्ञाअपिवृथाहठान्मुह्यं
तिनिन्दांकुर्वंति।नाद्याद्बिल्वंतथास्थाणुमर्चयेन्नकदाचनेत्यादिकल्पितवाक्यैः । किंभूतंस्वेनधाम्नाश्रयेणश्रीलक्ष्मीकररूपेणनिरस्तं कुह
कंदारिद्र्यलक्षणंयेनतं । बिल्वोलक्ष्म्याःकरेभवदितिवामनपुराणात् । आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्य
फलानितपसानुदंतुमायांतरायाश्चबाह्याअलक्ष्मीरितिश्रुतेश्च । सत्यंहरार्चनसत्यत्वकरंतद्विनातस्यवृथात्वात् । तत्सत्यंपूजनंशंभोर्बि
ल्वपत्रैस्तुयत्कृतम् ॥ तद्वृथापूजनंविद्धिबिल्वहीनंतुयत्कृतमितिशैवे । पुनःपरंसर्वपत्रपुष्पादिभ्योहरस्यातिप्रियत्वान्मोक्षहेतुत्वाच्च ।
अमृतोद्भवंश्रीवृक्षंशंकरस्यसदाप्रियमितिमंत्रलिंगात् ॥ शिवरहस्ये शिवलिंगंबिल्वपत्रैःकोमलैरमलैरपि । योनरःपूजयेन्नित्यंसधन्यःपु
रुषर्षभः ॥ द्वित्राण्यतीवरम्याणिबिल्वपत्राणिसादरम् ॥ येनार्पितानिमेलिंगेतेनमुक्तिरवाप्यते ॥ अभिषिच्यविधानेनयोमांबिल्वदलैर्मु
दा ॥ पूजयिष्यतिपुण्यात्मासमोक्षमाधिगच्छति ॥ बिल्वपत्रैरखंडैस्तुसकृत्पूजयतेशिवम् ॥ सर्वपापविनिर्मुक्तोरुद्रलोकेमहीयते ॥ ब्रह्मांडे
नित्यमार्द्रैरनाविद्धैर्बिल्वपत्रैःसदाशिवम् ॥ पूजयस्वमहादेवंतस्मान्माप्रमदोभवेति । पंचाक्षरेणमंत्रेणबिल्वपत्रैः शिवार्चनम् । करोतिश्र
द्धयायस्तुसगच्छेदैश्वरंपदम् ॥ शिवरहस्येतुशुष्कैःपर्युषितैःपत्रैरपिबिल्वस्यनारद ॥ पूजयेद्गिरिजानाथमलाभेयत्नतोनरः ॥ नारदीये
सर्वेभ्यश्चैवपत्रेभ्योबिल्वपत्रंविशिष्यते॥ दिनेदिनेतुदातव्यंशोधयित्वापुनःपुनः ॥ सप्तरात्रमतिक्रम्यनिर्माल्यत्वंप्रपद्यते॥पाद्मे चूर्णीकृता
न्यपिप्राज्ञोबिल्वपत्राणिवैदिकाः ॥ संपाद्यपूजयंत्वीशंनवालाभेविचक्षणाः ॥ स्कांदेतु अर्पितान्यपिबिल्वानिप्रक्षाल्यचपुनःपुनः ॥ शंकरा

यार्पणीयानिननवानियदिक्कचित् ॥ खंडितंबिल्वपत्रंचयाद्दशंताद्दशंशिवे ॥ प्रत्यहंनियमेनेतिप्राहुर्जाबालवादिनः ॥ अच्छिद्रैश्चनवैः
शुद्धैःसंवृतैः पुरतोन्वितैः ॥ वामपत्रेस्थितोब्रह्मापद्मनाभश्चदक्षिणे॥मध्यपत्रेस्थितोरुद्रः सांबःसंसारमोचकः ॥ पृष्ठभागेस्थितायक्षाह्यभ
क्तानांनिषेधकाः ॥ इंद्रादयोलोकपालावृंताग्रेपरिकीर्तिताः । इति । लिंगेतुअमारिक्तासुचाष्टम्यांसंक्रान्ताविंदुवासरे ॥बिल्वपत्रंनछिंद्याद्वै
छिंद्याच्चेन्नरकंव्रजेदिति । बिल्वपत्रंसमाघ्रायपथिगच्छतियोनरः ॥ तस्यसहायोविश्वेशः सस्कन्दोमागणेश्वरः ॥ इतिसनत्कुमारसंहि
तायाम् । बिल्वकाष्ठसमुद्भूतंचंदनंयः समर्पयेत् ॥ शिवायदेवदेवायगाणपत्यपदंलभेदिति ॥ विष्णुरहस्येतु । सकृदभ्यर्च्यगोविन्दंबिल्वप
त्रेणमानवः ॥ मुक्तिभागीनिरातंकःकृष्णस्यानुचरोभवेत् ॥ बिल्वमूलेस्थितोब्रह्माबिल्वमध्येहरःस्थितः ॥ बिल्वपत्रेस्थितोविष्णुः कंट
केषुगणेश्वरः ॥ त्वचायांदेवताः सर्वाःपुष्पेषुहरिवल्लभोति । स्कांदे । बकपुष्पंबिल्वपत्रंकुशपुष्पंकुशेशयम् ॥ वर्णपुष्पंकुसुंभंचतथाकुंकु
मकेशरम् ॥ लवंगंदमुनंचैवनलकोशोद्भवंतथा ॥ सौवर्णराजतंपुष्पंनैवपर्युषितंभवेत् ॥ तथैवामर्दकीपत्रंतुलसीपत्रमेवच ॥नैवपर्युषितंभू
यादपिवर्षांतरेगते ॥ वर्ज्यंपर्युषितंतोयंपत्राणिकुसुमानिच॥ तुलस्यगस्तिबिल्वानिगंगावारिनदुष्यति॥ तुलस्यांबिल्वपत्रेचजलजेषुचस
र्वशः॥नपर्युषितदोषोस्तिमालाकारगृहेतथेति। बिल्वापामार्गजातीतुलसिशमिशताकेतकीभृंगदूर्वामन्दारांभोजदर्भामुनितगरतिलब्रह्मक
ल्हारमल्ली॥ चंपाश्वारातिकुंभादमनमरुचकाबिल्वतोह्यानित्रिंशत्रिंशत्र्येकार्यरीशोदधिनिधिवसुभूभूयमाभूयएवम् । अस्यार्थः बिल्वः त्रिं
शत् ३०अपामार्गः३०जाती ३ तुलसी १ शमी ६ शतावरी ११ केतकी ७ दूर्वा८मंदारः १ अंभोजं १ दर्भ १ अगस्तिः ३० तगर ३०ति
ल ३ पलाश १ कल्हार ६ मल्ली ११ चंपा ७ अश्वा८अरातिः८ कुंभ ११ दमनक २ मरुबक २ इतिक्रमेणयोज्यमत्रवक्तव्यमन्यदप्यस्ति
मणिमुक्ताप्रवालैस्तुरत्नैरप्यर्चनंकृतम् ॥ नगृह्णातिविनादेवोबिल्वपत्रैर्वरानने ॥ इतिलिंगे । किंबहुना ॥ इतिबिल्वदलपक्षः ॥ ९३ ॥
॥ अथस्वयंपाकपक्षः ॥ ॥ आचारःपरमोधर्मोनृणांश्रेयस्करोमहान् ॥ इहलोकेपराकीर्तिःपरत्रपरमंसुखमितिस्मृतेः । आचाराल्लभ
तेह्यायुराचारादीप्सितप्रजाः ॥ आचारादन्नमक्षय्यमाचारोहंत्यलक्षणमितिस्मृतेश्च । आचारहीनंनपुनंतिवेदायद्यप्यधीताःसहषड्भिरं
गैः ॥ छंदांस्येनंमृत्युकालेत्यजंतिनीडंशकुंताइवजातपक्षाः ॥ इतियाज्ञवल्क्याच्च । हरिभक्तिरतोपिस्याद्धरिध्यानरतोपिवा ॥ भ्रष्टोयः
स्वयमाचारात्पतितःसोभिधीयते ॥ इतिनारदीयाच्च । आचारात्प्राप्यतेश्रैष्ठ्यमाचारात्कर्मलभ्यते ॥ कर्मणाजायतेज्ञानंज्ञानान्मोक्ष
मवाप्यते ॥ यस्त्वाचारविहीनोहिविद्वान्वेदपरायणः ॥ सर्वधर्माद्बहिःकार्योयथाशूद्रस्तथैवसः ॥ इतिस्मृत्यंतराच्च। बृहत्पाराशरीयेपि
आचारहीननरदेहगताश्चवेदाःशोचंतिकिंतुकृतवंतइतिस्मचित्ते ॥ यन्नोभवद्वपुषिपुण्यशुभप्रहीणेस्थानंतदत्रभगवान्विधिरेवशोच्यः ॥इ
ति । कर्तव्यंयत्नतःशौचंशौचमूलाद्विजाःस्मृताः ॥ शौचाचारविहीनानांसर्वाःस्युर्निःफलाःक्रियाः ॥ इतिच । आचारेषुचसर्वेषुस्वयंपाकः
परोमतः ॥ सर्वेषामेषधर्माणांकारणंविदुषांमते ॥ इतिस्मृतेर्वयंतंस्वयंपाकंसदाहृदाधीमहि । तंकंयत्रत्रयाणांशुद्धिमनःस्वास्थ्ययशसां
सर्गोमृषासत्यः । दृष्टांतस्तूक्तप्रायः । मनःस्वास्थ्यंयशःशुद्धिश्चैतज्जायेतसर्वथा ॥ स्वयंपाकप्रवृत्तानांनिजधर्मवतांनृणामित्याचारार्के ।
यतःस्वयंपाकस्यान्वयात्सेवनात्स्वराड्द्विजोत्तमः अर्थेष्वाद्यस्यधर्मस्यइतरतइतरेषामर्थकाममोक्षाणांजन्मप्राकव्यंलभतइतिविशेषःअभि
ज्ञश्चभवति । धर्मोर्थश्चतथाकामोज्ञानंमोक्षस्तथैवच ॥ स्वयंपाकंकृतवतःसंत्येतेब्राह्मणस्यहीतिस्मृतिप्रदीपादौ । यःस्वयंपाकःब्रह्मब्रा
ह्मणत्वंतेने । ब्रह्मेत्युपलक्षणं । तदुक्तं ब्राह्मंतेजस्तथामंत्राःआयुःशौचंतथासुखम् ॥ स्वयंपाकेनवर्द्धंतेनश्यंतिपरपाकतः ॥ इतिकौ
शिकसंहितायाम् । किंकर्तुमादिकवयेसनातनकविंहरिंप्राप्तुं । प्राप्तिःसुखेनजायेतस्वयंपाकार्पणाद्धरेरितिविष्णुरहस्ये । यस्मिन्स्वयं
पाकेसूरयोविशेषतःकृतशास्त्राभ्यासाअपिमुह्यंतितन्नकुर्वंतीत्यर्थः । किंचित्सांकर्य्यवशादितिरहस्यमत्र । तदुक्तं वीर्यशुद्धःप्रवर्त्तेतपाक
शुद्धौनचेतरः ॥ इतिनिर्णयसुधाकरोक्तेः । किंभूतंस्वयंपाकंस्वेनधाम्नानिरस्तंकुहकमप्रायत्यलक्षणंनिजसेविनायेनतं । स्वयंपाकाशि
नोविप्राविप्रस्यास्तिनपातकमितिसंहितोक्तेः । पुनःपरंसत्यमतीवपावित्र्यापादकं । यतस्ततःप्रतिग्राहीस्वपाकनिरतोद्विजः ॥ प्राय
श्चित्तमकुर्वाणस्तथापिपरमःशुचिरितिस्मृतिदीपकोक्तेः । स्वाध्यायहोमसंयुक्तःपरपाकविवर्जितः ॥ रत्नपूर्णामपिमहींप्रतिगृह्यनलिप्य
ते ॥ इतिगरुडोक्तेश्चयद्वासत्यरूपब्रह्मप्रापकत्वात्सत्यं । तच्चशांतिपर्वटीकायांनीलकंठेनश्रुत्योक्तंआहारशुद्धौसत्वशुद्धिःसत्वशुद्धौध्रुवास्मृ

तिःस्मृतिलम्भेसर्वग्रंथीनांविप्रमोक्षइतिश्रुतेराहारशुद्ध्यादिक्रमेणब्रह्मप्राप्तिरितिश्रुत्यर्थः । अथप्रसंगात्स्वयंपाकप्रकारमाह । परपाकरतो
विप्रःस्वयंपाकीतुयोयातिः ॥ ताउभौनरकंयातोयावदाभूतसंप्लवम् ॥ अतोविप्रैःस्वयंपाकःपक्तव्योविधिपूर्वकम् ॥ एकांतेतिशुचौदेशेका
र्योमहानसस्ततः । श्वशूद्रकाकपतितानपश्येयुर्यथाचतम् ॥ पाकंचपाचकंचैवमावृत्तिंतत्रकारयेत् ॥ म्लेच्छग्रामगृहेग्राह्यागोशालापा
ककर्मणि ॥ यतस्ततोविधातव्यःपाकोविपादिसत्तमैः ॥ गोमयगौरमृत्साद्यैर्लेपनंमण्डलाकृतिम् ॥ कृत्वातत्रन्यसेत्सर्वपाकोपकरणंपु
रः ॥ मर्यादांभस्ममृत्काष्ठतृणरेखांबुभिःस्फुटाम् ॥ द्वाःस्तंभाभ्यांचकुर्वीततत्रान्योनविशेत्पुनः ॥ गत्वामहानसंविप्रःशुचिर्भूत्वासमाहि
तः ॥ पाककर्मप्रकुर्वीतविमृश्यचशनैःशनैः ॥ पाककर्मप्रवृत्तोयोबहिरायातितद्गृहात् ॥ पुनस्तथैवप्रविशेत्सपाकोऽशुचितामियात् ॥ अ
तःपादादिप्रक्षाल्यपाकशालांपुनर्विशेत् ॥ अंतस्थोनप्रगृह्णीतबहिष्ठाद्वस्तुकिंचन ॥ बहिष्ठोपिततोनैवगृह्णीयात्किंचिदेवहि ॥ पाकस्था
नाद्बहिर्यातंशुचिपात्रमथोपुनः ॥ संशोध्यदूरतस्त्याज्यंपाकस्थानेद्विजातिभिः ॥ पाकावशिष्टमखिलंनगृह्णीतकदाचन ॥ पाकशालाग
तंकाष्ठंत्ववशिष्टंनदुष्यति ॥ उच्छिष्टस्पर्शरहितंघृतंसन्ताप्यफाणयेत् ॥ गोधूमचूर्णंसंशोध्यतोलयित्वाददीतवै ॥ मरिचाद्यौषधीजातं
वायुनाशोधितंशुचि ॥ उच्छिष्टस्पर्शरहितंलवणंनैवदुष्याति ॥ अथस्वयंपाकस्वरूपमाह । स्वयंहिपाकःपचनीयएवदारैःस्वाशिष्यैरथ
वास्वपुत्रैः ॥ स्वगोत्रजैर्वास्वसमानजातैःकृतोहिपाकःस्वयमेवपाकः ॥ १ ॥ अस्यार्थः । पाकःस्वयमेवकार्यइतिमुख्यःपक्षःदारैरपिसमा
नजातीयैरेवस्वाशिष्यैरपितथाविधैःस्वपुत्रैरपितादृशैरेवनतुदासिजाद्यैरपि तदभावेस्वगोत्रजैस्तदभावेसमानजातीयैरपिकृतःपाकोग्राह्यो
नत्वसमानजातिकृतमण्डकौदनादिरूपःपाकोविप्रैर्ग्राह्यस्तेन घृतपक्वंपयःपक्वंपक्वंकेवलवह्निना ॥ तदन्नंफलवद्ग्राह्यंनदोषोमनुरब्रवीदितिवृ
द्धमनुनोक्तंतुशूद्रेतरद्विजातिकृतंपक्वंग्राह्यमेव । शूद्रस्यापितरःशूद्रादेवाश्चैवतदर्चिताः ॥ तेतत्पाकंनगृह्णंतिह्युत्कृष्टानांतुकाकथा ॥ तदु
क्तं शूद्रहस्तकृतंपाकंनाश्नंतिपितृदेवताः ॥ यतस्तंश्रुतयःप्राहुःश्मशानंपादसंयुतम् ॥ श्मशानवद्वर्जनीयःशूद्रःपाकादिकर्माणि ॥ शूद्र

१ विस्तृतः ।



स्यापीहपितरस्तत्पाकंनैवगृह्णते ॥ आमंशूद्रस्यशूद्रान्नंपक्वमुच्छिष्टमुच्यते ॥ आमश्राद्धंसदाशूद्रैःकार्यंपाकेननक्वचिदितिपराशरोक्तेः ।
यत्तुगोरसंचैवसक्तुंचतैलंपिण्याकमेवच ॥ अपूपान्भक्षयेच्छूद्राद्यदन्यत्पयसाकृतमितिसुमंतुनोक्तंतच्छूद्रकृतपरिवेषणमाह । नतुशूद्रकृत
पाकंशूद्रादितिपञ्चमीविधेःघृतपक्वमपिपाकानंतरंजलादिस्पर्शहीनमेवग्राह्यंनतुतत्स्पृष्टंमाषवटकादिरूपमपि संशुद्धंघृतपक्वंतद्यत्तोयंनस्पृ
शेत्पुनरितिसंहितोक्तेः । किंचविप्रजातिकृतःपाकःस्यादाद्यःसर्वजातिभिः ॥ अन्यजातिकृतःपाकोविप्रैर्नाद्यःकदाचनेतिस्मृतेः । आद्यो
भक्ष्यः । विप्रादीनामन्यपाकाशनेप्रायश्चित्तमप्युक्तंसंहितायां ॥ विप्रःकुर्यादहोरात्रव्रतंक्षत्रियपाकभुक् ॥ गायत्र्यास्त्रिशतंजाप्यंवैश्यपाका
शनेकृते ॥ त्र्युपवासपरोभूत्वागायत्र्यष्टसहस्रकम् ॥ शूद्रपाकाशनेविप्रोब्रह्मकूर्चेनशुध्याते ॥ प्रामादिकेनिष्कृतिश्चप्रोक्ताद्विप्राविजान
तः ॥ क्षत्रियोवैश्यपाकाशीत्यहोरात्रव्रतंचरेद ॥ शूद्रपाकेब्राह्मणवन्निष्कृतिसमुपाचरेत् ॥ वैश्यःशूद्रकृतंपाकमत्त्वाचांद्रव्रतंचरेत् ॥ लिं
गिपाकाशनेवृत्तेगंगांस्नात्वाद्विजःशुचिरिति । किंचस्वयंहिपाकःपचनीयएवेत्यादिश्लोकेवाशब्दान्मातृपुत्र्यादयोपिग्राह्याः । तदुक्तंमा
तापुत्रीस्वसापितृष्वसामातृष्वसातथा ॥ मातामहीस्नुषाविप्राःपत्न्यभावेस्त्रियोमताः ॥ पाककर्मणिविप्रेंद्रतथैवचपितामही ॥ यथोक्त
शौचसंयुक्तानार्योग्राह्यानचान्यथेतिस्मृतिसमुच्चये । गोविंदार्णवेतु आश्रम्यनाश्रमीवास्यादपत्नीकोपिपुत्रवान् ॥ स्नुषादुहितृपक्वान्नंदं
द्यादद्याज्जुहोतिचेत्युक्तं । किंचयोविप्रपाकेदुष्टात्मामत्सरीदोषधारकः ॥ सचांडालैरपित्याज्योगृध्रमांससमःसदा ॥ जलाग्न्यन्नसमायोगः
सिद्धान्नमिहचोच्यते ॥ इक्षुपाकोपिसंग्राह्योअसमानकृतोद्विजैः ॥ केचित्तुआत्मनापच्यतेयश्चपत्न्यावायश्चपच्यते ॥ पच्यतेपुत्रशिष्याभ्यां
स्वयंपाकःसउच्यते ॥ इत्याहुस्तत्रपूर्वश्लोकोक्तस्वगोत्रजादयश्चात्रशब्देनग्राह्याइति । पाचकोपिशुभाकारःसदाचारोद्विजोत्तमः ॥ स्वजा
तितोनहीनोवाभक्तिमानभिलाषुकः ॥ नव्रात्यलिंगिनग्रावधूताशुचिकृतंद्विजः ॥ नैकवासःकृतंपाकंगृह्णीयात्पित्र्यदैविके ॥ अत्रव्रात्यागायत्री
पतिताअनुपनीताइतियावत् । लिंगिनोत्रराजमुद्रांकितादेवमुद्रांकिताभिक्षवःपाखण्डानुगाश्च । तदुक्तंनिर्णयदीपके जटाभस्मदेव
मुद्राराजमुद्राधृतोनराः ॥ नास्तिकानुगतायेचतेन्येपिलिंगिनोमताः ॥ इति । नग्नोवस्त्रहीनाद्यन्यतमोनरोनारीवा । नग्नपदार्थस्तुजाबा

लिनोक्तः नग्नःस्यान्मलवद्वासानग्नःकौपीनकेवलः ॥ द्विकच्छोनुत्तरीयश्चह्यकच्छोऽवस्त्रएवच ॥ नग्नःकाषायवासाःस्यान्नग्नश्चार्द्रपटस्त
था ॥ नग्नस्तुस्निग्धवस्त्रःस्यान्नग्नःस्यूतपटस्तथेति । अवधूतस्त्यक्तसर्वोभस्मादिधारीवाऽशुचिर्यथोक्तशौचहीनःएकवासाःकेवलधौतादि
रूपैकवस्त्रवान् । नस्वांगस्पृष्टवस्त्रेणपाकशोधनमाचरेत् ॥ पाकवस्त्रंपृथक्कार्यंमुधापाकोन्यथाभवेदिति । मुधापाकोदेवाद्यनर्हः । आयुरा
रोग्यमैश्वर्यंपाकशुद्ध्यासुसंततिः ॥ देवताःपितरश्चैवपाकशुद्धिमभीप्सवः ॥ गायत्र्याशोधयेत्पाकमभिमंत्र्यांबुनासुधीः ॥ वैश्वदेवंविधाया
दौदेवेभ्यस्ततआनयेत् ॥ प्रमादोद्भूतमाशौचमधोवातादिजंतथा ॥ गायत्रीप्रपुनात्येवपाचकस्यविशेषतः ॥ मुखंपिधायवस्त्रेणतद्वा
सोनपुनःस्पृशेत् ॥ स्पृष्टेपुनःकरौक्षाल्यशुद्धतोयेनसंविशेत् ॥ पाकशुद्धिर्महद्धर्मःपाकशुद्धिर्महत्तपः ॥ वीर्यशुद्धःप्रवर्त्तेतपाकशुद्धौद्विजोत्त
मः ॥ तैलपाकंदरिद्राणांनेतरेषांशुचिंविदुः ॥ शाकंप्रक्षाल्यगृह्णीयात्तथापत्रादिकंसुधीः ॥ यस्मिन्देशेयआचारःसोपिमान्यःश्रुतानुगः॥
यस्मिन्देशेचयेविप्रायेदेवायाचमृत्तिका ॥ यत्तोयंयच्चकाष्ठंवैतद्ग्राह्यंतच्चनान्यथा ॥ तडागोदकवद्ग्राह्योविप्रपाकोखिलैर्नरैः॥ अन्यपाकोनसं
ग्राह्यस्तत्तद्घटगतांबुवत् ॥ शुद्धमातापितृभ्यांयोजातोवीर्यशुचिर्भवेदिति । किंच देशग्रामयुगकुलजात्याचारंसमाचरेत् ॥ आम्नायानुगतं
विद्वान्नविरुद्धंकदाचनेतिस्मृतेः । किंचचुल्हद्यामधिष्ठितेपात्रेमण्डकौदनपाकयोः ॥ नमुखेनधमेदग्निंधमेच्चव्यजनादिना ॥ मुखेनधमना
त्पाकोऽशुचिःस्यात्सर्वकर्मसु ॥ मुखेनैवधमेदग्निंमुखादग्निरजायत ॥ इतिवाक्यंवैदिकाग्नौचरितार्थंनलौकिके । मण्डकौदनपात्रग्रहणमु
पलक्षणंपात्रांतराणां । व्यजनादिनेहादिनावस्त्रादिग्रहोनतुससुषिरवेणुदलादिग्रहःतस्यापिपरंपरयामुखधमनत्वेनातिगर्हितत्वमेव । वंशा
द्यंरंध्रसहितंधमनेत्वतिगर्हितम् ॥ सदोच्छिष्टंपाककार्यैदूरतोवर्जयेद्द्विजः ॥ इतिशिष्टपरिग्रहोक्तेः । विवाहेतीर्थयात्रायांदुर्भिक्षेदेशसंप्लवे॥
रोगेकारागृहेचैवमार्गेशौचंनचिंतयेत् ॥ वृंदावनमाहात्म्येपि नचोद्वाहेसमाचारोनशौचंनतपःक्रिया ॥ मण्डपाह्वयसूत्राधःसदाशुद्धिःश्रुते
र्वचः ॥ इति । किंच साजात्यपंक्तौभोक्तव्यंसर्वदाद्विजसत्तमैः ॥ योवैजात्यततौभुंक्तेसतत्साम्यमवाप्नुयात् ॥ परिवेषणकालेतुदूरतोन्नंप
रित्यजेत् ॥ स्पृष्टेन्नंसंपरित्यज्योच्छिष्टेस्नानंसमाचरेत् ॥ कन्यापाकंचाददीतसाजात्यानांनचान्यतः ॥ स्वोत्कृष्टजातेःपाकस्तुग्राह्याग्रा

ह्यानकन्यका ॥ उच्छिष्टेनघृतंदेयंघृतपात्रंविनाबुधैः॥पात्रेपात्रंनसंस्थाप्यभोक्तव्यंकर्हिचिद्द्विजैरिति । कार्पासंश्वेतमेवेहग्राह्यंवासोमहान
से ॥ रागयुक्तंत्वाविकादिकार्पासंनकदाचनेति । अत्रापिबहुवक्तव्यमस्तिग्रंथविस्तरभियोपरम्यते ॥ इतिस्वयंपाकपक्षः ॥९४॥
॥ अथनवग्रहपक्षः ॥ ॥ वयंतंनवग्रहसमूहंसदाहृदाधीमहि । तंकंयत्रत्रयाणांशुभाशुभमध्यमफलानांसर्गोमृषा ॥ दृष्टांतस्तूक्तवत् ।
तदुक्तं । शुभःशुमफलःप्रोक्तोऽशुभोऽशुभफलप्रदः ॥ मध्यमोमध्यफलदोविचार्यैवफलंवदेत् ॥ शौक्लश्चंद्रोबुधोजीवशुक्रौस्वाभाविकाःशु
भाः ॥ एतेदृष्टयुतःपापःशुभःस्यान्नैवसंशयः ॥ शनिभौमौराहुकेतूग्रहाएतेऽशुभामताः ॥ कृष्णचंद्रस्तथासूर्योमध्यमौपरिकीर्तितौ ॥
बलिनोहिशुभाःसर्वेनिर्बलास्त्वशुभामताः ॥ बलाबलेनरहितामध्यमाःस्युर्ग्रहाध्रुवम् ॥ उदितःस्वगृहस्थश्चमित्रगेहेस्थितोपिवा ॥ मित्र
वर्गेणदृष्टश्चस्ववर्गेपिग्रहोवली ॥ शत्रुगेहेशत्रुदृष्टोऽरिवर्गेऽशुभसंयुतः ॥ नीचोस्तोनिर्बलःखेटोमध्यमस्तूपवर्जितः ॥ इतिगणकमंडने ।
यद्वायत्रत्रयाणांशत्रुमित्रसमानांसर्गोऽमृषा।तदुक्तंशत्रूमंदासितौसमश्चशशिजोमित्राणिशेषारवेस्तीक्ष्णांशुर्हिमरश्मिजश्चसुहृदौशेषाःसमाः
शीतगोः ॥ जीवेंदूष्णकराःकुजस्यसुहृदोज्ञोरिःसितार्कीसमौमित्रेसूर्यसितौबुधस्यहिमगुःशत्रुःसमाश्चापरे ॥ सूरेःसौम्यसितावरीरविसु
तोमध्योपरेत्वन्यथासौम्यार्कीसुहृदौसमौकुजगुरूशुक्रस्यशेषावरी ॥ शुक्रज्ञौसुहृदौसमःसुरगुरुःसौरस्यचान्येरयः । इतिजातके ॥ यतो
नवग्रहस्यान्वयात्समूहादाद्यस्यप्राग्जन्मनइतरतइतरयोर्जन्मनोरर्थेषुशुभाशुभकर्मसुअभिज्ञोभवति ।इहजन्मोतिपदंलुप्तषष्ठीकंबोध्यं।यद्वा
ऽर्थवशाल्लिंगविभक्तिवचनानांविपरिणामइतिव्याड्यनुशासनात्परिणमय्यंषष्ठचंतमिति । समूहेप्यन्वयःस्मृतइतिधराणिः।एतदभिप्रायेणो
क्तंयदुपचितमन्यजन्मनिशुभाशुभंतस्यकर्मणःप्राप्तिं ॥ व्यञ्जयतिशास्त्रमेतत्तमसिद्रव्याणिदीपइवे ॥ इतिलघुजातके । सूर्याद्यैःखेचरैः
कर्मसूच्यतेपूर्वसंचितम् ॥ वर्तमानंतथाभावितन्वादिभावमागतैः ॥ शुभस्थानेषुतिष्ठंतिप्राचीनशुभकर्मणा ॥ ग्रहास्तएवपापेनकर्मणा
शुभसद्मगाः ॥ इतिगणकमंडने । योग्रहसमूहःस्वेननिजमहिम्नाराजतेनिजनिजमंडलइतिस्वराट् । यद्वास्वराट्सार्वभौमइवसुहृः पूज
नीयोन्यथाविनाशकरःस्यादिति । ग्रहागावोनरेंद्राश्चब्राह्मणाश्चविशेषतःपूजिताःप्रतिपूज्यंतेनिर्दहंत्यपमानिताः ॥ इतिस्मृतेः । योग्रह

समूहः आदीयतेक्षीयतेऽनेनेत्यादिदुःखं।दीङ्क्षयेइतः करणेकिः।कंसुखंकंजलंमतमितिकोशात् कंसुखंआदिचकंचादिकेदुःखसुखेतेवीयतेप्राप्यतेऽत्रेत्यादिकवयोदशासमयस्तस्मिंस्तथा॥ वीगतावतःस्वराद्इत्यधिकरणेऽप्रत्ययः।ब्रह्मानिजमहत्त्वंदशानुरूपंतेनेनृणामिति।तन्वंतिखेटानिजवैभवंनृणांदशाप्रपाकेसुखदुःखरूपमितिजातकदर्पणे । यत्रग्रहसमूहेसूरयोलोकरंजनार्थमधीतशास्त्रानास्तिकाःशुष्कवेदांतिनश्चमुह्यंति । किंकुर्वंतिग्रहानृणांनृभिर्दिष्टंहिभुज्यतइत्यादिवाक्यैः । संकरस्यचकर्त्तास्यांनकुर्यांकर्मचेदहमित्याद्युक्तेर्भगवतापिकृतरक्षंलोकसंग्रहंग्रहार्चनरूपंत्यजंतित्याजयंतिचेतिभावः । किंभूतंस्वेनधाम्नातेजसानिरस्तंकुहकंदेवाद्यनुपायिनांदुःखंयेनतं । तदुक्तंश्रीपतिना देवब्राह्मणवंदनाद्गुरुवचःसम्पादनात्प्रत्यहंसाधूनामभिभाषणाच्छ्रुतिवचःश्रेयस्कथाकर्णनात् ॥ होमादध्वरदर्शनाच्छुचिमतोभावाज्जपाद्दानतोनोकुर्वंतिकदाचिदेवपुरुषस्यैवंग्रहाःपीडनमिति । पुनःकिंभूतंसत्यंसत्यरूपवेदसर्वांगप्रधानभूतज्योतिःशास्त्रप्रतिपाद्यत्वात् । ननुज्योतिःशास्त्रस्यकथंप्राधान्यमितिचेच्छृणु । सिद्धांतसंहिताहोरारूपस्कंधत्रयात्मकम् ॥ वेदस्यानिर्मलंचक्षुर्ज्योतिःशास्त्रमकल्मषं । विनैतदखिलंश्रौतंस्मार्त्तंकर्मनसिध्यति ॥ तस्माज्जगद्धितायेदंब्रह्मणानिर्मितंपुरा ॥ अतएवद्विजैरेतदध्येतव्यंप्रयत्नतः ॥ अत्रैवकारस्यपाठक्रमेणयोजनेप्रयोजनंविनैवज्योतिःशास्त्राध्ययनस्यावश्यकत्वंप्रतीयते । द्विजैरेवेतिव्याख्यानाद्द्विजन्मव्यतिरिक्तैःशूद्रैर्नाध्येयमितिचप्रतीयते । व्याख्यानद्वयमपियुक्तमेव । ननुकथंश्रौतस्मार्त्तकर्मोपयोगिज्योतिषमितिचेत् । उच्यते । अष्टवर्षंब्राह्मणमुपनयीत वसंतेब्राह्मणोग्नीनादधीत दर्शपौर्णमासाभ्यांयजेतेत्यादिश्रुतयःसंति । तत्रवर्षादिज्ञानंवसंताद्यनुज्ञानंदर्शपौर्णमासयोर्ज्ञानंचज्योतिषंविनासर्वथाननिर्वहतीत्यवश्यमध्येतव्यंज्योतिःशास्त्रं । तदुक्तंवेदांगज्योतिषे वेदाहियज्ञार्थमितिप्रवृत्ताःकालानुपूर्वाविहिताश्चयज्ञाः ॥ तस्मादिदंकालविधानशास्त्रंयोज्यौतिषंवेदसवेदयज्ञान् । यथाशिखामयूराणांनागानांमणयोयथा ॥ तद्वद्वेदांगशास्त्राणांज्योतिषंमूर्द्धनिस्थितं ॥ तच्चसुपरीक्षितशिष्यायदेयं । तदुक्तंश्रुतौ । विद्याहवैब्राह्मणमाजगामगोपायमाशेवधिष्टेहमास्मि । असूयकायानृजवेयितायनमाब्रूयावीर्यवतीतथास्यामिति । अन्यच्चनैतद्देयंदुर्विनीतायजातुज्ञानंगुप्तंतद्धिसम्यक्फलाय । अस्थानेवैस्थाप्यमानैववाचांदेवीकोपात्तंदहेन्नोचिराय ॥

विनयावनतायदीयमानाप्रभवेत्कल्पलतेवसत्फलाय । उपकृत्यनुचिंतकानिशास्त्राण्युपकारस्यफलंहिसाधुरोति॥ शूद्रस्यतुमहान्दोषः ॥गर्गः स्नेहाल्लोभाच्चमोहाच्चयोविप्रोज्ञानतोपिवा ॥ शूद्राणामुपदेशंतुदद्यात्सनरकंव्रजेदिति ।जोतिःशास्त्राध्ययनेफलमाहमांडव्यः एवंविधस्यश्रुतिनेत्रशास्त्रस्वरूपभर्त्तुःखलदर्शनंवै ॥ निहंत्यशेषंकलुषंजनानांषडब्दजंधर्मसुखास्पदंस्यादिति। त्रिस्कंधपारंगमएवपूज्यःश्राद्धेसदाभूसुरवृंदमध्ये ॥ नक्षत्रसूचीखलुपापरूपोहेयःसदासर्वसुधर्मकृत्ये ॥ इतिवसिष्ठः । नासांवत्सरिकेदेशेवस्तव्यंभूतिमिच्छता ॥ चक्षुर्भूतोहियत्रैषपापंतत्रनविद्यते ॥ इतिवाराहः । ज्योतिश्चक्रेतुलोकस्यसर्वस्योक्तंशुभाशुभम् ॥ ज्योतिश्शास्त्रंतुयोवेदसयातिपरमांगतिमितिगर्गः । दिव्यंचक्षुर्ग्रहर्क्षाणांदर्शितंज्ञानमुत्तमम् ॥ विज्ञायार्कादिलोकेषुस्थानंप्राप्नोतिशाश्वतमितिसूर्यसिद्धांते ।नसांवत्सरपाठीचनरकेपरिपच्यते ॥ ब्रह्मलोकेप्रतिष्ठांचलभतेदैवचिंतकः ॥ इतिगर्गः । किश्चदशादिनकृतपापंहंतिसिद्धांतवेत्तात्रिदिनजनितपापंतंत्रविद्दृष्टएव ॥ करणभगणवेत्ताहंत्यहोरात्रदोषंजनयतिघनमंहस्तत्रनक्षत्रसूची ॥ इतिजीर्णैरभ्यधायि । नक्षत्रसूचीवाराहसंहितायामुक्तः । अविदित्वैवयःशास्त्रंदैवज्ञत्वंप्रपद्यते ॥ सपंक्तिदूषकःपापोज्ञेयोनक्षत्रसूचकः ॥ तिथ्युत्पत्तिंनजानंतिग्रहाणांनैवसाधनम् ॥ परवाक्येनवर्त्तंतेतेवैनक्षत्रसूचकाः ॥ गृहेषुगत्वालोकानामपृष्टायेवदंतिहि ॥ तिथिनक्षत्रयोगादीस्तेवैनक्षत्रसूचकाः ॥ नक्षत्रजीविनंपापंभिषजंशुल्कजीविनम् ॥ तादृक्पौराणिकादींश्चवाङ्मात्रेणापिनार्चयेत् ॥ नक्षत्रसूचकोद्दिष्टमुपवासंकरोतियः ॥ सव्रजत्यंधतामिस्रंसार्द्धमृक्षविडंबिनेति ॥ योविप्रोगणिताजीवीगणिताध्यापकश्चयः ॥ तयोस्त्वध्यापकःपूज्योद्वितीयःपंक्तिदूषकः ॥ किंचप्रायश्चित्तंचिकित्सांचज्यौतिषंमंत्रनिर्णयम्॥ विनाशास्त्रेणयोब्रूयात्तमाहुर्ब्रह्मघातकमित्यलंप्रसक्तानुप्रसक्तेन । पुनःकिंभूतंपरंउत्पत्त्यादिहेतुत्वादुत्कृष्टतरम् । तदुक्तंबृहत्पाराशर्यांग्रहाधीनमिदंसर्वमुत्पत्तिप्रलयात्मकम् ॥ जगत्यभावभावौचतस्मात्पूज्यतमाग्रहाः ७ सानुकूलैर्ग्रहैर्यानिकुर्यात्कर्माणिमानवः ॥ सफलानिभवंत्यस्यनिष्फलानिस्युरन्यथा ॥ इतिनवग्रहपक्षः ॥ ९९ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

॥ अथतिथिष्वेकादश्याएवमुख्यत्वेनतत्पक्षएवयोजनामाह ॥ वयंतमेकादशीतिथिंसदाहृदाधीमहि । तिथयोर्द्वयोरित्यमरात्तिथेःपुं

स्त्वम् । तंकंयत्रत्रयाणांकायिकवाचिकमानसानांपापानांसर्गोंमृषा । वाचायच्चकृतंपापंयत्पापंमनसाकृतम् । देहेनयत्कृतंपापंतत्सर्वं
नश्यतिध्रुवम् । एकादश्युपवासेनश्रद्धयाविहितेनवै ॥ नतत्पापंहिलोकेषुयन्नहंतिहरेर्दिनमितिब्रह्मसंहितोक्तेः । त्रिविधपापमाह । पर
द्रव्येष्वभिध्यानंमनसानिष्टचिंतनम् ॥ वितथाभिनिवेशश्चमानसंत्रिविधंस्मृतम् ॥ पारुष्यमनृतंचैवपैशुन्यंचापिसर्वशः ॥ असंबद्धप्रला
पश्चवाङ्मयंस्याच्चतुर्विधम् ॥ आदत्तानामुपादानंहिंसाचैवाविधानतः ॥ परदारोपसेवाचकायिकंत्रिविधंस्मृतमितितिथिनिर्णये । कथंयथा
तेजोवारिमृदांविनिमयोऽन्यथाप्रतीतिर्मृषेति । किंचयतोयस्यैकादशीतिथेराद्यस्याविष्णोः सकाशाज्जन्म । पुरादैत्यस्यनाशार्थंमुरुनाम्नो
हरेस्तनोः ॥ तिथिरेकादशीजातासर्वशक्तिसमन्वितेतिपुराणात् । यःएकादशीतिथिःस्वान्निजसेविनोजनान्राजयतिवैकुंठेइतिस्वराट् ॥
एकादशीव्रतकरानागारिक्तकेतनाः ॥ यांतिविष्णोःप्रियंलोकंवैकुंठंयोगिदुर्लभमितितन्माहात्म्योक्तेः । यस्तिथिरादिकवयेविष्णवेब्रह्मानि
जमहत्त्वंतेने । तदुक्तंहरिभक्तिचंद्रोदयेएकादशीप्रस्तावे । एकादशीह्यहंविष्णोसर्वशत्रुनिकृंतिनी ॥ हीयमानंप्रसन्नंचत्वांदृष्ट्वाभोजनार्द
न ॥ त्रिलोकीभयदोदैत्योमयायंनिहतोमुरुः ॥ क्रुद्धायांमयिदेवेशानैकशोदैत्यदानवाः । विलयंयांतिदुष्टास्तेदेवानांचभयंकराः ॥ नि
हतंदानवंचैकंदृष्ट्वातेद्भुतमत्रकिमिति । यस्मिन्नेकादशीव्रतेसूरयआपाततोविद्वांसोपिमुह्यंति । भृगुमायामोहिताअविद्धव्रतंत्यक्त्वाविद्धमे
वतत्कुर्वंति । तदुक्तंहरिभक्तिचंद्रोदयेपद्मपुराणीयंविष्णुवाक्यं । शुक्रेणमोहिताविप्रादैत्यानांविजयायवै ॥ कुर्वंतिदशमीविद्धंवासरंममपद्मजेति
किंश्चमार्कंडेयमुनेगच्छभूलोकंत्वंममाज्ञया ॥ दशमीवेधविषयेशुक्रमायांविनाशयेतिपुराणांतराच्च । किंभूतमेकादशीतिथिंस्वेनानिजेनधा
म्नानिरस्तःकुहकोऽतिदुष्टोमुरुदैत्योयद्वाकुहकःपापसमूहोयेनतम् । तच्चोक्तमेवात्रअभोज्यभोजनाज्जातमगम्यागमनाच्चयत् ॥ अ
याज्ययाजनाद्यच्चह्यभक्ष्याणांचभक्षणात् ॥ अस्पृश्यस्पर्शनाद्यच्चपरेषांनिंदयाचयत् ॥ आत्मनोवञ्चनाद्यच्चपरदारकृताच्चयत् ॥ विहि
ताकरणाद्यच्चपरविद्यापहारतः ॥ ज्ञानाज्ञानकृतंयच्चपातकंचोपपातकम् ॥ तत्सर्वंविलयंयातिह्येकादश्यामुपोषणादितिस्कांदाच्च । पु
नःसत्यंसत्यरूपविष्णोःशक्तित्वात् । शक्तिस्तेहंसदाविष्णोयतस्त्वत्तःसमुद्भवेतितद्वाक्यात् । सत्योधर्मोगुरुःसत्यःसत्योविष्णुस्तथाशिवः ॥

सत्योवेदस्तथागंगासत्यमेकादशीव्रतमितितत्रैवोक्तेः । पुनरितरतइतरतिथिषुपरमुत्कृष्टं । तदुक्तंहरिणा सर्वतिथिप्रधानात्वंभविष्यासिम
दाज्ञया ॥ सर्वपापक्षयकरीसर्वविघ्नविनाशिनी ॥ धर्मार्थकाममोक्षाणांदात्रीशत्रुनिषूदिनी ॥ सर्वसिद्धिकरीवित्तायुरारोग्यप्रदानृणामिति ।
अथप्रसंगागतमस्यानिर्णयमप्याहवाल्मीकीयमतेन । तत्रनित्यकाम्यत्वेनाद्विप्रकारंव्रतमस्याइति । गरुडेनित्यत्वं उपोष्यैकादशींनि
त्यंपक्षयोरुभयोरपि । अष्टवर्षाधिकोमर्त्योह्यपूर्णाशीतिवत्सरः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥ विधवायावनस्थस्ययतेश्चैकाद
शीद्वये ॥ उपवासोगृहस्थस्यशुक्लायामेवपुत्रिणः ॥ इति । विष्णुरहस्येपि द्वादशीनप्रमोक्तव्यायावदायुःसुबुद्धिभिरिति । अकरणेप्रत्यवा
यमाहसनत्कुमारः नकरोतिहियोमूढएकादश्यामुपोषणम् ॥ सनरोनरकंयातिरौरवंतमसावृतम् ॥ एकादश्यांमुनिश्रेष्ठयोभुंक्तेमूढचेतनः ॥
प्रतिग्रासंसवैभुंक्तेकिल्बिषंश्वादिविट्समम् ॥ नारदीये यानिकानिचपापानिब्रह्महत्यासमानिच ॥ अन्नमाश्रित्यतिष्ठंतिसंप्राप्तेहरिवास
रे ॥ स्कांदेतु वरंस्वमातृगमनंवरंगोमांसभक्षणम् ॥ वरंहत्यासुरापानंनैकादश्यांतुभोजनमितिनित्यत्वज्ञापकानिबहूनिवाक्यानि । अथ
काम्यत्वविधायकवाक्यानिविष्णुरहस्ये यदीच्छेद्विष्णुसायुज्यंशुभांसम्पदमात्मनः ॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपि ॥ कात्यायनः
ऐश्वर्यंसंततिंस्वर्गंमुक्तिंवान्यद्यदिच्छति ॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपीति । नह्येकस्यानित्यत्वंकाम्यत्वंचसंभवतीतिशंक्यं । क
र्तृभेदेनोभयस्यैवशक्यत्वात् । तथाचपूर्वामुपवसेत्कामीनिष्कामस्तूत्तरांसदेति । किंच इयमेकादशीसूतकादावपिनत्याज्या । तदाहविष्णुः
बहुकालिकसंकल्पोगृहीतश्चपुरायदि ॥ सूतकेमृतकेचैवव्रतंतन्नैवदुष्यति ॥ अनारब्धमपिकार्यंनित्यंविज्ञैरितिश्रुतम् ॥ कौर्मेतुदानार्चनेवि
नाकुर्याद्व्रतमात्रमशौचके ॥ इति । भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतमितिपैठीनसिः । स्कांदेतुपुत्रंवाविनयोपेतंभगिनींभ्रातरंतथा ॥ एषाम
भावेवान्यश्चब्राह्मणंवानियोजयेत् ॥ जपश्चतीर्थसेवाचतपोहोमादिकश्चयत् ॥ विप्रैःसंपादितंयस्यसंपन्नंतस्यतत्फलमिति । किंश्चआत्मपुत्रः
पुरोधाश्चभ्रातापत्नीसखापिता ॥ यात्रायांधर्मकार्येषुजायंतेप्रतिहस्तकाः ॥ एभिःकृतंमहादेविस्वयमेवकृतंभवेदिति । कन्यास्वीकरणादन्य
त्सर्वंविप्रेणकारयेदितिप्रयोगपारिजाते । किंबहुनासर्वथेयंनत्याज्या । तदुक्तंमार्कंडेयेन एकभक्तेननक्तेनतथावायाचितेनच ॥ उपवासे

नदानेननिर्द्वादशिकोभवेदिति । मध्याह्नांत्यदलेत्रिभागदिवसेस्यादेकभक्तंमुनेइति।स्कांदेएकभक्तलक्षणमुक्तं।किञ्चएकादशीयदायुक्तार
विभौमार्किसंक्रमैः ॥ तस्यास्तदाचोपवासंनकुर्यात्पुत्रवान्गृही ॥ इतिमाधवः।दशम्यैकादशीविद्धाद्वादशीचक्षयंगताः ॥ क्षीणासाद्वादशी
ज्ञेयानक्तंतुगृहिणःस्मृतमितिशातातपः।मुहूर्तोनंदिनंनक्तंप्रवदंतिमनीषिणः ॥ नक्षत्रदर्शनान्नक्तमहंमन्येगणाधिपः ॥ नक्तंनिशायांकुर्वी
तगृहस्थोविधिसंयुतः ॥ यतिश्चविधवाचैवकुर्यात्तत्सदिवाकरम् ॥ उदयस्थासदाग्राह्याहरिनक्तव्रतेतिथिरितिभविष्ये । हविष्यभोजनंस्नानं
सत्यमाहारलाघवं॥अग्निकार्यमधःशय्यांनक्तभोजीषडाचरेदिति।गरुडेतन्नियमाउक्ताः।उपवासनिषेधेतुभक्ष्यंकिञ्चित्प्रकल्पयेत्॥नदुष्यत्यु
पवासः सउपवासफलंभवेत् ॥ भक्ष्यंतु । नक्तंहविष्यान्नमनोदनंवाफलंतिलाःक्षीरमथांबुवाज्यम् ॥ यत्पंचगव्यंयदिवापिवायुःप्रशस्तम
त्रोत्तरमुत्तरश्चेतिवायुपुराणे।उपवासासमर्थश्चविप्रमेकंतुभोजयेत् ॥ तावद्धनानिदद्याद्वायद्भुक्त्वाद्विगुणंभवेत् ॥सहस्रसंमितांदेवींजपेद्वाप्राण
संयमात् ॥ कुर्याद्द्वादशसंख्याकाआहुतीस्तद्व्रतंभवेदितिब्रह्मवैवर्ते । हविष्यंतुसनत्कुमारसंहितायामुक्तं । हैमंतिकंसितास्विन्नंधान्यंमुद्गा
यवास्तिलाः ॥ कलायकंगुनीवारवास्तूकहिलमोचिकाः॥षष्टिकाकालशाकंचमूलकंकेमुकेतरत्॥कंदःसैन्धवसामुद्रेगव्येचदधिसर्पिषी ॥ प
योनुद्धृतसारंचपनसाम्रहरीतकी॥पिप्पलीजीरकंचैवनागरंगंचतिंतिणी॥कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ॥ अतैलपक्वंमुनयोहविष्या
न्नंप्रचक्षते॥इतिभविष्ये । सितमस्विन्नमनूष्मपक्वंधान्यंतंडुलाः प्राच्येकेमुंजाइतिकेमुकस्यनामकलायःमठरीति । हेमाद्रौतुहविष्येषुयवा
युख्यास्तदनुव्रीहयःस्मृताः॥माषकोद्रवगौरादीन्सर्वाभावेविवर्जयेत्॥आग्नेयेतु।व्रीहिषाष्टिकमुद्गाश्चकालायाः सलिलंपयः।श्यामकाश्चैवनी
वारगोधूमाद्याव्रतेहिताः॥कूष्मांडालाबुवार्ताकपालक्यज्योत्स्निकास्त्यजेदित्युक्तं । अथान्यदाह इयमेकादशीशुद्धाविद्धाचेतिद्विविधासाच
द्वादशीन्यूनसमाधिक्यभेदैस्त्रेधा।एवंभेदद्वयसंख्यायोगेष्टादशभेदास्तेचयथा द्वादशीहानियुक्ताशुद्धहीना १ द्वादशीसाम्ययुक्ताशुद्धहीना२
द्वादश्याधिक्ययुक्ताशुद्धहीना३द्वादशीहानियुक्ताशुद्धसमा ४ द्वादशीसाम्ययुक्ताशुद्धसमा ५ द्वादश्याधिक्ययुक्ताशुद्धसमा ६ द्वादशीहानि
युक्ताशुद्धाधिका ७ द्वादशीसाम्ययुक्ताशुद्धाधिका ८ द्वादश्याधिक्ययुक्ताशुद्धाधिका ९ द्वादशीहानियुक्ताविद्धहीना १० द्वादशीसाम्य



युक्ताविद्धहीना ११ द्वादश्याधिक्ययुक्ताविद्धहीना१२द्वादशीहानियुक्ताविद्धसमा१३द्वादशीसाम्ययुक्ताविद्धसमा१४द्वादश्याधिक्ययुक्ता
विद्धसमा१५द्वादशीहानियुक्ताविद्धाधिका१६द्वादशीसाम्ययुक्ताविद्धाधिका१७ द्वादश्याधिक्ययुक्ताविद्धाधिका १८ अत्रसमत्वंनामपरसू
र्योदयकालपर्यंतवर्तमानत्वं। परसूर्योदयकालान्न्यूनत्वेन्यूनत्वम्।आधिक्येत्वाधिक्यमिति। अत्रविश्वरूपः । शुद्धाविद्धातथात्रेधाभिन्नान्यू
नसमाधिकैः ॥ त्रेधैकैकापुनर्भिन्नाद्वादश्यूनसमाधिकैः ॥ आद्यासुषट्सुपूर्वैवव्यवस्थानंतरद्वये ॥ गृहमेधियतीनांतुनवम्यांस्यात्परेहनि ।
विद्धात्रयेतुपूर्वास्याद्व्यवस्थानंतरद्वये । अपरेहनिशेषाःस्युःसप्तमीतुव्यवस्थया॥अत्रव्यवस्थीयते । अष्टादशसुभेदेषुप्रथमादिषट्भेदेषुसर्वे
षामाश्रमिणांपूर्वत्रोपवासः।सप्तमाष्टमभेदयोरुत्तरांयातिः पूर्वांगृहीउपवसेत्।नवमभेदेसर्वेपरेहन्युपवसेयुः। दशैकादशद्वादशभेदेषुपूर्वैवसर्वेषा
माश्रमिणामुपवासार्हा । त्रयोदशचतुर्दशभेदयोः सकामैः पूर्वानिष्कामैरपरोपोष्या । षोडशभेदेपूर्वांगृहीअपरांमुमुक्षुरुपवसेत् । अंत्यभे
दद्वयेसर्वैरपरैवोपोष्येति । सप्ताष्टनवभेदेषुस्कंदपुराणवचनं । संपूर्णैकादशीयत्रप्रभातेपुनरेवसा । उत्तरांतुयतिःकुर्यात्पूर्वामुपवसेद्गृही ॥ द
शादित्रिकेस्मृतिः एकादशीनलभ्येतसकलाद्वादशीभवेत् ॥ उपोष्यादशमीविद्धाऋषिरुद्दालकोब्रवीत् ॥ त्रयोदशचतुर्दशयोःस्मृतिःद
शमीमिश्रितापूर्वाद्वादशीयदिलुप्यते ॥ एकादश्यांतदाब्रह्मन्नुपवासः कथंभवेदितिप्रश्ने । शुद्धैवद्वादशीराजन्नुपोष्यामोक्षकांक्षिभिः ॥ स
कामैर्गृहिभिःपूर्वाविद्धापीतिविनिश्चयः ॥ इतिषोडशेविष्णुरहस्ये । निष्कामस्तुगृहीकुर्यादुत्तरैकादशींतथा ॥ सकामस्तुसदाकुर्यात्पूर्वां
बौधायनोब्रवीदिति । किञ्चात्राष्टादशभेदेषुदशमीविद्धाप्येकादशीकार्य्येतिप्रोक्तं। सातुप्रायश्चित्तविधानाद्ग्रंथेषुबहुशोनिषेधश्रवणाच्चवि
वेकिभिर्नकार्येतिप्रतीयते । नारदः । नोपोष्यादशमीविद्धासदैवैकादशीतिथिः ॥ तामुपोष्यनरोजह्यात्पुण्यंवर्षशतोद्भवम् ॥ दशम्यासंग
तायत्रतिथिरेकादशीभवेत् ॥ तस्यापत्यंविनष्टंस्यात्तस्मात्तांपरिवर्जयेत् ॥ दशमीशेषसंयुक्तागांधार्यासमुपोषिता ॥ तस्याःपुत्रशतंनष्टंत
स्मात्तांपरिवर्जयेदित्यादीनिबहूनिनिषेधकवाक्यानिसंति । प्रायश्चित्तमपिहेमाद्रिराह । अज्ञानाद्यदिवाज्ञानात्कुर्वन्नेकादशींनरः ॥ दश
मीशेषसंयुक्तांप्रायश्चित्तमिदंचरेत् ॥ कृच्छ्रपादंसवत्सांगांत्रिंशद्विप्रांश्चभोजयेत् । कुर्याद्द्यात्तिलद्रोणंसुवर्णंचतथाददेदिति। अथोपवासेवै

गुण्यकर्मप्रायश्चित्तमाह । स्तेनहिंसकयोःसख्यंकृत्वास्तेन्यंचहिंसनम् ॥ प्रायश्चित्तंव्रतेकुर्याज्जपेन्नामशतत्रयम् ॥ मिथ्यावादेदिवास्वापे बहुशोंबुनिषेवणे ॥ अष्टाक्षरंव्रतीजप्त्वाशतमष्टोत्तरंशुचिः ॥ श्राद्धोपवासदिवसेखादित्वादंतधावनम् ॥ गायत्रीशतसंपूतमंबुप्राश्यविशु ध्यतीतिनिर्णयसुधाकरे।उपवासस्वरूपंतुविष्णुधर्मोत्तरे । उपावृत्तस्तुपापेभ्योयस्तुवासोगुणैःसह॥ उपवासःसविज्ञेयःसर्वभोगविवर्जितः॥ गुणास्तु । तज्जाप्यजपनंध्यानंतत्कथाश्रवणादिकम् ॥ तदर्चनंचतन्नामकीर्तनश्रवणादयः ॥ उपवासकृतामेतेगुणाःप्रोक्तामनीषिभिः । किंच । उपवासः प्रणश्येतदिवास्वप्नाच्चमैथुनैः ॥ अत्ययेचांबुपानेचनोपवासःप्रणश्यति ॥ तांबूलभक्षणाद्वापिवितथस्यचभाषणात् ॥ किंचद्वादशीविद्धायाःप्रशस्तत्वात्साकार्यैवेति । तदुक्तंविष्णुधर्मे।एकादश्यष्टमीचैवद्वितीया।चचतुर्दशी ॥ अमावास्यातृतीयाचह्युपोष्या परसंयुतेति । कौर्मेपि दिनक्षयेतुसंप्राप्तेह्युपोष्याद्वादशीभवेत् ॥ दशमीशेषसंयुक्तानकर्तव्याकदाचन ॥ मार्कंडेयस्तु बहुवाक्यविरोधेनसंदे होजायतेयदा ॥ द्वादशीतुतदाग्राह्यात्रयोदश्यांतुपारणमित्याह । पाद्मेतु भागिरथ्यात्रिस्पृशाऽऽसुरीसंज्ञकाप्रोक्ता। तल्लक्षणं।दशम्येकाद शीभद्रामिश्रीभूतायदाभवेत् ॥ त्रिस्पृशासाभवेदेवसाकर्तव्यानवाप्रभो ॥ माधव उवाच ॥ आसुरीत्रिस्पृशादेवियात्वयापरिकीर्तिता ॥ व र्जनीयाप्रयत्नेनवृषहीनोयथापतिः ॥ इति । एकादशीद्वादशीचरात्रिशेषेत्रयोदशी ॥ त्रिस्पृशासातुविज्ञेयादशमीसंगतानहि ॥ अतए वोक्तंब्राह्मे । द्वादश्येकादशीयत्रतत्रसन्निहितोहरिः ॥ पुण्यंक्रतुशतस्योक्तंत्रयोदश्यांतुपारणे ॥ भविष्येपि । एकादशीकलाह्येकाद्वाद शीसकलंदिनम् ॥ त्रयोदशीह्युषःकालेवैष्णवंतद्दिनत्रयम् ॥ सर्वपापहरंप्रोक्तंतदुपोष्यमितिश्रुतिः ॥ नारदीयेपि दशम्यैकादशीविद्धा परतोद्वादशीनचेत् ॥ द्वादशीतुतदोपोष्यात्रयोदश्यांतुपारणमिति । बहून्यत्रवाक्यानिसंति । अथवेधनिर्णयोहरिभक्तिचंद्रोदयान्नृसिं हारण्यस्वामिकृताद्वैष्णवविषयः । स्कांदेरुद्रवाक्यम् । एकादशीयदापुत्रचतुर्वेधविवर्जिता ॥ कर्तव्यासाप्रयत्नेनचतुर्वर्गफलप्रदा ॥ स्प र्शःस्यादर्द्धर्णनिगमैःसंगःपंचाशतामतः ॥ पञ्चपञ्चाशताशल्योवेधः षष्टयासतांमतः ॥ स्पर्शस्यघटिकाःपञ्चपञ्चसंगस्यचैवहि॥ शल्यस्य पञ्चवेधस्यपञ्चैवंहिचतुर्विधः ॥ सस्पर्शाकुलनाशायससंगाधर्मनाशिनी ॥ सशल्याचैवकामघ्नीसवेधामोक्षहानिकृत् ॥ किंच । मद्दिनंसा

धयिष्यंतिविंशद्दोषविवर्जितम् ॥ कलौयेभगवद्भक्तास्तेयांतिपदमव्ययम् ॥ प्रीणनायमुकुंदस्यवैष्णवानांहितायच ॥ तत्त्वंविलोक्यविद्ध द्विविंशदोषाःप्रकीर्तिताः ॥ व्यालमुखीमहाव्यालाभयाचैवमहाभया ॥ वज्रातिवज्रारौद्राचमहारौद्रासुरीतथा ॥ वंध्याचैवमहावन्ध्या छायाग्रस्तातथैवच ॥ वेध्यातिवध्याविज्ञेयामहावेध्यातथैवच ॥ प्रलयाचमहापूर्वामहाघोराततःपरा ॥ संपूर्णाराक्षसीज्ञेयाविंशदोषाः प्रकीर्तिताः ॥ एतैर्दोषैस्संयुताचेद्दशमीदृश्यतेकलौ ॥ तदासानैवकर्तव्यामहाभागवतैर्नरैः ॥ चत्वारिंशन्नाडिकातोऽधिकाचेद्दशमीति थिः ॥ तदैतेविबुधैर्दोषाज्ज्ञातव्यानाडिकाक्रमात् ॥ फलान्यासांहरिभक्तिचंद्रोदये द्रष्टव्यानि ।निंबार्कानुयायिनस्तुकपालवेधंस्वीकुर्वंति । सच । अर्द्धरात्रमतिक्रम्यदशमीदृश्यतेयदि ॥ कपालवेधंतंप्राहुराचार्यायेहरिप्रियाः ॥ इति ।अन्यैर्वैष्णवैर्माध्वैश्चअरुणोदयवेधएवेष्य ते । तदुक्तंभविष्ये । अरुणोदयकालेतुदशमीदृश्यतेयदि ॥ साविद्धैकादशीतत्रपापमूलमुपोषणम् ॥ सौरधर्मेपिआदित्योदयवेलायांप्रा ङ्मुहूर्तद्वयान्वितः ॥ सैकादशीतुसंपूर्णाविद्धान्यापरिकीर्तिता ॥ तदुक्तं । दशमीशेषसंयुक्तोयदिस्यादरुणोदयः ॥ नैवोपोष्योवैष्णवैस्तु तत्रचैकादशीव्रते ॥ इति । अरुणोदयस्तुस्कांदे । उदयात्प्राक्चतस्रस्तुनाडिकाअरुणोदयः ॥ इति । वैष्णवोपितत्रैवोक्तः।परमापदमा पन्नोहर्षेवासमुपस्थिते ॥ नैकादशींत्यजेद्यस्तुयस्यदीक्षास्तिवैष्णवी ॥ समात्मासर्वजीवेषुनिजाचारादविप्लुतः ॥ विष्णवर्पिताखिलाचारः सहिवैष्णवउच्यते ॥ इति । किंचविष्णुधर्मेतु दशमीद्विविधाप्रोक्तासकामाकामभेदतः ॥ सकामाचासुरीज्ञेयाविंशदोषैस्तुसंयुता ॥ नि ष्कामामोक्षदाज्ञेयादैविकीदोषवर्जितेति । पाद्मादावष्टौद्वादश्यः जयाचविजयाचैवजयंतीपापनाशिनी ॥ उन्मालिनीवंजुलीचत्रिस्पृशा पक्षवर्द्धिनी ॥ नकरिष्यंतियेलोकेद्वादश्योष्टौममाज्ञया ॥ तेषांयमपुरेवासोयावदाभूतसंप्लवम् ॥ जयास्यात्पुनर्वसुनाविजयाश्रवणेनच॥ जयंतीरोहिणीयुक्तापुष्येणपापनाशिनी ॥ संपूर्णैकादशीभूत्वाद्वादश्यांवर्द्धतेयदि । उन्मालिनीतुसाप्रोक्ताहत्याकोटिविनाशिनी ॥ सं पूर्णाद्वादशीभूत्वावर्द्धतेचेत्परेहनि ॥ त्रयोदश्यांनृपश्रेष्ठवंजुलीदुर्लभाकलौ ॥ आदौनंदाजयाचांतेमध्येभद्राप्रतिष्ठिता ॥ त्रिस्पृशासातुवि ज्ञेयामहापातकनाशिनी ॥ अमावास्यापूर्णिमावासंपूर्णाजायतेयदि ॥ भूत्वातुषाष्टिघटिकादृश्यतेप्रतिपद्दिने ॥ पक्षवर्द्धिस्तदाज्ञेयाप्रो

क्तासापक्षवर्द्धिनी ॥ कर्तव्यासाप्रयत्नेनमहापातकहानिदेति । अथदशम्यादिनियमाः । कांस्यंमांसंमसूरांश्चचणकान्कोद्रवांस्तथा ॥
शाकंमधुपरान्नंचपुनर्भोजनमैथुनम् ॥ वैष्णवोव्रतकर्ताचदशम्यांदशवर्जयेत् ॥ असकृज्जलपानंचहिंसावितथभाषणम् ॥ दंतधावनतांबू
लंदिवास्वापंचमैथुनम् । द्यूतक्रीडांनिशानिद्रांभोजनंगमनंतथा ॥ अपूर्तिकरणंसर्वमेकादश्यांपरित्यजेत् ॥ दिवानिद्रांपरान्नंचपुनर्भो
जनमैथुने ॥ क्षौद्रंकांस्यामिषंतैलंद्वादश्यामष्टवर्जयेदितिदेवलः । यदाभवतिचाल्पापिद्वादशीपारणादिने ॥ उषःकालेद्वयंकुर्यात्प्रात
र्माध्याह्निकंतदेति॥मात्स्ये। नाडिकाःषट्पञ्चाशत्प्रातरेकाधिकोरुणः ॥ उषःकालोष्टपञ्चाशच्छेषः सूर्योदयः स्मृतइति।आमिषंतुपाद्मे
प्राण्यंगचूर्णंचर्मांबुजंबीरंबीजपूरकम्॥अयज्ञशिष्टमाषादियद्विष्णोरनिवेदितम्॥ दग्धमन्नंमसूरश्चमांसंचेत्यष्टधामिषमिति । किञ्च गोछागी
महिषीदुग्धादन्यद्दुग्धंतुचामिषम् । धान्येमसूरिकाप्रोक्तमन्नंपर्युषितंतथा॥द्विजक्रीतरसाःसर्वेलवणंभूमिजंतथा ॥ ताम्रपात्रस्थितंगव्यंज
लंपल्वलसंस्थितम् ॥ आत्मार्थयाचितंचान्नमामिषंतत्स्मृतंबुधैः । आमिषंशूद्रशेषान्नंप्रेतान्नंकन्यकाधनमितिच ॥ संकटेसमनुप्राप्तेद्वाद
श्यांपारयेत्कथम् ॥ अद्भिस्तुपारणंकृत्वापुनर्भुक्तंनदोषकृदितिदेवलः ।मातापित्रोःक्षयेप्राप्तेभवेदेकादशीयादि ॥ अभ्यर्च्यपितृदेवांश्चह्या
जिघ्रेत्पितृदैवतमितिकात्यायनः । पाद्मेतु एकादश्यांयदारामश्राद्धंनैमित्तिकंभवेत् । तद्दिनंतुपरित्यज्यद्वादश्यांश्राद्धमाचरेत् ॥ श्राद्ध
मयूखेतु पितॄणांप्रीतयेश्राद्धंकुर्याच्छ्रद्धासमन्वितः ॥ अन्नाश्रितानिपापानिक्षयाहेतरवासरे॥ महालयेतुशालिग्रामशिलाग्रेतुश्राद्धंकुर्यात्प्रय
त्नतः ॥ पित्र्यमन्नंसमाघ्रायगवेदद्याद्विचक्षणः ॥ इतिब्रह्मवैवर्ते । अथाव्रतघ्नान्याह ॥ अष्टैतान्यव्रतघ्नानिह्यापोमूलंफलंपयः । हविर्ब्रा
ह्मणकाम्याचगुरोर्वचनमौषधमितिभारते । अथहरिवासरार्थः दशम्यामसुराजाताएकादश्यांसुरास्तथा । यत्तुजन्मादिनंयस्यतत्तस्यैवा
नुवर्द्धनम् ॥ दशम्यामर्द्धरात्रंस्यादसुरोत्पत्तिकारणम् ॥ अतोजन्मदिनंतेषांविख्यातास्तेनिशाचराः ॥ दिवोद्भूतामराः सर्वेसौम्याः
सत्वगुणान्विताः ॥ द्वादश्येकादशीयोगोविख्यातोहरिवासरः ॥ एकादश्यांतुपादेनद्वादश्यांसर्वथैवहि ॥ हरिवासरशब्दस्तुवर्ततेनात्र
संशयः ॥ पदत्रयंत्वेकमर्थंवक्त्येवशृणुसत्तम ॥ द्वादश्येकादशीचाथतृतीयंहरिवासरः । इतिविष्णुधर्मे । द्वादशीहरिवासरमितिज्योतिः



शास्त्रेपिनिरूपितामिति ॥ अत्रवक्तव्यस्यान्तोनास्तीत्युपरम्यते । इत्येकादशीपक्षः ॥ ९६ ॥ ॥ ॥ ॥ ॥
॥ अथतर्कशास्त्रपक्षः ॥ वयंतत्तर्कशास्त्रंसदाहृदाधीमहि । तत्किंयच्छास्त्रमभिज्ञोतिनिपुणोगौतमस्तेने । किंकर्त्तुमादिकविंवेदमावितुं ।
चतुर्थ्यत्रतुमोप्रयुक्तस्योतिबोध्या।प्राणिनायश्रुतेरक्षांकर्तुमावृत्तिनिरूपकम् ॥ गौतमस्तर्कबहुलंशास्त्रंवादिभयावहमित्यभियुक्तोक्तेः। वेदस्या
दिकवित्वंतुआदौसृष्टचादौकूयतेउच्चार्य्यतेसृज्यतेवेत्यादिकविर्वेदः । आदौवेदमयीदिव्यावागुत्सृष्टास्वयंभुवेतिस्मृतेः । यद्वाादिब्रह्मकौतिप्र
तिपादयतीत्यादिकविः।वेदैश्चसर्वैरहमेववेद्यइतिस्मृतेः।सर्वेवेदायत्पदमामनंतीति श्रुतेश्च।यद्वाआदयेलोकापेक्षयाप्रथमायब्रह्मणेकूयतेउच्चा
र्यतइत्यादिकविः । योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्माइतिश्रुतेः । यतोयस्याभिज्ञस्यगौतमस्याद्यस्यब्रह्मणोऽन्वयाद्वंशा
ज्जन्म।यश्चगौतमः पदार्थचिंतनेनिमीलितनेत्रः सन्गतौस्वेनैवाक्षपादत्वाद्राजतेनत्वन्यप्रबोधितइतिस्वराट्।इतरतइतरेभ्योजनेभ्यःसका
शादित्यर्थः।इतरेद्वचक्षाजनानिमीलनगतौपरबोधिताएवराजन्तइतिभावः।चपुनर्यतःशास्त्रात्पुमानर्थेषुद्रव्यादिपदार्थेषुअयोज्ञाताभवाति।
अयतेजानातीत्ययः।अयगतौ।पदार्थोपिभावाभावभेदेनाद्विधा। द्रव्यगुणसामान्यविशेषसमवायभेदाद्भावोपिषड्विधः।अभावस्तुसंसर्गाभावा
न्योन्याभावभेदाद्विधा । तत्रपदार्थत्वंपदस्यार्थः पदार्थइतिव्युत्पत्त्याऽभिधेयत्वंपदार्थसामान्यलक्षणंअत्रऋगतावित्यस्यधातोरभिधारू
पोर्थस्ततोयऊणादिस्थन्प्रत्ययस्तस्यविषयत्वरूपोर्थः अभिधाशब्दशक्तिस्ततोऽभिधाविषयत्वमभिधेयत्वमिति ।यद्वाऋगतावितिधातो
र्निष्पन्नस्यार्थशब्दस्यगत्यर्थकानांबुद्ध्यर्थकत्वाज्ज्ञानविषयत्वमर्थः।संबंधसामान्यवाचकषष्ठ्याजन्यत्वमर्थः।अतःपदजन्यप्रतीतिविषयत्वं
पदार्थलक्षणमिति । अत्रापिपदजन्येतिविशेषणस्यप्रयोजनाभावाज्ज्ञानविषयंलक्षणमित्येवयुक्तं । जीवाननुभूतेतिव्याप्तिवारणंत्वीश्वरप्र
तीतिविषयत्वात्सर्वस्येतिस्वतएवभविष्यति । अथसमवायैकार्थसमवायान्यतरसंबंधेनसत्तावत्त्वंभावत्वं । तत्रद्रव्यादित्रयाणांसमवायेन
सत्तावत्त्वमन्येषामेकार्थसमवायेनसत्तावत्त्वं । यथाघटेसमवायेनघटत्वंसामान्यसत्ताचेतिद्वयोरेकस्मिन्नर्थेसमवायात्सामान्यस्यसत्तावत्त्वंत
थैवनित्यद्रव्येपरमाण्वादौसमवायेनविशेषःसत्ताचास्तीतिद्वयोरेकस्मिन्नर्थेसमवायादत्रापिसत्तावत्त्वं । यथाचघटेघटघटत्वयोःसमवायस्स

चाप्यस्तीत्यनयोरप्येकस्मिन्नर्थेसमवायेनसत्तावत्त्वंचास्तीतिसमन्वयोलक्षणास्यात्रेति । भावभिन्नत्वमभावत्वंप्रतियोगिज्ञानाधीनज्ञान
विषयत्वंवेति।तत्रद्रव्याणिपृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीतिनवैव। द्रव्यत्वंचसमवायिकारणत्वंसमवायिकारणत्वंचयत्समवेतं
कार्यमुत्पद्यतेतत्त्वमितियथातंतवःपटस्यकार्यंचकारणपश्चाद्भावि ॥ कारणंत्रिविधंसमवाय्यसमवायिनिमित्तभेदात् । आद्यंतूक्तं । द्वितीय
माह । समवायिकारणेप्रत्यासन्नंकारणमसमवायिकारणं । यथातंतुसंयोगः पटस्य । तस्यपटस्यसमवायिकारणेषुतंतुषुप्रत्यासन्नत्वा
त्कारणत्वाच्च । एवमुभयातिरिक्तंकारणंनिमित्तकारणं। यथातुरीवेमादिकंपटस्य। कारणलक्षणंतुअनन्यथासिद्धकार्यनियतपूर्ववर्तित्वं ।
अन्यथासिद्धिस्तुत्रिधा । येनसहैवयस्ययंप्रतिपूर्वभावोवगम्यतेतेनतस्यतंप्रतिअन्यथासिद्धिराद्या। यथाघटंप्रतिदंडरूपस्यदंडत्वस्यच
दंडेनसहैवयस्यदंडरूपस्यदंडत्वस्यवाघटंप्रतिपूर्वभावग्रहात्अन्यंप्रतिपूर्ववृत्तित्वेज्ञातएवयस्ययंप्रतिपूर्ववृत्तित्वमवगम्यतेतंप्रतितस्यान्य
थासिद्धिर्द्वितीया । यथाघटंप्रत्याकाशस्य । कुलालंप्रतिपूर्ववृत्तित्वेज्ञातएवघटंप्रतिपूर्ववृत्तित्वग्रहात्घटंप्रतिकुलालपितान्यथासिद्धः । अ
न्यत्र क्लृप्तनियतपूर्ववृत्तिनएवकार्यसंभवेतत्सहभूतत्वमन्यथासिद्धिस्तृतीया । यथाघटविशेषंप्रतिरासभस्यदैवादागतस्यघटविशेषादन्यत्रघ
टांतरेक्लृप्तनियतपूर्ववृत्तिदंडचक्रादेरेवघटविशेषस्यापिसंभवेदंडचक्रादिसहभूतोरासभोऽन्यथासिद्धः ॥नियतपूर्ववृत्तित्वंचाव्यवहितपूर्वकाला
वच्छेदेनकार्यदेशसत्त्वमेव । अथचगुणानाह । गुणास्तुरूपरसगंधस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छा
द्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्मशब्दाश्चतुर्विंशतिरेव । गुणलक्षणंतुद्रव्यकर्मभिन्नत्वेसतिसामान्यवान्गुणइति। द्रव्यकर्मणोरतिव्या
प्तिनिरासायविशेषणं। सामान्यादौतद्वारणायविशेष्यम्। कर्माणितुउत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानिपंचैव। कर्मत्वंतुसंयोगभिन्न
त्वेसंयोगासमवायिकारणत्वं । घटादावतिप्रसक्तिवारणायपरदलं । संयोगजसंयोगेतिप्रसंगवारणायसत्यंतं । सामान्यमाह परमपरञ्चे
तिसामान्यंद्विधा।परत्वंचाधिकदेशवृत्तित्वं । तथाहिद्रव्यादित्रिकंसदितिनिगद्यते। सतोभावः सत्तेतिव्युत्पत्तेस्तत्रसत्तानामकाचनजातिर
स्ति॥साचद्रव्यत्वाधिकरणेद्रव्येवर्तमानासत्यधिकदेशेगुणादावप्यस्तीत्यतःपरंसामान्यमित्युच्यते।अपरत्वंचन्यूनदेशवृत्तित्वंवर्त्ततेचद्रव्य



त्वे।गुणादिसाधारणसत्ताधिकरणगुणादेर्न्यूनदेशोद्रव्यंतद्वृत्तित्वं। अथैवंसतिद्रव्यत्वस्यपृथिवीत्वापेक्षयापरत्वात्परंसत्तेतिवक्तुंनशक्यतेइति
चेन्न।सकलजात्यपेक्षयापरत्वाभिप्रायेणसत्तायाःपरत्वमितिध्येयंसुधिया।लक्षणंत्वस्यनित्यत्वेसत्यनेकसमवेतत्वंसामान्यमिति ॥ नित्यत्वंसा
मान्यमित्युक्तेगगनादावतिव्याप्तिरतोविशेष्यदलं ॥ तावन्मात्रोक्तौसंयोगादावतिव्याप्तिरतोविशेषणम्। अनेकवृत्तित्वमित्युक्तेऽत्यंताभावे
ऽतिव्याप्तिरतःसमवेतत्वमित्युक्तं । समवेतत्वंचसमवायेनवृत्तित्वंतच्चात्यंताभावेनास्ति । अवयवावयविनोर्गुणगुणिनोःक्रियाक्रियावतोर्जा
तिव्यक्त्योर्विशेषनित्यद्रव्ययोरेवसमवायात् । बाधकाभावेजातिग्रहोनान्यथा । तदर्थंबाधकसंग्रहोनिरूप्यते। व्यक्तेरभेदस्तुल्यत्वंसंकरो
थानवस्थितिः॥ रूपहानिरसंबंधोजातिबाधकसंग्रहः ॥ इति। व्यक्तेरभेदएकव्यक्तिकत्वंतच्चाकाशत्वादेर्जातित्वेबाधकं। तुल्यत्वंतुल्यव्य
क्तिवृत्तित्वं । घटत्वकलशत्वादीनांजातीनांभेदेबाधकं । ननुतुल्यत्वंतुल्यव्यक्तिवृत्तित्वमित्युक्तेद्रव्यत्वादेरपिघटत्वाश्रययावदाश्रयवृत्तित्वा
त्तुल्यव्यक्तिवृत्तित्वं । तस्यापिजातित्वंनस्यादतस्तुल्यव्यक्तिवृत्तित्वंस्वभिन्नजातिसमनियतत्वंवाच्यं । स्वंकलशत्वंतद्भिन्नाजातिर्घटत्वं
तत्समनियतत्वंकलशत्वेत्वस्तिद्रव्यत्वादेस्तन्नसंभवति । स्वंघटत्वंतद्भिन्नाजातिर्द्रव्यत्वंतत्समनियतत्वंघटेनास्ति। संकरश्चपरस्परात्यं
ताभावसमानाधिकरणयोर्धर्मयोरेकत्रसमावेशः । भूतत्वादेर्जातित्वेबाधकोभूतत्वंविहायमनसिवर्त्तमानस्यमूर्त्तत्वस्यमूर्त्तत्वंविहायगगनेवर्त
मानस्यभूतत्वस्यचपृथिव्यादिचतुष्टयेद्वयोःसत्त्वात्। अनवस्थातुजातेर्जातिमत्त्वेबाधिकारूपहानिः । विशेषस्यजातिमत्त्वेरूपस्यस्व
तोव्यावर्तकत्वस्यहानिः। तत्रजातिस्वीकारेतयैवव्यावर्तकत्वंवाच्यं । सामान्याश्रयस्यसामान्यरूपेणभेदसाधकत्वमितिनियमात् ।
असंबंधःसमवायाभावयोर्जातिमत्त्वेप्रतियोगितानुयोगितान्यतरसंबंधेनसमवायाभावः । तथाहियस्यसमवायःसप्रतियोगीयस्मिन्समवा
यःसोनुयोगी । यथानित्यद्रव्येकेवलमनुयोगेनसमवायःतत्रविशेषसामान्ययोःसमवायात् । सचकुत्रापिनास्ति । जन्यद्रव्यगुणकर्मसुप्राति
योगितानुयोगितान्यतरसंबंधेनसमवायः । तानिद्रव्येवर्त्तंतेतेषुचसमवायोप्यस्तीतिभावः। सामान्यविशेषयोःप्रतियोगितासंबंधेनसमवा

१ समवायाभावयोःप्रतियोगितानुयोगितान्यतरसम्बन्धेनसमवायः ॥

यस्तयोर्द्रव्यादिषुसत्त्वात् समवायाभावयोर्नकेनापिसंबंधेनसमवायः। एतयोर्नकोपिसमवायेनातिष्ठाति । एतावपिनक्कुत्रचित्समवायेन
तिष्ठतइतिभावः। विशेषमाह स्वतोव्यावर्त्तकत्वंविशेषत्वं। विशेषोद्रव्याद्भिन्नोविशेषादित्यत्रस्वयमेवव्यावर्त्तकोभवाति। समानजाती
यरूपरसादिमत्परमाणूनांपरस्परभेदकंविनाभेदनिर्णयासम्भवाद्भेदकत्वेनविशेषाअनुमीयंतेऽनित्यद्रव्येष्वाश्रयेणैवभेदसम्भवात्तत्रतेषुप्र
माणाभावान्नित्यद्रव्यमात्रवृत्तित्वंतेषांव्यावर्त्तकांतराभावेसत्यंतेव्यावर्तकत्वेनस्वीक्रियमाणत्वादंत्यत्वं । यथाप्रजारक्षकत्वेनमहाराजआ
वश्यकः। सचस्वतएवस्वरक्षणसमर्थः। एवंविशेषाःस्वतएवव्यावृत्ताइतिनानवस्थातएवनित्यद्रव्यवृत्तयोनन्ताविशेषाइतिसिद्धं। समवा
यमाह नित्यःसंबंधःसमवायः। संयोगवारणायानित्यइति । गगनादिवारणायसंबंधइति । अभावंविभजतेसंसर्गारोपजन्यप्रतीतिविषया
भावः।संसर्गाभावः।भूतलेघटोनेत्यारोप्यैवनिषेधप्रतीतेः।सत्रिधा प्रागभावोध्वंसोऽत्यंताभावश्च। भविष्यतीतिप्रतीतिविषयोविनाश्यभावः
प्रागभावः। सचेहकपालेघटोभविष्यतीतिप्रत्ययसिद्धः। उत्पत्तिमानभावोध्वंसः।घटध्वंसइहकपालेजातइतिप्रतीतेः।उत्पत्तिविनाशशून्यः
संसर्गाभावोऽत्यंताभावः। भूतलेघटोनास्तीतिप्रतीतेः भूतलेघटापसरणोत्तरंघटानयनात्पूर्वंश्चप्रतीतस्यघटकालेसत्त्वेपिनप्रतीतिर्घटज्ञाने
नप्रतिबंधादिति । पदार्थविशेषाणांसोदाहरणानिलक्षणानितुग्रंथांतरादवसेयानीहविस्तरभियानोक्तानि । किंचगुणेषुबुद्धेर्बहुप्रपश्चत्वा
त्तांसंक्षिप्यसर्वानुपेक्ष्यतन्निरूपणस्यसर्वत्रोपयोगित्वान्निरूपयाति। सर्वव्यवहारहेतुर्ज्ञानंबुद्धिः सर्वेयेव्यवहाराआहारविहारादयस्तेषांहेतु
र्बुद्धिरित्यर्थः। व्यवहारत्वावच्छिन्नकार्यतानिरूपितकारणत्वंबुद्धेर्लक्षणमिति। सिद्धंज्ञानमितिसांख्यमते बुद्धेरंतःकरणत्वंतन्निरस्यति।
साद्विधा स्मृतिरनुभवश्च। संस्कारजन्यंज्ञानंस्मृतिः। ज्ञानंस्मृतिरित्युक्तेऽनुभवेतिव्याप्तिस्तद्वारणायसंस्कारजन्यमिति । संस्कारध्वं
सेतद्वारणायज्ञानमितिध्वंसम्प्रतिप्रतियोगिनःकारणत्वात्।तद्भिन्नंज्ञानमनुभवइतिस्मृतिभिन्नत्वेसतिज्ञानत्वमनुभवत्वमितिलक्षणंसंसिद्धं।
स्मृतावतिव्याप्तिवारणायतद्भिन्नत्वेसतीति। घटादौतद्वारणायज्ञानत्वमिति। साद्विधा यथार्थानुभवोऽयथार्थानुभवश्चेति। प्रथममयथा

१ आश्रयतिद्रव्यादिकमित्याश्रयोजातिः॥

र्थानुभवमाह। प्रमाणाभासजन्योऽयथार्थानुभवः। साद्विधा भ्रमसंशयभेदात्। विपरीतनिर्णयोभ्रमः। यथापीतःशंखःलोहितःस्फटिकः।
एकस्मिन्धर्मिणिविरुद्धनानाकोटिकज्ञानंसंशयः। यथादूरवर्त्तिनिउच्चैस्तरेऽयंस्थाणुर्वापुरुषोवेति। यथार्थानुभवःप्रमा। फलवत्प्रवृत्तिज
ननयोग्यत्वंचयथार्थत्वं। स्मृत्यनुभवसाधारणंप्रमाकरणंप्रमाणं। व्यापारवत्कारणंकरणं। यथाछिदिक्रियांप्रतिकुठारः। तज्जन्यत्वेसाति
तज्जन्यजनकोव्यापारः। यथाकुठारदारुसंयोगः। तत्प्रमाणंचतुर्द्धातदुक्तंसूत्रकृता प्रत्यक्षानुमानोपमानशब्दाःप्रमाणानीति। तत्रप्रत्यक्ष
प्रमाकरणंप्रत्यक्षं। तच्चेंद्रियात्मकं। इन्द्रियार्थसन्निकर्षजंज्ञानंप्रत्यक्षं । इंद्रियार्थसन्निकर्षध्वंसेऽतिव्याप्तिवारणायज्ञानमिति । अनुमि
त्यादौतद्वारणायइंद्रियार्थेत्यादि। तत्सविकल्पकनिर्विकल्पभेदाद्विधा। विशेषणविशेष्यसंबंधावगाहिप्रत्यक्षंनिर्विकल्पकं। तच्चघटघट
त्वेइत्याकारकमतींद्रियं। नचात्रमानाभावः। तदसत्त्वेसुप्तोत्थितस्यायंघटइतिशिष्टज्ञानंनस्यात्। विशेषणीभूतघटत्वाज्ञानात्। विशे
षणज्ञानंविनाविशिष्टज्ञानानुदयेनतस्यतद्धेतुत्वात्। पुनस्तल्लौकिकालौकिकभेदाद्विधा। लौकिकप्रत्यक्षहेतुःसन्निकर्षःषोढा। संयोगसं
युक्तसमवायसंयुक्तसमवेतसमवायसमवायसमवेतविशेषणविशेष्यताभेदात् । तत्रसंयोगेनद्रव्यग्रहः यथाघटोयमितिसंयुक्तसमवायेनगुणक
र्मद्रव्यगतजातिग्रहः। इहघटेरूपंचलनंद्रव्यत्वादिकमस्तिचक्षुरादिसंयुक्तेघटेरूपादीनांसमवायात् । संयुक्तसमवेतसमवायेनगुणकर्मजा
तिग्रहः। घटगतरूपेरूपत्वादिकमस्तिघटगतचलनेकर्मत्वादिकमस्तिचक्षुरादिसंयुक्तेघटेसमवेतंरूपादिचलनंच। तत्ररूपत्वादेःकर्मत्वा
देश्चसमवायात्। समवायेनशब्दग्रहःइहवीणाशब्दोस्तीति। कर्णशष्कुल्यवच्छिन्नंनभःश्रोत्रंतत्रशब्दस्यसमवायात्। समवेतसमवायेन
शब्दत्वादिग्रहः। इहशब्देशब्दत्वंगुणत्वादिकंचास्तीतिश्रोत्रसमवेतेशब्देशब्दत्वादेःसमवायात्। विशेषणतयासमवायाभावयोर्ग्रहः। त
थाहि विशेषणताद्विविधा । इंद्रियविशेषणताइंद्रियसंबद्धविशेषणताच । तत्रेंद्रियविशेषणतयाशब्दसमवायस्यशब्दाभावस्यचग्र
हः। इहशब्दसमवायोस्तिइहशब्दोनास्तीतिश्रोत्रेंद्रियेशब्दसमवायस्यशब्दाभावस्यचविशेषणत्वात्। इंद्रियसंबद्धविशेषणतयाघ
टादिसमवायस्यघटस्यचग्रहः। इहकपालेघटसमवायोस्तिइहभूतलेघटोनास्तीतिचक्षुरादिसंयुक्तेकपालेघटसमवायस्यभूतलेघटाभा

वस्यचविशेषणत्वात् । अलौकिकप्रत्यक्षहेतुःसंनिकर्षस्त्रिधासामान्यलक्षणोज्ञानलक्षणोयोगजधर्मलक्षणश्चेति । तत्राद्यः इंद्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतघटत्वादिः । इंद्रियसंबद्धविशेष्यकेऽयंघटइतिप्रत्यक्षेप्रकारःतदनंतरंतेनसंनिकर्षेणसर्वेघटाइत्यलौकिकप्रत्यक्षंजायते । ज्ञानलक्षणसन्निकर्षेणतुतद्विषयीभूततत्तत्पदार्थानांप्रत्यक्षंजन्यते । कथमन्यथाकवेःकाव्यमूलभूततत्तत्पदार्थानांसंसर्गज्ञानं । योगजधर्मसन्निकर्षेणयोगिनांवस्तुमात्रप्रत्यक्षंजन्यते । तच्चघ्राणरसनत्वक्चक्षुःश्रोतमनोभेदात्षोढा । गन्धप्रत्यक्षासाधारणंकारणंघ्राणं । रसप्रत्यक्षासाधारणंकारणंरसनं । रूपप्रत्यक्षासाधारणंकारणंचक्षुः । स्पर्शप्रत्यक्षासाधारणंकारणंत्वक् । शब्दप्रत्यक्षासाधारणंकारणंश्रोत्रं। सुखादिप्रत्यक्षासाधारणंकारणंमनः । घ्राणादिलक्षणेऽसाधारणपदमात्मादिवारणाय । प्रत्यक्षकरणीभूतघ्राणादेर्व्यापारोघ्राणादिमनःसंयोगः मनसस्त्वात्मसंयोगः । आत्मामनसायुज्यतेमनइंद्रियेणेंद्रियमर्थेनततःप्रत्यक्षमितिनियमात् । किंचयेनेंद्रियेणयद्गृह्यतेतेनैवतज्जातिस्तत्समवायस्तदभावश्चगृह्यतेइतिनियमात् । इंद्रियत्वंचशब्देतरोद्भूतविशेषगुणानाश्रयत्वेसतिज्ञानकारणमनःसंयोगाश्रयत्वमिति । शब्दादितरेयेविशेषगुणाघटनिष्ठरूपादयस्तदनाश्रयत्वंज्ञानकारणीभूतोयोमनःसंयोगस्तदाश्रयत्वंचचक्षुरादावस्तीतिलक्षणसंगतिः।आत्मवारणायसत्यंतं । कालवारणायविशेष्यं । श्रोत्रेऽव्याप्तिवारणायशब्देतरेति । चक्षुरादौतद्वारणायोद्भूतेति । इंद्रियार्थसंयोगाश्रयत्वस्यचक्षुरादौसत्त्वाद्विशेषगुणेति । स्वध्वंसकारणीभूतःकालमनःसंयोगस्तदाश्रयत्वंकालइति । ज्ञानपदंइंद्रियावयवार्थावयवयोःसन्निकर्षोपिज्ञानकारणं। तदाश्रयत्वमिंद्रियावयवेगतं । यद्वाकालेरूपंनास्तीतिप्रत्यक्षंप्रतिचक्षुःसंयुक्तविशेषणतायाःकारणत्वेनतद्घटकीभूतसंयोगाश्रयत्वंकालेगतंततोमनःपदं।नचात्मवारणायात्मान्यत्वेसतीतिवाच्यं । त्वङ्मनोयोगस्यज्ञानकारणतापक्षेत्वाचिदोषादितिप्रत्यक्षमुक्त्वाक्रमप्राप्तमनुमानमाह । अनुमितिकरणमनुमानं । तच्चधूमोवह्निव्याप्यइतिव्याप्तिज्ञानं । वह्निव्याप्यधूमवानयमितितृतीयलिंगपरामर्शोव्यापारः।तृतीयत्वमस्यकथमितिचेदाह।महानसादौदृष्टांतेवह्निधूमयोर्भूयःसहचारदर्शनाद्व्याप्यत्वेनधूमस्यज्ञानंप्रथमं ततःपूर्वतादौधूमंदृष्ट्वाव्याप्यत्वेनतत्स्मरणंद्वितीयं ।ततस्तत्रैवव्याप्यत्वेनधूमस्यपरामर्शोवह्निव्याप्यधूमवानयमित्येवंरूपोजायतेइतितृतीयत्वंतस्येतिबोध्यं।लिंगज्ञानजन्यलिंगिज्ञानमनुमितिः।यथापर्वतादौधूमज्ञानानंतरंपर्वतोवह्निमानितिज्ञानं।व्याप्तिःपक्षधर्मतावल्लिंगं ।ननुकाव्याप्तिः ।अव्योभचरितसाध्यसामानाधिकरण्यंव्याप्तिः।अस्तिचेदंपर्वतोवह्निमान्धूमादित्यादौसद्धेतौ । यत्रयत्रधूमस्तत्रतत्रवह्निरितिनियमस्यमहानसादौसत्त्वात्।नास्तिचेदंधूमवान्वह्नेरित्याद्यसद्धेतौ।यत्रयत्रवह्निस्तत्रतत्रधूमइतिनियमस्यासत्वात् । तप्तायःपिंडेवन्हिसत्त्वेपिधूमासत्वात्व्यभिचारज्ञानविरहसहकृतहेतुसाध्यसहचारदर्शनंव्याप्तिग्राहकंकथमितिचेदित्थंहेतोः साध्याभाववद्वृत्तित्वंव्यभिचारस्तज्ज्ञानेसतिव्याप्तिग्रहाभावात्।तदभावस्तत्रकारणंहेतुसाध्यसहचारदर्शनंत्वन्वयव्यतिरेकाभ्यांतत्रकारणं। यत्सत्वेयत्सत्वंसोन्वयःयदभावेयदभावःसव्यतिरेकः यथाहेतुसाध्यसहचारदर्शनेसत्वेव्याप्तिग्रहसत्वमित्यन्वयः। हेतुसाध्यसहचारदर्शनाभावेव्याप्तिग्रहाभावइतिव्यतिरेकः ।पक्षताश्रयवृत्तित्वंपक्षधर्मता । पक्षताचानुमित्साविरहविशिष्टसाध्यनिश्चयाभावः । अस्तिचेदंपर्वतादौपक्षे । अनुमित्साविरहविशिष्टसाध्यनिश्चयस्यतत्राभावात् । पर्वतादौसाध्यनिश्चयेसत्यपिसत्यांचानुमित्सायांपर्वतोवह्निमान्धूमादित्यनुमानसंभवात् । तत्रपक्षतासंपत्तयेऽनुमित्साविरहविशिष्टत्वंसाध्यनिश्चयस्यविशेषणं । तथाचानुमित्साविरहविशिष्टसाध्यनिश्चयस्यतत्राभावात्पक्षता । तच्चानुमानंकेवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्त्रिधा । यत्रान्वयव्याप्तिरेवास्तितत्केवलान्वयि । हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः । यथाघटोभिधेयः प्रमेयत्वादिति । यत्रचप्रमेयत्वंतत्राभिधेयत्वं । यथापटइत्यन्वयव्याप्तिरेवास्ति । अभिधेयत्वस्यप्रमेयत्वस्यचसर्वत्रसत्त्वात् । साध्याभावादेरेवाप्रसिद्धत्वात् । तत्रव्यतिरेकव्याप्तिरेवास्तितत्केवलव्यतिरेकि । हेत्वभावसाध्याभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः । यथाजीवच्छरीरंसात्मकंप्राणादिमत्त्वात् । यत्रसात्मकत्वाभावस्तत्रप्राणादिमत्त्वाभावोयथाघटादावितिव्यतिरेकव्याप्तिरेवास्ति । नतुयत्रप्राणादिमत्त्वंतत्रसात्मकत्त्वमित्यन्वयव्याप्तिर्दृष्टांताभावात्। जीवच्छरीरमात्रस्यपक्षीकरणादन्यत्रचहेतुसाध्ययोरेवासत्त्वात्।यत्रान्वयव्याप्तिर्व्यतिरेकव्याप्तिश्चस्यात्तदन्वयव्यतिरेकि।यथापर्वतोवह्निमान्धूमादिति । यत्रधूमस्तत्रवह्निर्यथामहानसादावित्यन्वयव्याप्तिर्यत्रवन्ह्यभावस्तत्रधूमाभावोयथाजलन्हदादावितिव्यतिरेकव्याप्तिश्चास्ति । अन्वयेसाधनंव्याप्यंसाध्यंव्यापकमिष्यते ॥ साध्याभावोऽन्यथाव्याप्योव्यापकसाधना

त्ययः॥ व्याप्यस्यवचनंपूर्वंव्यापकस्यततःपरम् ॥ एवंपरीक्षिताव्याप्तिःस्फुटीभवतितत्त्वतः ॥ त्रयाणांमध्येयोन्वयव्यतिरेकीसपञ्चरू
पोपपन्नएवसाध्यंसाधयति। तानिचपंचरूपाणिपक्षधर्मत्वंसपक्षेसत्वंविपक्षाद्व्यावृतत्वमबाधितविषयत्वमसत्प्रतिपक्षत्वञ्चेति । पक्षताश्रय
वृत्तित्वंपक्षधर्मत्वं । निश्चितसाध्यवान्सपक्षःतत्रविद्यमानत्वंसपक्षेसत्वंनिश्चितसाध्याभाववान्विपक्षस्तत्राविद्यमानत्वंविपक्षाद्व्यावृत्तत्वं।
प्रमाणांतरेणाप्रमितसाध्याभावत्वमबाधितविषयत्वं। साध्याभावसाधकहेत्वंतरशून्यत्वसमत्प्रतिपक्षत्वमेतानिपञ्चरूपाणिवह्निसाधकधूमो
ऽन्वयव्यतिरेकिणिविद्यन्ते । केवलान्वयिनिविपक्षाद्व्यावृत्तिर्नास्ति। विपक्षासिद्धेः। केवलव्यतिरेकिणिसपक्षसत्त्वंनास्ति।सपक्षासिद्धेः।
त्रिविधमप्यनुमानंस्वार्थंपरार्थंचेतिद्विविधं । स्वस्यैवानुमितिहेतुः स्वार्थं। यत्स्वयंधूमादग्निमनुमायपरंबोधयितुंपञ्चावयवोपेतमनुमानवा
क्यंप्रयुंक्तेतत्परार्थं । पञ्चावयवास्तुप्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । तत्रपक्षेसाध्यनिर्देशः प्रतिज्ञा । यथापर्वतोवह्निमानितिप्र
तिज्ञा । पञ्चम्यंतंहेतुप्रतिपादकंवाक्यंहेत्ववयवः ॥ यथाधूमादितिव्याप्तिप्रतिपादकं। वचनमुदाहरणं ।यथायोयोधूमवान्ससोग्निमान् ॥
यथामहानसइति । व्याप्तिविशिष्टस्यहेतोः पक्षधर्मताप्रतिपादकंवचनमुपनयः । यथावह्निव्याप्यधूमवांश्चायमिति ।अबाधितत्वासत्प्र
तिपक्षत्वतात्पर्यकंवाक्यंनिगमनं । यथातस्माद्वह्निमानिति।अथहेत्वाभासाः अनुमितितत्कारणान्यतरप्रतिबंधकज्ञानविषयधर्मोहेत्वाभा
सत्वोपाधिस्तद्वन्तोहेत्वाभासाः । तेचानैकांतिकविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पंच । तत्रसव्यभिचारोनैकांतिकः । सत्रिविधःसा
धारणोऽसाधारणोऽनुपसंहारीचेति।तत्रसपक्षविपक्षवृत्तिः साधारणः । यथापर्वतोधूमवान्वन्हेः। वन्हिः सपक्षेमहानसेविपक्षेतप्तायःपिंडे
चवर्ततेऽतःसाधारणः । एतद्ज्ञानंचविपक्षवृत्तित्वरूपव्यभिचारविषयकत्वाद्व्यभिचारज्ञानविधयाव्याप्तिग्रहेप्रतिबंधकं।व्यभिचारज्ञानेसति
व्याप्तिग्रहानुदयस्यसुप्रसिद्धत्वात्। सपक्षविपक्षव्यावृत्तित्वेसतिपक्षवृत्तिरसाधारणः । यथाशब्दोनित्यःशब्दत्वात् । शब्दत्वंहिसपक्षा
द्गगनादेर्विपक्षाच्चघटादेर्व्यावृत्तं । पक्षेचशब्देवर्ततेइत्यसाधारणं।एतद्ज्ञानंसाक्षादनुमितिप्रतिबंधकंकथमितिचेदित्थंशब्दत्वंहिनान्वयहेतुः
दृष्टांताभावात्। किन्तुव्यतिरेकी । तथाचयोयद्वतोव्यावृत्तः सस्वाश्रयेतदभावंसाधयति। यथाधूमोवन्ह्यभाववतोजलन्हदादेर्व्यावृत्तःस्वा



श्रयेपर्वतादौवन्ह्यभावाभावंसाधयति तथाशब्दत्वंनित्यत्ववतोगगनादेः सपक्षाद्व्यावृत्तमितिस्वाश्रयेशब्देनित्यत्वाभावमनित्यत्वमपिसा
धयेत् । एवंनित्यत्वाभाववतोघटादेर्विपक्षाद्व्यावृत्तमितिस्वाश्रयेशब्देनित्यत्वाभावाभावंनित्यत्वमपिसाधयेत् ॥ नचैकत्रशब्देनित्य
त्वानित्यत्वयोःसंभवस्तयोर्विरोधात् । तस्माच्छब्दत्वेऽसाधारणत्वज्ञानेसतिनसाध्यानुमितिरिति । वस्तुमात्रपक्षकोनुपसंहारी ।
यथासर्वमनित्यंप्रमेयत्वादिति । अत्रसर्वस्यैवपक्षत्वात्प्रमेयत्वंहेतुरनुपसंहारी । एतज्ज्ञानमपिव्याप्तिग्रहेप्रतिबंधकं । सर्वस्यपक्षत्वेव्या
प्तिग्राहकसहचारदर्शनस्थलाभावेनसहचारनिश्चयाभावेसतिव्याप्तेरनिश्चयात् । साध्याभावव्याप्तोहेतुर्विरुद्धः । यथागौरश्वत्वादिति ।
अत्रहियत्राश्वत्वंतत्रगोत्वाभावइतिसाध्यभावव्याप्तेः सत्त्वादश्वत्वंहेतुर्विरुद्धः । एतज्ज्ञानंसाक्षादनुमितिप्रतिबंधकम् । गोत्वाभावव्या
प्याश्वत्ववानितिज्ञानेसतिगोत्वनिश्चयासंभवात् । साध्याभावसाधकंहेत्वंतरंसत्प्रतिपक्षस्तद्वान्सत्प्रतिपक्षः । यथापर्वतोवन्हिमान्
धूमात्महानसवत् । सवन्ह्यभाववान्पाषणमयत्वात्कुड्यवत् । अत्रचद्वयोरपिहेत्वोः परस्परसाध्याभावसाधकत्वान्मिथः सत्प्रतिपक्ष
त्वम् । एतज्ज्ञानंसाक्षादनुमितिप्रतिबंधकंवन्हिव्याप्यधूमवान्वन्ह्यभावव्याप्यपाषाणमयत्ववांश्चपर्वतइतिद्विविधपरामर्शेसत्येकस्माद
प्यनुमितेरभावः । परस्परंप्रतिबंधात् ॥ परामर्शप्रतिबंधकज्ञानविषयधर्मोऽसिद्धिस्तद्वानसिद्धः । सत्रिधा।आश्रयासिद्धस्वरूपासि
द्धव्याप्यत्वासिद्धभेदात् । तत्रपक्षतावच्छेदकाभाववत्पक्षकआश्रयासिद्धः । यथागगनारविन्दंसुरभिअरविंदत्वात्सरोजारविंदवत् ।
अत्रचारविन्देपक्षेगगनीयत्वंपक्षतावच्छेदकंनास्ति । यद्विशेषविशेषणंविशिष्टंतस्यविशेषणमेवावच्छेदकमितिन्यायाद्विशेषविशेषण
स्यगगनीयत्वस्यात्रावच्छेदकत्वम्। यद्वाविशिष्टपदेविशेषणपदधर्मस्यैवावच्छेदकत्वमितिस्वीकाराच्चेत्यरविंदत्वहेतुराश्रयासिद्धःएतज्ज्ञा
नंपरामर्शप्रतिबंधकम्। अरविन्देगगनीयत्वंनास्तीतिज्ञानेसुरभित्वव्याप्यारविंदत्ववद्गगनारविन्दमितिपरामर्शासंभवात् । एतस्यारविं
देगगनीयत्वसंबंधावगाहित्वात्। पक्षनिष्ठाभावप्रतियोगीस्वरूपासिद्धः । यथान्हदोद्रव्यंधूमादिति । अत्रन्हदेपक्षेधूमाभावोस्तीतिधूमोहे
तुःस्वरूपासिद्धः। एतज्ज्ञानमपिपरामर्शप्रतिबंधकं। न्हदेधूमोनास्तीतिज्ञानेसतिद्रव्यत्वव्याप्यधूमवान्न्हदइतिपरामर्शासंभवात्।एतस्य

न्हदेधूमसंबंधावगाहित्वात् । व्याप्यतावच्छेदकाभाववान्हेतुर्व्याप्यत्वासिद्धः । यथापर्वतोवह्निमान्काञ्चनमयधूमादिति । अत्रधूमेव्या
प्यतावच्छेदकत्वेनाभिमतंकाञ्चनमयत्वंनास्तीतिधूमोहेतुर्व्याप्यत्वासिद्धः । एतज्ज्ञानमपिपरामर्शप्रतिबंधकं। धूमेकाञ्चनमयत्वंनास्ती
तिज्ञानेसतिवह्निव्याप्यकांचनमयधूमवान्पर्वतइतिपरामर्शासंभवादेतस्यधूमेकाञ्चनमयत्वसंबंधावगाहित्वात् । साध्याभाववत्पक्षकोबाधि
तः । यथावन्हिरनुष्णः पदार्थत्वात्जलवदिति । अत्रवन्हौपक्षेऽनुष्णत्वाभावस्योष्णत्वस्यत्वगिंद्रियेणनिश्चयात्पदार्थत्वहेतुर्बाधितः । ए
तज्ज्ञानंसाक्षादनुमितिप्रतिबंधकं ।वन्हावनुष्णत्वंनास्तीतिज्ञानेवन्हिरनुष्णइत्यनुमितेरसंभवात् । तदभावलौकिकनिर्णयस्यतद्वत्ताज्ञानेप्र
तिबंधकत्वात् । प्रतिबंधकत्वञ्चसामग्रीकालीनकार्यानुत्पादप्रयोजकत्वमितिहेत्वाभासः । ननूपाधेरपिदोषत्वात्सोपाधिकोपिहेत्वाभा
सोस्तीतिकथंपंचैवेतिचेन्न । व्यभिचारादिज्ञानस्येवोपाधिज्ञानस्यानुमितितत्करणान्यतरप्रतिबंधकत्वाभावेनोपाधेर्हेतुदोषत्वाभावात् ।
कथंतर्हिवाय्वनुमानेउपाधिरुपन्यस्यतइतिचेन्न । व्यभिचारज्ञानेप्रयोजकत्वेनतदुपन्यासात् । अथकोयमुपाधिरितिचेदुच्यते । साध्य
व्यापकत्वेसतिसाधनाव्यापकउपाधिः । केवलसाध्यव्यापकपक्षधर्मावच्छिन्नसाध्यव्यापकसाधनावच्छिन्नसाध्यव्यापकभेदात्सत्रिधा ।
आद्यमाह।पर्वतोधूमवान्वन्हेरित्यत्रार्द्रेंधनं । तच्चसाध्यस्यधूमस्यव्यापकं।यत्रधूमस्तत्रार्द्रेंधनमितिसत्त्वात्॥ साधनस्यवन्हेरव्यापकं । यत्र
वन्हिस्तत्रार्द्रेंधनमित्यसत्त्वात् ॥ तप्तायःपिंडेवन्हिसत्त्वेप्यार्द्रेंधनाभावात् । द्वितीयोयथा । वायुःप्रत्यक्षःप्रत्यक्षस्पर्शाश्रयत्वातइत्यत्रोद्भूत
रूपवत्त्वमुपाधिः । तस्ययत्रप्रत्यक्षत्वंतत्रोद्भूतरूपवत्त्वमितिनकेवलसाध्यव्यापकत्वं । रूपेव्यभिचारात् । किंतुद्रव्यत्वलक्षणोयःपक्षध
र्मस्तदवच्छिन्नबहिःप्रत्यक्षत्वंयत्रतत्रोद्भूतरूपवत्त्वमितिपक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव । आत्मनिव्यभिचारवारणायबहिःपदं।यत्र
प्रत्यक्षस्पर्शाश्रयत्वंतत्रनोद्भूतरूपवत्त्वमितिसाधनाव्यापकत्वंचवायावुद्भूतरूपवत्त्वस्यविरहात् । तृतीयोयथा प्रागभावोविनाशीजन्यत्वा
दित्यत्रभावत्वमुपाधिः । तस्ययत्रविनाशित्वंतत्रभावत्वमितिनकेवलसाध्यव्यापकत्वमस्ति । प्रागभावेभावत्वविरहात् । किंतुजन्यत्वरूप
साधनावच्छिन्नविनाशित्वंयत्रतत्रभावत्वमितिसाधनावच्छिन्नसाध्यव्यापकत्वमेव । यत्रजन्यत्वंतत्रनभावत्वमिति । साधनाव्यापक

त्वेचध्वंसेभावत्वविरहात् । अथवन्हिमान्धूमादित्यत्रमहानसभिन्नत्वलक्षणपक्षधर्मावच्छिन्नसाध्यव्यापकत्वादितिचेन्न । पक्षधर्मेत्यत्रपक्ष
दृष्टांतोभयसाधारणधर्मस्यैवविवक्षितत्वात् । अथतर्हिंगतमुपाधिलक्षणमितिचेन्न । निरवच्छिन्नसाध्यपक्षदृष्टांतोभयसाधारणधर्मसाधना
न्यतरावीच्छिन्नसाध्यान्यतरव्यापकत्वेसाधनाव्यापकउपाधिरिति । निरवच्छिन्नसाध्यशब्देनशुद्धसाध्यमुदासीनधर्मावच्छिन्नसाध्यंवात
द्व्यापकत्वेसतिवापक्षदृष्टांतोभयसाधारणधर्मावच्छिन्नसाध्यव्यापकत्वेसतिवासाधनावच्छिन्नसाध्यव्यापकत्वेसतिसाधनाव्यापकउपाधि
रितिपरिष्कारः । साध्यव्यापकत्वंचसाध्यसमानाधिकरणात्यंताभावाभावाप्रतियोगित्वं । साध्योधूमस्तत्समानाधिकरणोऽत्यंताभावोघटा
द्यत्यंताभावस्तत्प्रतियोगीघटादिरप्रतियोगीआर्द्रेंधनसंयोगइत्युपाधित्वंतस्य। साधनाव्यापकत्वंचसाधनवन्निष्ठात्यंताभावप्रतियोगित्वं ।
साधनंवह्निस्तद्वांस्तप्तायोगोलकंतन्निष्ठोऽत्यंताभावआर्द्रेन्धनसंयोगस्यतत्प्रतियोग्यार्द्रेंधनसंयोगइत्युपाधित्वमित्यनुमानं॥अथोपमानं॥
उपमितिकरणमुपमानम् । तत्रिविधं।सादृश्यविशिष्टपिंडज्ञानंवैधर्म्यपिंडज्ञानमसाधारणधर्मविशिष्टपिंडज्ञानञ्च । तद्यथागवयादिशब्दाः
क्वचिच्छाक्ताइतिजानताकीदृग्गवयइत्यारण्यकेपृष्टेगोसदृशोगवयइतितेनोत्तरितेकदाचिदरण्यंगतस्यतत्पिंडदर्शनाद्गोसदृशोगवयइत्या
प्तोक्तंस्मरतोऽयंगवयशब्दवाच्यइत्युपमितिर्जायते । तत्रगोसदृशोयंपिंडइतिसादृश्यविशिष्टपिंडज्ञानंकरणं ।वाक्यार्थस्मरणमवांतरव्या
पारः उपमितिःफलम् । एवंकीदृशोश्वइतिपृष्टेगवादिवद्विशफःस्वल्पपुच्छश्वनेत्याप्तेनोक्तेकदाचित्तत्पिंडदर्शनादयंद्विशफस्स्वल्पपुच्छ
श्वनेतिज्ञानादाप्तवाक्यस्मरणोत्तरमयमश्वशब्दवाच्यइत्युपमितिर्जायते । तत्रवैधर्म्यविशिष्टपिंडज्ञानंकरणंवाक्यार्थस्मरणंव्यापारःशक्ति
ज्ञानंफलम् । एवंकीदृश्यौषधीसर्पविषहंत्रीतिप्रश्नेनकुलदंष्ट्रधृतेत्युत्तरितेकदाचिन्नकुलदंष्ट्रायामौषधीविशेषदर्शनेसतिएतादृशीसर्पविष
हंत्रीतिज्ञानमुत्पद्यते । तत्रैतादृशीविषहंत्रीतिज्ञानंफलंवाक्यार्थस्मरणंव्यापारःनकुलदंष्ट्राघरणरूपसाधारणधर्मविशिष्टपिंडज्ञानंकरण
मित्युपमानम् ॥ अथशब्दमाह ॥ शाब्दप्रमाकरणंशब्दः । यथानदीतीरेपञ्चफलानिसंतीत्यादि । वाक्यार्थप्रमागोचरपदार्थज्ञानंशाब्द
प्रमा । अत्रपदज्ञानंकरणंपदजन्यपदार्थोपस्थितिर्व्यापारःपदोपस्थितानांमिथःसंसर्गोवाक्यार्थः । पदसमूहोवाक्यम् ॥ अर्थवाचकंपदं

तद्द्विधा ।मुख्यंगौणंच। यच्छक्तिवृत्त्यायमर्थमुपस्थापयतितत्तस्मिन्नर्थेमुख्यंयथागोघटादिव्यक्त्युपस्थापकंगोघटादिपदम् । अस्माच्छ
ब्दादयमर्थोबोद्धव्यइत्याकारकोऽनादिसंकेतः शक्तिः । यल्लक्षणावृत्त्यायमर्थमुपस्थापयतितत्तस्मिन्नर्थेगौणं। लाक्षणिकमित्युच्यते।यथागं
गायांघोषइत्यत्रतीरोपस्थापकंगंगापदं।शक्यसंबंधोलक्षणा ।यथागंगाशक्यप्रवाहस्यतीरेसंयोगसंबंधोगंगापदलक्षणा । तस्यचशब्दस्या
कांक्षायोग्यतासन्निधयःसहकारिणः । यस्यपदस्ययेनपदेनविनान्वयानुभवजनकत्वंनास्तितस्यपदस्यतेनपदेनसमभिव्याहारातआकां
क्षाघटमानयेत्यादौकारकपदस्यक्रियापदेनविनाघटकर्मकमानयनमित्यन्वयानुभवजनकत्वाभावात्कारकपदस्यक्रियापदेनसहाकांक्षाएवं
क्रियापदस्यकारकपदेनापिसहबोध्या। अतएवगौरश्वःपुरुषोहस्तीत्यादौनान्वयबोधः ।आकांक्षाविरहात् । एकपदार्थेऽपरपदार्थसंसर्गो
योग्यता।यथापयसासिंश्चतीत्यादौपयःपदार्थेसंसर्गस्यकार्यकारणभावलक्षणस्यसत्वाद्योग्यता।अतएववन्हिनासिंचतीत्यादौनान्वयबोधः।
योग्यताविरहात् पदानामव्यवधानंसन्निधिःयथागामानयेत्यादौपदानामविलंबेनोच्चारणात्सन्निधिः । अतएवैकैकशःप्रहरेप्रहरेऽसहोच्चरि
तेगामानयेत्यादौनान्वयबोधः।सन्निधेरभावात्। सोयंशब्दस्त्रिधाविधिनिषेधार्थवादभेदात् तत्रप्रवृत्तिपरंवाक्यंविधिः। यथाग्निष्टोमेस्वर्गका
मोयजेत ।ओदनकामस्तंडुलान्पचेदित्यादि।ज्योतिष्टोमनामकोयागः स्वर्गरूपेष्टसाधनं तंडुलकर्मकः पाकओदानरूपेष्टसाधनमित्युभयवा
क्यार्थः। यजेत्पचेदित्यादिविधिप्रत्ययेनेष्टसाधनत्वोपस्थापनात्। निवृत्तिपरंवाक्यंनिषेधः। यथाकलंजंनभक्षयेदिति । कलंजाभक्षणेनेष्टवि
शेषसाधनमितिवाक्यार्थः। इष्टविशेषश्चात्रपापानुत्पत्तिरेव। तथैववाक्यतात्पर्यात् । विधिनिषेधभिन्नः शब्दोर्थवादः । सतुभागवतपक्षेवि
शेषतोवर्णितएवेति । सचायंशब्दोलोकेवेदेचसमानएव। इयांस्तुविशेषः । लौकिकंतुयदाप्रोक्तंवाक्यंतदेवप्रमाणंवेदवाक्यंतुसर्वमेवप्रमाणं
भगवतउद्भूतत्वात्। प्रसंगाद्वेदविभागाद्याह।ननुकोवेदःकियत्प्रमाणःकतिधाचेतिप्रश्नेउत्तरमाह। मंत्रब्राह्मणयोर्वेदइतिलक्षणंलक्षंतुचतुरोवेदा
इतिप्रमाणं ।चत्वारश्चतइतिज्ञेयं। तेचऋग्वेदोयजुर्वेदः सामवेदोऽथर्ववेदश्चेति । तत्रऋग्वेदस्याष्टौस्थानानीहचरणव्यूहवेदैकदेशःप्रमाणंतदे
वाह।अथातश्चरणव्यूहंव्याख्यास्यामः।तत्रयदुक्तंचातुर्विध्यंचतुरोवेदाविज्ञातानिभवंति । ऋग्वेदोयजुर्वेदःसामवेदोऽथर्ववेदश्चेति । तत्रऋग्वे

दस्याष्टौस्थानानिभवंति। चर्चाश्रावकश्चर्चकःश्रवणीयपारःक्रमपारःक्रमचटःक्रमजटःक्रमदण्डश्चेति।चतुष्पारायणमेतेषांशाखाःपञ्चविधा
भवंति। शाकलाबाष्कलाआश्वलायनाःशांखायनामांडूकायनाश्चेति। तेषामध्ययनमध्यायाश्चतुष्षष्टिर्मंडलानिदशैवतु। एकर्चएकवर्गश्च
एकश्चनवकस्तथा ॥ द्वौवर्गौद्वौऋचौज्ञेयौत्रीणित्र्यर्चशतंस्मृतम् ॥ चतुःषष्टिसमाख्यातंषट्सप्तत्युत्तरंशतम् ॥ पञ्चद्वादशशतान्यष्टौविं
शोत्तराणिच ॥ तत्रपंचषट्ऋचंचसप्तपञ्चाशदुत्तरम् ॥ सप्तर्चमेकोनत्रिंशदुत्तरशतमेककम् ॥ अष्टर्चंपञ्चपञ्चाशत्वर्गाणांपरिसंख्यातं
द्वेसहस्रेषडुत्तरे । ऋचांदशसहस्राणिऋचांपञ्चशतानिच ॥ ऋचामशीतिपादश्चैतत्पारायणमुच्यते ॥ १ ॥ यजुर्वेदस्यषडशीतिभेदाभवं
ति । तत्रचर्कानांद्वादशभेदाभवंति । चर्काःह्वर्काःकठाःप्राच्यकठाःकपिष्ठलकठाश्चारायणीयावार्तंतवीयाःश्वेताअश्वतराःऔपमन्यवःपा
ताऐंडिनेयाःमैत्रायणीयाश्चेति। तत्रकठानांतुयोयोगायतुविशेषःचतुश्चत्वारिंशत्युपग्रन्थाः । तत्रमैत्रायणीयानांषड्भेदाभवंति । मान
वाःवाराहाःदुंदुभाःछागलेयाःहार्द्रवीयाःश्यामायनीयाश्चेति । तत्रहार्द्रवीयानांपंचभेदाभवंति । हार्द्रवीयासुरिगार्ग्यशार्कराक्षमाग्रावत्यवि
मृचं । तेषामध्ययनं द्वेसहस्रेशतेन्यूनेमंत्रेवाजसनेयके ॥ ऋग्गणंपरिसंख्यातंततोन्यानियजूंषिच ॥ अष्टौचरणशतानिसहस्राणिचाष्टा
विंशतिरन्याप्यधिकस्यपादमेतत्प्रमाणंयजुषांहिकेवलंसवालखिल्यंसशुक्रियंब्राह्मणश्चतुर्गुणं । तत्रमाध्यंदिनीनामध्ययनेविशेषमाह ।ऋ
चांतुपरिसंख्यातंशतान्येकोनविंशतिः । पञ्चसप्तत्यधिकंचसखिलंचसशुक्रियम् ॥ ब्राह्मणंतुशतपथंकांडानिचतुर्दश ॥ मंत्रःपदःक्रमश्चैव
चतुर्थस्याज्जटातथा ॥ क्रममालाशिलालेखाध्वजोदण्डोरथोघनः॥अष्टौविकृतयःप्रोक्ताःक्रमपूर्वामनीषिभिः॥पारस्करंगृह्यसूत्रंसूत्रंकात्या
यनंस्मृतम् ॥ षडंगैःसहितोवेदोयथोक्तफलदोभवेत् ॥ सर्वानुक्रमपदज्योतिर्यजुषांचविधानकम् ॥ कर्म्मलीप्रदीपिकाचस्वराणांव्यंजनंत
था ॥ क्रतुशेषंचसावित्रंसूत्रमंत्रप्रकाशकम् ॥ मंत्रभ्रांतिहरश्चैवशिक्षाणांपंचकंतथा ॥ मंत्रज्योतिश्चविज्ञेयामंत्राणांदीपिकातथा ॥ शे
षमध्ययनमुच्छिन्नंकल्पग्राहेषुपठ्यते ॥ तत्रतैत्तिरीयकानांद्वौभेदौभवतःखेयाःखाण्डिकेयाश्चेति । तत्रखांडिकेयानांपंचभेदाभवंति । क
लिताशाठ्यायनीहिरण्यकेशीभारद्वाज्यापस्तंबीश्चेति । तेषामष्टादशयजुःसहस्राण्यधीत्यशाखापारोभवति । तान्येवद्विगुणान्यधीत्य

पदपारोभवति । तान्येवत्रिगुणान्यधीत्यक्रमपारोभवति । षडंगान्यधीत्यषडंगविद्भवति । त्रिगुणंपठ्यतेयत्रमंत्रब्राह्मणयोःसह ॥ यजुर्वेदः
सविज्ञेयःशेषाःशाखांतराःस्मृताः ॥ शिक्षाकल्पोव्याकरणंनिरुक्तंछंदोज्योतिषमितिषडंगानि । छंदःपादौतुवेदस्यहस्तौकल्पोथपठ्यते॥
ज्योतिषामयनंचक्षुर्निरुक्तंश्रोत्रमेवच ॥ शिक्षाघ्राणंतुवेदस्यमुखंव्याकरणंस्मृतम् ॥ तस्मात्सांगमधीत्यैवब्रह्मलोकेमहीयते ॥ तथाप्रति
पदमनुपदंछंदोभाषाधर्मोमीमांसान्यायस्तर्कइत्युपांगानि । तत्रपरिशिष्टानिभवंति यूपलक्षणंछागलक्षणंप्रतिज्ञानुवाकःपरिसंख्याचरण
व्यूहश्राद्धकल्पशुल्बकानिःपार्षदमृग्यजुषीइष्टकापूर्णंप्रवराध्यायोक्थशास्त्रंक्रतुसंख्यानिगमायज्ञपार्श्वानहौत्रिकंपशवोत्थानंपूर्वलक्षणमि
त्यष्टादशपरिशिष्टानिभवंति । तत्रकठानांयोगायेणविशेषस्तुत्रप्राच्योदीच्यनिर्ऋत्याः । तत्रवाजसनेयानांपंचदशभेदाभवंति जाबालाः
बौधेयाःकाण्वाःमाध्यंदिनाःशापेयाःस्थापायनीयाःकपोलाःपौंडरवत्साःआवटिकाःपरमावटिकाःपाराशरावैणेयावैधेयावैनतेयावैजवाश्चे
ति । तेषामध्ययनंशौक्तिकंप्रवचनीयाश्चेति । मंत्रब्राह्मणकल्पानामंगानांयजुषामृचां ॥ षण्णांयःप्रतिभागज्ञःसोध्वर्युःकृत्स्नउच्यते ॥ २ ॥
सामवेदस्यकिलसहस्रभेदाआसन् । तेष्वनध्यायेष्वधीयानास्तेशतक्रतुवज्रेणाभिहताभवंति । तान्व्याख्यास्यामः । तत्रराणायणीया
नांसप्तभेदाभवंति । राणायणीयाःशाब्दमुग्याःकालेयाःमहाकालेयाःलांगलाःशार्दूलाःकौथुमाश्चेति । तत्रकौथुमानांसप्तभेदाभवंति ।
आसुरायणाः वार्त्तायणीयाः प्रांजलिर्वैनभृतःप्राचीनयोग्यानैगेयाः कौथुमाश्चेतितेषामध्ययनमशीतिशतमाग्नेयंयावमानंचतुःशतमैंद्रंतुषट्
विंशपाकंनिगायंतिसामगास्तान्यधीत्यचण्डाःप्रयतरोभवतिशिष्टान्यधीत्यशिष्टविंशतिकोभवति । तत्रकेचित्पुनरौच्छिष्टंपूतंसामतत्सं
ज्ञाधातुलक्षणमितिविधीयते।तेषामध्ययनंअष्टौसामसहस्राणिसामानिचचतुर्दश ॥ अष्टौशतानिनवतिदशसप्तसवालखिल्यःससौपर्णाःसार
ण्यकानिसौर्याणिएतत्सामगणंस्मृतम् ॥ ३ ॥ अथर्ववेदस्यनवभेदाभवंति । पिप्पलाःशौनकाःदामोदाःतोत्तायनाःजाबालाःब्रह्मपलाः
शाकुनाखीदेवदर्शीचारणविद्याश्चेति । तेषामध्ययनंद्वादशैवसहस्राणिब्रह्मत्वंचाभिचारकम् ॥ एतद्वेदरहस्यंस्यादथर्ववेदस्यविस्तरम् ॥
तेषांपंचकल्पानिभवंति।कल्पेकल्पेपंचशतानिभवंति।नक्षत्रकल्पोविधानकल्पोवितानकल्पःसंहिताविधिरभिचारकल्पःशांतिकल्पश्चेति



तत्रसर्वेषांवेदानामुपवेदाभवंति ऋग्वेदस्यायुर्वेदउपवेदः।यजुर्वेदस्यधनुर्वेदउपवेदः । सामवेदस्यगांधर्ववेदउपवेदः । अथर्ववेदस्यशिल्पि
शास्त्राणिसार्थशास्त्रंचेत्याहभगवान्कात्यायनः ॥ स्कंदोवायइमेवेदाश्चत्वारस्तेषामेकैकस्यकीदृशंरूपंवर्णविभागाः ॥ अत्रोच्यते ऋग्वेदः
पद्मपत्राक्षः सुविभक्तग्रीवः कुंचितकेशश्मश्रुः श्वेतवर्णः प्रमाणं पञ्चवितास्तिमितं।यजुर्वेदः पिंगाक्षः कृशमध्यः स्थूलगलकपोलस्ताम्रवर्णः
कृष्णवर्णोवाप्रादेशषट्दीर्घः।सामवेदोनित्यस्रग्वी सुप्रीतः शुचिः शुचौवासीशमीदान्तोचर्मीबृहच्छरीरः कांचननयनः आदित्यवर्णः नवरत्नि
मात्रः। अथर्ववेदस्तीक्ष्णप्रचंडःकामरूपीविश्वात्माविश्वकर्ताक्षुद्रकर्मास्वशाखाध्यायीप्राज्ञोमहान्नीलोत्पलवर्णःस्वदारसंतुष्टःदशरत्निमा
त्रः । ऋग्वेदस्यात्रेयगोत्रः सोमदेवतागायत्रीछंदः । यजुर्वेदस्यकाश्यपगोत्रइंद्रदेवतात्रिष्टुप्छंदः । सामवेदस्यभारद्वाजगोत्रइंद्रोदेवताज
गतीछंदः । अथर्ववेदस्यवैखानसगोत्रः ब्रह्मदेवताअनुष्टुप्छंदः। यइमेवेदानांनामरूपगोत्रप्रमाणछंदोदेवतावर्णादीनिवर्णयेत्ससर्वविद्योभव
तिजातिस्मरोजायतेजन्मजन्मनिवेदपारगोभवतिअव्रतीव्रतीभवतिअब्रह्मचारीब्रह्मचारीभवतियइदंचरणव्यूहंगर्भिणीशृणुयात्सापुत्रान्लभ
तेयइदंश्राद्धकालेपठेत्सअक्षयंश्राद्धंपितॄणांसमर्पयतियइदंपठेत्सपंक्तिपावनोभवतियइदंपर्वपर्वसुपठेत्सविधूतपाप्माभवतिब्रह्मभूयायगच्छ
ति । इतिधृतिशिवाशक्तिचत्वारोवेदपत्नीकाभवंति। यज्ञकालेईशानादिव्यवस्थिताः । लक्षंतुचतुरोवेदालक्षंभारतमेवच ॥ लक्षंतुव्या
करणंप्रोक्तंचतुर्लक्षंतुज्यौतिषमितिवेदविभागादिकिंबहुनेतिशब्दनिरूपणं ॥ अन्यान्यर्थापत्यादीन्यपिकैश्चित्प्रमाणानिस्वीकृतानितेषा
मेष्वेवांतर्भावोस्ति । तत्प्रकारस्त्वन्यत्रानुसंधेयः । येषामत्रलक्षणंनोक्तंविस्तरभियातेषांजातिघटितंपृथिवीत्वजातिमतिपृथिवीत्यादिरू
पंध्येयंसुधीभिः। एवमेवषोडशपदार्थानामपिसप्तस्वेवांतर्भावोबोध्यः । इहचपदार्थानामुद्देशलक्षणोअनभिज्ञजनबोधायसंक्षेपेणोक्तेपरी
क्षात्वनुपयोगान्नकृता । लक्ष्यतावच्छेदकमात्रेणलक्ष्यसंकीर्त्तनमुद्देशः । असाधारणधर्मोलक्षणं । असाधारणत्वंचअव्याप्त्यादिदोषत्रय
रहितत्वं । तथाहिलक्षतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः । यद्धर्मावच्छिन्नंलक्ष्यंसधर्मोलक्ष्यतावच्छे
दकः । सचयत्रास्तेसलक्ष्यतावच्छेदकावच्छिन्नः । यथागोः शृंगित्वंलक्षणंकृतंचेत्तदतिव्याप्तिग्रस्तत्वान्नकार्यं । कथंलक्ष्यागौर्लक्ष्यता

वच्छेदकंगोत्वं । तदवच्छिन्नागौस्तत्प्रतियोगिताकभेदोमहिष्यादौतत्रसामानाधिकरण्यंशृंगित्वस्येति । लक्ष्यतावच्छेदकसामानाधिक
रण्यात्यंताभावप्रतियोगित्वमव्याप्तिः । यथागोर्नीलरूपवत्त्वंलक्षणम् । लक्ष्यागौःलक्ष्यतावच्छेदकंगोत्वंतत्सामानाधिकरण्यात्यंताभा
वः। श्वेतगविनीलरूपवत्त्वस्यतत्प्रतियोगित्वंनीलरूपवत्त्वेस्तीति । लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वमसंभवः । यथागोरे
कशफत्वंलक्षणं ॥ लक्ष्यागौर्लक्ष्यतावच्छेदकंगोत्वंतद्व्यापकीभूताभावएकशफत्वाभावस्तत्प्रतियोगीत्वमेकशफत्वेस्तीति । परीक्षातुउद्दे
शलक्षणयोरुपपत्त्यनुपपत्त्यन्यतरफलकोविचारइत्यलंप्रसक्तानुप्रसक्तेन। किञ्चयस्मिंस्तर्कशास्त्रेऽन्यशास्त्राभ्यासेनसूरयोविद्वांसोपिसूक्ष्म
रूपेणपदार्थविवेचनेमुह्यंति । प्रतियोग्यनुयोगिसमवेतावच्छेदकादिशब्दाकर्णनेनैवाकुलीभवंतीतिभावः । यत्रशास्त्रेत्रयाणांलक्ष्यलक्षणप
रीक्षाणांसर्गोऽमृषा। तदुक्तमेवाधस्तात्दृष्टांतस्तूक्तप्रायएव। किंभूतंशास्त्रंब्रह्मशुद्धं ॥ अनेनयोधीतेगौतमीविद्यांसशृगालत्वमाप्नुयादिति
शापकलंकरहितमितिसूचितं। शप्तातुगौतमश्चार्कबंधुश्चेत्यमरोक्तेर्नास्तिकविद्यैवनेयमितिभावः । पुनःस्वेननिजेनधाम्नाप्रभावेणपदार्थत
त्वविवेचनरूपेणनिरस्तोपास्तःकुहकएकविंशतिदुःखलक्षणःक्लेशोयेनतत्तथा। अतएवात्यंतिकैकविंशतिदुःखध्वंसोमोक्षइतितैर्मोक्षलक्षणं
कृतमिति । एतेनपदार्थविवेचनस्यमोक्षफलकत्वमपिध्वनितं। आत्यंतिकत्वञ्चस्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम्॥इदा
नींशुकदुःखध्वंसस्यास्मदीयदुःखप्रागभावासमानकालिकत्वात्स्वेत्यादि । इदानीमस्मदीयदुःखध्वंसस्यसुषुप्तिकालेदुःखासमानकालि
कत्वसत्वात्तत्प्रागभावेति उपांत्यदुःखध्वंसस्यतत्प्रागभावासमानकालिकत्वाद्दुःखेति।तादृशश्चमोक्षस्तत्त्वज्ञानेनात्मनिजन्यते॥ तद्यथात
त्वज्ञानान्मिथ्याज्ञानवासनानिवृत्तौरागद्वेषमोहानांनिवृत्त्याकर्मांतरेप्रवृत्तिरेवन। पूर्वसंस्कारात्प्रवृत्त्याकर्मोत्पत्तावपिनादृष्टोत्पत्तिः॥अदृष्टहे
तुमिथ्याज्ञानस्यतत्त्वज्ञानप्रागभावस्यवाऽभावात् । तथाचोक्तंवाचस्पतिमिश्रैः मिथ्याज्ञानसलिलावसिक्तायामात्मभूमौधर्माधर्मावंकुरंज
नयतइत्यादिना । प्राचीनादृष्टंचज्ञानाग्निसहकृतयोगवशात्कायव्यूहेनयुगपत्सर्वभोगान्नश्यति। तथाचपूर्वकर्मसमाप्तौभोक्तव्यकर्मांतराभ
वाज्जन्माभावेसिद्धेवर्तमानशरीरभोग्यसर्वदुःखनाशसिद्धौचात्यंतिकदुःखनिवृत्तिरिति । तथाचअक्षपादीयंसूत्रंदुःखजन्मप्रवृत्तिदोषमिथ्या

ज्ञानानामुत्तरोत्तरापायेतदनंतरापायादपवर्गः ॥ इति । एकविंशतिदुःखानिशरीरंषडिंद्रियाणि षाड्विषयाः षड्बुद्धयःसुखंदुःखंचेतिदुः
खानुषंगित्वाच्छरीरादौगौणदुःखत्वम् । नन्वेकविंशतिदुःखांतर्गतयोर्मनःश्रवणयोर्नित्यत्वाकथंतन्नाशइतिचेन्न ॥ यद्रूपविशिष्टस्य
श्रवणस्यज्ञानद्वारादुःखहेतुतयादुःखत्वंतद्रूपस्यकर्णशष्कुल्यानाशेनतद्विशिष्टश्रवणेंद्रियरूपदुःखस्यनाशात्। एवमात्मसंयोगरूपव्यापा
रविशिष्टस्यैवमनसोज्ञानद्वारादुःखरूपतयाव्यापारनाशेनतद्विशिष्टमनोरूपदुःखस्यनाशसंभवादितिविशेषणाभावेविशिष्टाभावादिति। पु
नःकिंभूतंसत्यंपरंसत्यंवेदंपिपर्तिपालयतीतिसत्यंपरं । खजत्रप्रत्ययः । खित्त्वान्मुम्। तथाचाक्षपादीयंसूत्रंकंटकवदावरकमिदंशास्त्रंतत्त्वं
तुबादरायणात्सिद्धम् ॥ इतितर्कशास्त्रपक्षः ॥ ९७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥अथपुष्यनक्षत्रपक्षः॥वयंतत्पुष्यनक्षत्रंसदाहृदाधीमहि। तत्किंयत्रत्रयाणांग्रहवेधविरुद्धतारत्वविलोमगत्वरूपाणांसर्गोरचनोमृषा।यथाते
जोवारिमृदांविनिमयोमृषा । तदुक्तंश्रीपतिनाग्रहेणविद्धोप्यशुभान्वितोपिविरुद्धतारोपिविलोमगोपि । करोत्यवश्यंसकलार्थसिद्धिंविहा
यपाणिग्रहमेवतिष्यः ॥ इति।यतोयस्मिपुष्येन्वयाद्गमनादाद्यस्यगमनकारणस्वाभिलषितस्यजन्माविर्भावोस्ति। पुष्यर्क्षेगमनंकार्यंपुष्यः
सर्वार्थसाधकः ॥ इतिहोराशास्त्रात् । यःपुष्यइतरतइतरेभ्यऋक्षग्रहलग्नादिभ्यः स्वराट्स्वतंत्रः । इतरेतुनस्वतंत्राः । तदुक्तंश्रीपतिना
परकृतमखिलंनिहंतिपुष्योनखलुनिहंतिपरस्तुपुष्यकृत्यम् । ध्रुवममृतकरेष्टमेपिपुष्येविहितमुपैतिसदैवकर्मसिद्धिमिति । किञ्चयतोय
स्यब्रह्ममहत्त्वमर्थेषुकार्यसिद्धिष्वभिज्ञोब्रह्मादिकवयेनारदायतेने । पुष्योविघ्नविनाशकारणमिहपुष्योहिसर्वार्थकृत्पुष्यःसर्वविदिक्षुदिक्षुगम
नेशस्तामतःसर्वशः ॥ पुष्योयोगिनिकालशूलकुतिथिप्रोक्तंहरेत्सर्वथापुष्योनारदसर्वतोहिबलवान्सिंहोमृगाणांयथेतिसंहितायाम् । य
स्मिन्पुष्येसूरयोविद्वांसस्तन्माहात्म्यज्ञायेतेनमुह्यंति । किंतुतस्मिन्नेवसर्वकार्याणिकुर्वंतीतिभावः । तेनेतिपदद्वयंशेषः । ननुविवाहे
स्यकथंनसामर्थ्यमितिचेदत्राह । विवाहेब्रह्मशप्तत्वान्नसामर्थ्यं । तदुक्तंकेशवेनप्राचेतसःप्राहशुभंभगर्क्षंसीतातदूढानसुखंसिषेवे ॥ पुष्य
स्तुपुष्यत्यभिकाममेवप्रजापतेरापसशापमस्मिन् ॥ अस्मिन्विवाहे । किंभूतंपुष्यंस्वेननिजेनधाम्नाप्रभावेणनिरस्तोऽपास्तो।विष्टया

दिक्तः कुहकोऽनर्थोयेनतं । तदुक्तं । सविष्टिर्भौमार्कशनैश्चरोवाग्रहोपतप्तःकुतिथिस्थितोवा ॥ विरामयुक्तोप्यविरामयुक्तस्तथापिपुष्यः सकलार्थपूज्यः ॥ इति । पुनःपरंसर्वर्क्षोत्कृष्टं । तदुक्तंसिंहोयथासर्वचतुष्पदानांतथैवपुष्योबलवानुडूनामिति । पुनःसत्यंस्वहितकार्यसत्यकरम् । सर्वकार्यंभवेत्सत्यंपुष्येयत्क्रियतेनरैरिति ॥ इतिपुष्यनक्षत्रपक्षः ॥९८॥ ॥ ॥ ॥

॥ अथकलियुगपक्षः ॥ ॥ कलियुगस्यहरिनामतःसर्वसंपादकत्वेनश्रेष्ठत्वंमन्वानःश्रीव्यासोऽर्जुनंप्रथमंवेदेदितिन्यायेनवादौकलियुगंध्यायति । वयंतंकलियुगंसदाहृदाधीमहि । तंकंयत्रत्रयाणामसत्याशौचादयानांसर्गोऽमृषासत्यः । कथंयथातेजआदीनांवास्तवरूपममृषा सत्यंनास्तिदयानास्तिनास्तिशौचंकलौयुगे ॥ इतिपुराणात् । यतोयस्यकलियुगस्याद्याद्ब्रह्मणःसकाशाज्जन्म । तदुक्तंब्रह्मवैवर्तीयकाशीमाहात्म्ये । वेदान्प्राप्यततोवेधाःससर्जविविधाःप्रजाः ॥ सत्यादीनियुगान्यादौसृष्ट्वाधर्मान्विभक्तवानित्युक्त्वा । कलिस्वरूपमपि । पिशाचवदनःक्रूरःकलिःकलहवल्लभः ॥ वामेनशिश्नंदक्षेणजिव्हांधृत्वाननर्तच । पाणिनापामरैस्तुल्यःपुण्यापुण्यविमिश्रकः ॥ ब्रह्मणोग्रेहसन्खिद्यन्नुद्यन्मुह्यन्व्यवस्थितः ॥ इत्यादिनोक्तं । सनत्कुमारसंहितायांसूर्याद्युगानामुत्पत्तिरुक्ता । तथाहि ॥ भास्करउवाच । शृण्वन्नूरोभवंतोपिवालखिल्याश्चनारद ॥ ब्रह्मविष्णुमहेशाद्यैरेकदाप्रार्थितस्त्वहम् ॥ कथंतवगतिज्ञानंजायतेतद्वदस्वमे ॥ एवंतैःप्रार्थ्यमानोहिह्लताःस्वांगांशसंभवाः ॥ चत्वारएवपुरुषायुगरूपामहोज्ज्वलाः ॥ इत्युक्त्वा सत्यादित्रयस्वरूपमुक्त्वाकलिस्वरूपमुक्तवांश्चतुर्थोमदनोन्मत्तःकराभ्यांलिंगपीडकः ॥ स्कंधयोर्दत्तयुवतिर्हास्यघूर्णितलोचनः ॥ इति । विरिंच्यंगसमुद्भूतःकलिःकालमलोयुगः ॥ रीतियंत्रंस्तरीपानसाधनंनिजनामकम् ॥ वामेकरेदधद्दक्षेशिश्नंस्कंधेस्त्रियंतथा ॥ समागतस्तंगृहिणःकुतोवृत्तंतवेदृशम् ॥ सचाहशृणुभोब्रह्मन्नहंकलियुगाह्वयः ॥ मत्कालेयेनरास्तेस्युःशिश्नजिह्वावशस्थिताः ॥ मन्नामकमिदंयंत्रंसर्वान्वर्णांस्तथाश्रमान् ॥ एकीकरिष्यतिब्रह्मन्साक्षान्मद्रूपमेवतदितिकौशिकसंहितायां । यःकलिःस्वराट् स्वान्स्वसंबंधिनोऽधर्मानृतकामक्रोधादीन्राजयतिप्रकाशयतीतिस्वराट् । तदुक्तंसनत्कुमारसंहितायां कलिनैव । सर्वधर्मविहीनोहंकलिःसत्यविवर्जितः ॥ अयुतंचचतुर्लक्षंसहस्रद्वितयंतथा ॥ मत्कालपरिमाणंतुप्रेरयामीदृशींधियम् परस्त्री



गमनेद्यूतेचौर्येछद्मनिकूटके ॥ पैशुन्येवृत्तिलोपेचमद्यमांसादिभक्षणे ॥ मयिस्वल्पायुषोलोकाबहुधाविधवांगनाः ॥ सर्वेलोकाजारजाताःशिश्नोदरपरायणाः ॥ वाममार्गरतामातृभगिनीभोगकारकाः ॥ वार्द्धकेबहुधासर्वैर्निर्द्धनारोगसंयुताः ॥ ब्राह्मणाःशूद्रकर्माणः शूद्राब्राह्मणवृत्तयः ॥ युद्धकूटाःसर्वजनाः पतिंत्यक्ष्यंतिसंगरे ॥ स्वल्पेनहेतुनानार्योभर्तृत्यागविधायकाः ॥ जातिवंध्याकाकवंध्यामृतवत्साभवंतिहि ॥ विद्यालक्ष्मीकलाद्याश्चनीचेष्वेवरमंतिहि । दासीभोगरतालोकाः परित्यज्यकुलस्त्रियम् ॥ एवंधर्मंकरिष्यामिभ्रातृधर्मविनाशनः ॥ इति । ग्रंथांतरेतुधूमपानरतास्सर्वेभविष्यंतिद्विजाःकलौ ॥ धूमपानंमद्यपानंसमंयंत्रेणसेवितम् ॥ ब्राह्मण्यनाशकंविप्राःसर्वोच्छिष्टमिदंयतः ॥ अधःशिराऊर्ध्वपादःकीलितः स्तंभकद्वये ॥ धूमपानरतोनित्यंतिष्ठत्याब्रह्मवत्सरम् ॥ भगीरथायसंप्रोक्तमिदंहिसमवर्तिनेति । यतोयस्य कलेरन्वयात्संबंधादर्थेष्वभिज्ञोतिविज्ञोपिइतरतःपामरोनीचोभवति । धर्मज्ञोप्यतिनिपुणःकलिसंगतोभवेन्नूनम् । नीचकर्मपरिसेवीवार्ताकान्यजनस्येत्याभियुक्तोक्तेः । यःकलिरादिकवयेब्रह्मणेब्रह्मनिजमहत्वंतेने । विनाश्यैवान्यधर्माणिनिजधर्मंप्रवर्तये ॥ मद्धर्मोल्लंघिनोमर्त्यान्पीडयाम्यहमव्रजेतिसंहितायांकव्युक्तेःसचाहशृणुभोब्रह्मन्नित्यादिनापूर्वमप्युक्तमेवेति । सर्वंचैतदग्रेवक्ष्यत्यापि । यदामायानृतंतंद्रानिद्राहिंसाविषादनम् ॥ शोकोमोहोभयंदैन्यंसकलिस्तामसस्स्मृतः ॥ यस्मात्क्षुद्रदृशोमर्त्याःक्षुद्रभाग्यामहाशनाः ॥ कामिनोवित्तहीनाश्चस्वैरिण्यश्चस्त्रियोसतीः ॥ दस्यूत्कृष्टाजनपदावेदाःपाखंडदूषिताः ॥ राजानश्चप्रजाभक्षाःशिश्नोदरपरायणाः ॥ अव्रताबटवोशौचाभिक्षवश्चकुटुंबिनः ॥ तपस्विनोग्रामवासान्यासिनोह्यर्थलोलुपाः ॥ ह्रस्वकायाभूर्यपत्यामहाहारागतह्रियः । शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ पणयिष्यंतिवैक्षुद्राःकिराताःकूटकारिणः ॥ अनापद्यपिमंस्यंतिवार्तांसाधुजुगुप्सिताम् ॥ पतिंत्यक्ष्यंतिनिर्द्रव्यंभृत्याअप्यखिलोत्तमम् ॥ भृत्यंविपन्नंपतयः कौलंगाश्चापयस्विनीः ॥ पितृभ्रातृसुहृज्ज्ञातीन्हित्वासौरतसौहृदाः ॥ ननांदृश्यालसंवादादीनाःस्त्रैणाःकलौनराः ॥ शूद्राःप्रतिग्रहीष्यंतितपोवेशोपजीविनः ॥ धर्मंवक्ष्यंत्यधर्मज्ञाअधिरुह्योत्तमासनम् ॥ नित्यमुद्विग्नमनसोदुर्भिक्षकरकर्शिताः निरन्नेभूतलेराजन्ननावृष्टिभयातुराः ॥ वासोन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाःपिशाचसंदर्भाभविष्यंतिकलौजनाः ॥ कलौ

काकिणिकेप्यर्थेविगृह्यत्यक्तसौहृदाः त्यक्ष्यंतिचप्रियान्प्राणान्हनिष्यंतिस्वकानपि ॥ नरक्षिष्यंतिमनुजाःस्थविरौपितरावपि ॥ पुत्रान्स
र्वार्थकुशलान्क्षुद्राःशिश्नोदरंभराः ॥ इति । यद्यस्मिन्कलियुगेसूरयोपिविद्वांसोपिमुह्यंति । श्रुतिस्मृत्युदितधर्मेषुकुतर्कान्संभाव्यपाखंडि
नोभवंति । कलिजातकालवेपादिभक्तभासप्रवर्तितमार्गेष्वासक्तचित्ताभवंतीतिभावः । तदुक्तं । शाठकोपाःकालवीयास्तांतुवायाश्चतौलि
काः ॥ एतेचान्येचबहवोभविष्यंतिकलौयुगे ॥ वेदतद्धर्महंतारःस्वयाकल्पितभाषया ॥ भक्ताभासानतेभक्ताःकलिवृद्धिकराहिते ॥ इतिपा
खण्डविवेके । वक्ष्यत्यपि । कलौनराजन्जगतांपरंगुरुंत्रैलोक्यनाथानतपादपंकजम् ॥ प्रायेणमर्त्याभगवंतमच्युतंत्यक्ष्यंतिपाखंडविभि
न्नचेतसः ॥ इति ॥ किंभूतंस्वेनासाधारणेनधाम्नाप्रभावेणसंकल्पमात्रेणापिपुण्यफलप्रदत्वरूपेणनिरस्तानाममराणामपिकुहकंविस्माप
कं । तद्वक्ष्यति । नानुद्वेष्टिकलिंसम्राट्सारंगद्रवसारभुक् ॥ कुशलान्याशुसिध्यंतिनेतराणिकृतानियदिति । एकदाविस्मितादेवाः कलिमू
चुः समागतम् ॥ अहोतेवैभवंलोकेकलेःपुण्यफलंयतः ॥ संकल्पादेवतनुषेपापंतुकृतमेवहीतिपुराणांतराच्च । पुनःसत्यंसत्यरूपपरकृष्ण
कीर्त्यैवतत्प्रापकं । तदुक्तंकलावनंतदोषाढ्येह्यस्तिह्येकोमहान्गुणः ॥ कीर्तनादेवकृष्णस्यमुक्तबंधः परंव्रजेदिति । पुनःपरमुत्कृष्टमार्यस
भाजितत्वात् । तद्वक्ष्यति । कलिंसभाजयंत्यार्यागुणज्ञाःसारभागिनः ॥ यत्रसंकीर्तनेनैवसर्वः स्वार्थोभिलभ्यते । नह्यतःपरमोलाभोदे
हिनांभ्राम्यतामिह ॥ यतोविंदेतपरमांशांतिंनश्यतिसंसृतिं ॥ कृतादिषुप्रजाराजन्कलाविच्छन्तिसंभवम् ॥ कलौखलुभविष्यंतिनारा
यणपरायणाः ॥ क्वचित्क्वचिन्महाराजद्राविडेषुचभूरिशः ॥ ताम्रपर्णीनदीयत्रकृतमालापयस्विनी ॥ कावेरीचमहापुण्याप्रतीचीचमहान
दी॥येपिबंतिजलंतासांमनुजामनुजर्षभ ॥ प्रायोभक्ताभगवतिवासुदेवेऽमलाशयाः ॥ इतिकलिपक्षः ॥९९॥ ॥ ॥ ॥
॥ अथसंन्यासाश्रमपक्षमाह ॥ ॥ वयंतंसंन्यासाश्रमंसदाहृदाधीमहि । तंकंयत्रत्रिसर्गस्तिसृणांपुत्रैषणावित्तैषणालोकैषणानांसर्गोमृषा
मिथ्या । कथंयथातेजोवारिमृदांविनिमयोमृषा । यद्वातिसृणांलोकवासनादेहवासनाशास्त्रवासनानांसर्गोमृषा । एतद्धस्मवैतत्पूर्वेविद्वांसः
प्रजानकामयंतेकिंप्रजाकरिष्यामोयेषांनोयमात्मालोकइतितेहस्मपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायभिक्षाचर्यंचरंतीति



श्रुतेः । वित्तैषणांयज्ञदानैर्गृहैर्दारसुतैषणाम् ॥ आत्मलोकैषणांदेवकालेनविसृजेत्पुनः ॥ ग्रामेत्यक्तैषणास्सर्वेययुर्धीरास्तपोवनमितिवक्ष्य
माणस्मृतेश्च । पुत्रैषणातुपुत्रामेभवेयुस्तेचशीलश्रुताचारसम्पन्नाश्चिरजीविनोभवेयुरित्यादिरूपा । वित्तैषणाचवित्तंमेबहुभवेदल्पव्यय
श्चमेस्यात्यथाकथंचिद्धनंसम्पादयामीत्येवंरूपा । लोकैषणातुइहलोकेपरलोकेचमेसुखंस्यादित्यादिरूपेतिविवेकः । अथवासनाविवेकः य
थासर्वेमांननिंदेयुःकिंतुस्तूयुस्तथाहमाचरिष्यामीत्यभिनिवेशोलोकवासना । साचसम्पादयितुमशक्या । तदुक्तं विद्यतेनखलुकश्चिदुपा
यःसर्वलोकपरितोषकरोयः ॥ सर्वथास्वहितमाचरणीयंकिंकरिष्यतिजनोबहुजल्पः ॥ इतितत्राभिनिविष्टस्यतत्त्वज्ञानंनभवतीतिभावः ।
देहवासनाद्विविधाआत्मवासनातत्संबंधिवासनाचेति । मनुष्योहमित्यात्मवासना । इतरापिद्विधाशास्त्रीयालौकिकीच । आद्याद्विधा गु
णाधानप्रयुक्तादोषापनयनप्रयुक्ताचेति । गंगास्नानशालिग्रामोदकादिनाद्या । शौचाचमनादिनाद्वितीया । लौकिक्यपिद्विधा तैलपान
मरिचभक्षणादिनाद्या । अभ्यंगस्नानादिनाद्वितीयेति । देहवासनायाज्ञानप्रतिबंधकत्वंस्फुटमेव । शास्त्रवासनातुत्रिधापाठव्यसनार्थव्य
सनानुष्ठानव्यसनभेदात् । त्रिधैवदुःसम्पाद्या । पाठस्यदुःसम्पाद्यत्वंतैत्तिरीये भरद्वाजोहवैत्रिभिरायुभिर्ब्रह्मचर्यमुवासतंहजीर्णंस्थविरंश
यानमिंद्रउपव्रज्योवाचभरद्वाजयत्तेचतुर्थमायुर्दद्यांकिमेतेनकुर्याइतिब्रह्मचर्यमेवैतेनचरेयमितिहोवाच । तंहत्रीन्गिरिरूपान्विज्ञातानिद
र्शयांचकारतेषांहैकैकस्मान्मुष्टिनाददेसहोवाचभरद्वाजेत्यामंत्र्यहवेदावाएतेअनंतावैवेदाएतद्वाएतैस्त्रिभिरवोचथाअथइतरदननूक्तमेवहीमं
विद्धीति । पंचसप्ततिवार्षिकंस्वाध्यायमधीयानंभरद्वाजंदृष्ट्वाचतुर्थमायुर्दास्यामीत्युक्तवांस्तच्छ्रुत्वाभरद्वाजोध्ययनेनमतिंचकार । पश्चात
दोषदर्शनेनततोनिवार्यतस्मैब्रह्मविद्यामुपदिदेशेत्युपाख्यानश्रुतेरर्थः । अतएवाहुः अनंतशास्त्रंबहुवेदितव्यमल्पश्चकालोबहवश्चविघ्नाः॥
यत्सारभूतंतदुपासितव्यंहंसोयथाक्षीरमिवांबुमिश्रमिति । अधीत्यचतुरोवेदान्धर्मशास्त्राण्यनेकशः ॥ यस्तुब्रह्मनजानातिदर्वीपाकरसंय
था ॥ बहुशास्त्रकथाकंथारोमंथेनवृथैवाकिम् ॥ अन्वेष्टव्यंप्रयत्नेनतत्त्वज्ञैर्ज्योतिरांतरमिति । तस्माद्दर्थव्यसनमपिदुःसंवादमेव । अनुष्ठान
व्यसनंविष्णुपुराणेनिदाघस्योपलभ्यते । ऋभुणापुनःपुनर्बोध्यमानोपिनिदाघोऽनुष्ठानव्यसनेनतत्त्वंनबुबुधेतृतीयपर्यायेऽतिक्लेशेनसर्वं

परित्यागेनतत्त्वंविज्ञातवान् । अतोनुष्ठानव्यसनमपितत्त्वज्ञानप्रतिबंधकमेव । एतदभिप्रेत्यैव नलोकचित्तग्रहणेरतस्यनभोजनाच्छादन
तत्परस्य ॥ नशब्दशास्त्राभिरतस्यमोक्षोनचातिरम्यावसथप्रियस्येति । यतोयस्यसंन्यासस्याद्यस्यविष्णोर्जन्म । वक्ष्यतितत् गृहाश्र
मोजघनतोब्रह्मचर्यंहृदोमम ॥ वक्षःस्थलाद्वनेवासोन्यासःशीर्षणिसंस्थितः॥ इति।किंचयतोयस्यान्वयात्सेवनात्अभितोजानातिनियोजय
तिलोकाञ्शास्त्रोपदेशेनस्वस्वकर्मणीत्यभिज्ञोब्राह्मणः॥सर्वेभ्यःसर्वधर्माणामुपदेष्टाद्विजोत्तमः॥ इतिस्मृतेः । विप्रस्यैवाधिकारोस्तिधर्ममा
त्रोपदेशनेइतिसंहितोक्तेश्च । अर्थेष्वैहिकामुष्मिकेषुभोग्येषुतदर्थककर्मसुचइतात्यक्तारातिरभिलाषोयस्यसइतरतस्त्यक्तैहिकामुष्मिकोभवे
दित्यर्थः । एतद्वृत्तंप्रैषमंत्रेषुस्फुटतरम् । एतेनविप्रस्यैवसंन्यासेधिकारइतिसूचितं । वक्ष्यत्यापि विप्रस्यैवंसंन्यसतोदेवादारादिरूपिणः॥
विघ्नान्कुर्वंत्ययंह्यस्मानाक्रम्यसमियात्परमिति । गृहंवनंचोपाविशेत्प्रव्रजेद्वाद्विजोत्तमः ॥ इतिचैकादशे । श्रीमधुसूदनसरस्वतीभिरपि
श्रीभगवद्गीताव्याख्याने कर्मणैवहिसंसिद्धिमास्थिताजनकादयइत्यत्रोक्तं। ब्राह्मणाःपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थाय
भिक्षाचर्यांचरंतीतिसंन्यासविधायकेवाक्येब्राह्मणत्वस्यविवक्षितत्वात् स्वराज्यकामोराजसूयेनयजेतेत्यत्रक्षत्रियत्ववत् चत्वारआश्रमाब्रा
ह्मणस्यत्रयोराजन्यस्यद्वौवैश्यस्येतिस्मृतेः मुखजानामयंधर्मोयद्विष्णोर्लिंगधारणम् ॥ बाहुजातोरुजातानांनायंधर्मःप्रशस्यते ॥ इति
देवलोक्तेश्च क्षत्रियवैश्ययोर्नसंन्यासाधिकारोऽन्येषांतुदूरनिरस्तस्तदाधिकारः । यच्चाग्रेवक्ष्याति प्राजापत्यांनिरूप्येष्टिमग्नीनपिबदीश्वर
इत्यादिनायुधिष्ठिरंप्रस्तुत्यतत्त्यागाभिप्रायकंनतुदण्डादिग्रहपरमिति । किंचलौगाक्षिभास्करेणाप्यव्याध्युदाहरणेतर्ककौमुद्यांशिखासूत्र
वान्ब्राह्मणइत्युक्तेर्दंडिन्यव्याप्तिरित्युक्तं । तेनज्ञायतेदण्डग्रहेविप्रस्यैवाधिकारः । विष्णुस्मृतावापि आश्रमास्तुत्रयःप्रोक्तावैश्यराजन्ययो
रपि ॥ पारिव्रज्याश्रमप्राप्तिर्ब्राह्मणस्यैवचोदितेति । संवर्त्तेनापि उषित्वैवंवनेविप्रोविधिज्ञःसर्वकर्मसु ॥ चतुर्थमाश्रमंगच्छेदित्युक्तं किंच
येत्वेतत्कालीनास्संन्यास्याभासाअन्यजातिपरमपिसंन्यासंवर्णयंतियथाकथंचित्तेस्वमौढ्यंप्रकटयंतितेशास्त्रानुयायिभिरुपेक्ष्याएवेत्यन्यत्र
बहुधाप्राक्तनैर्निर्णीतमतोस्माभिरत्रोपरम्यते। यःस्वेनैवराजतेइतिस्वरःपरमात्मासोऽव्यतेप्राप्यतेऽस्मिन्निस्वराट्। क्विबत्राधिकरणे।



संन्यासयोगयुक्तात्मापरंब्रह्माधिगच्छतीतिस्मृतेः । तदेवाह यश्चब्रह्मतदवाप्तिकरंज्ञानंतेने । त्वंपदार्थविवेकायसंन्यासःसर्वकर्मणामित्या
दिनाब्रह्मावाप्तिकरंज्ञानंसंन्यासेनभवतीत्यन्यत्रप्रपंचितमतउपरम्यते । यद्यस्मिन्ब्रह्मणितदवाप्तिकेरज्ञानेसूरयोप्यन्येशास्त्रिणोमुह्यंति ।
अन्यथासदन्यथावर्णयन्ति । तच्चभागवतपक्षेकिंचिद्वर्णितमेव । कस्मैसंन्यासाश्रमध्यानंक्रियतेतत्राहादिकवयेआदिसनातनंचयत्कंसुखं
मोक्षरूपंतदादिकंतद्वातिप्राप्नोत्यनेनेत्यादिकविः । किरत्रकरणे । तस्मै । नैष्कर्म्यसिद्धिंपरमांसंन्यासेनाधिगच्छतीतिश्रीमुखोक्तेः । नै
ष्कर्म्यसिद्धिंजीवन्मुक्तिरूपामित्यर्थः । जीवन्मुक्तिस्तुतत्त्वज्ञानमनोनाशवासनाक्षयैरेककालीनैर्भवतिनान्यथा । तदुक्तंयोगवासिष्ठे त
त्त्वज्ञानंमनोनाशोवासनाक्षयएवच ॥ जीवन्मुक्तिकराश्चैतेसमाभ्यस्ताहिराघव ॥ त्रयएतेसमंयावन्नस्वभ्यस्तामुहुर्मुहुः ॥ तावन्नपदसं
प्राप्तिर्भवत्यपिसमाशतैरिति । एकैकशोनिषेव्यंतेयद्येतेचिरयत्नतः ॥ तन्नसिद्धिंप्रयच्छंतिमंत्राःसंकीलिताइवेति । यथासंध्यावंदनमार्ज
नेसहनियुक्तानामापोहिष्ठेत्यादीनांतिसृणामृचांमध्येप्रतिदिनमेकैकस्याऋचःपाठेशास्त्रीयानुष्ठानंनसिध्यति । यथावालोकेशाकसूपौदना
दीनामेकैकेनभोजनासिद्धिस्तद्वत् । चिराभ्यासस्यप्रयोजनमाह त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रंथयोदृढाः ॥ निःशंकमेवत्रुट्यंतेबिसच्छे
देगुणाइव ॥ व्यतिरेकमाह जन्मांतरशताभ्यस्तारामसंसारसंस्थितिः ॥ साचिराभ्यासयोगेनविनानक्षीयतेक्वचिदिति । नकेवलमेकैका
भ्यासेफलाभावः किंतुतत्स्वरूपमपिनासिध्यतीत्याह तत्त्वज्ञानंमनोनाशोवासनाक्षयएवच ॥ मिथःकारणतांगत्वादुःसाध्यानिस्थितानि
हीति । त्रयाणामेतेषांमध्येद्वयोर्मेलनेनत्रीणिद्वंद्वानिभवंति । तत्रमनोनाशवासनाक्षयद्वंद्वस्यान्योन्यकारणत्वंव्यतिरेकमुखेनाह यावद्वि
लीनंनमनोनतावद्वासनाक्षयः ॥ नक्षीणावासनायावत्तावच्चित्तंनशाम्यतीति । प्रदीपज्वालासंतानवद्वृत्तिसंतानरूपेणपरिणममानमंतः
करणद्रव्यंमननात्मकत्वान्मनइत्युच्यते । तस्यनाशोनामवृत्तिरूपपरिणामंपरित्यज्यनिरुद्धाकारेणपरिणामः । तथाचपतंजलिर्योगशा
स्त्रेसूत्रयामास व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौनिरोधक्षणचित्तान्वयोनिरोधपरिणामः ॥ इति । व्युत्थानसंस्काराअभिभूयंते
निरोधसंस्काराःप्रादुर्भवंतिनिरोधयुक्तःक्षणश्चित्तेनान्वीययदास्तेसोयंमनोनाशइत्यवगंतव्यं । पूर्वापरपरामर्शमंतरेणसहसोत्पद्यमानस्य

क्रोधादिवृत्तिविशेषस्यहेतुश्चित्तगतसंस्कारोवासना । पूर्वाभ्यासेनचित्तेवास्यभानत्वात् । तस्याश्चवासनायाःक्षयोनामविवेकजन्यायांशां
त्यादिवासनायांदृढायांसत्यपिबाह्यनिमित्तेक्रोधाद्यनुत्पत्तिः । तत्रमनोनाशाभावेवृत्तिषूत्पद्यमानासुकदाचिद्बाह्यनिमित्तेनक्रोधाद्युत्पत्तेर्ना
स्तिवासनाक्षयः । अक्षीणायांतुवासनायांतथैववृत्त्युत्पादान्नास्तिमनोनाशः । तत्त्वज्ञानमनोनाशयोःपरस्परकरणत्वंव्यतिरेकमुखेनाह
यावन्नतत्त्वविज्ञानंतावच्चित्तशमःकुतः ॥ यावन्नचित्तोपरमोनतावत्तत्त्ववेदनमिति । इदंसर्वमात्मैवप्रतीयमानंरूपरसादिकंजगन्मायैवन
त्वेतद्वस्तुतोस्तीतिनिश्चयस्तत्वज्ञानं । तस्यानुत्पत्तौरूपरसादिविषयाणांसद्भावेसातितद्गोचराश्चित्तवृत्तयोनानिवारयितुंशक्यंते ॥ यथाप्र
क्षिप्यमाणेष्विंधनादिषुवह्निज्वालाननिवार्यंतेतद्वदसतिचित्तोपरमेवृत्तिभिर्गृह्यमाणेषुरूपादिषुनेहनानास्तिकिंचनेतिश्रुतेर्यजमानःप्रस्त
रइत्यादेरिवप्रत्यक्षविरोधशंकयाब्रह्माद्वितीयमित्येतादृशस्तत्वानिश्चयोनोदियात् । वासनाक्षयतत्त्वज्ञानयोःपरस्परकारणत्वंव्यतिरेकमुखे
नाहयावन्नवासनानाशस्तावत्तत्वागमःकुतः॥यावन्नतत्त्वसंप्राप्तिर्नतावद्वासनाक्षयः॥इतिक्रोधादिवासनास्वनष्टासुशमदमादिसाधनाभावा
न्नतत्त्वज्ञानमुदेति।अज्ञातेचाद्वितीयब्रह्मतत्त्वेक्रोधादिनिमित्तस्यसत्यत्वभ्रमस्यानपायान्नवासनाक्षीयते । यथोक्तानांत्रयाणांद्वंद्वानामन्यो
न्यकारणत्वमन्वयमुखेनवयमुदाहरामः मनसिनष्टेसतिसंस्कारोद्बोधकस्यबाह्यनिमित्तस्याप्रतीतौवासनाक्षीयते।क्षीणायांवासनायांहेत्वभा
वेक्रोधादिवृत्त्यनुदयान्मनोनश्यति । तदिदंमनोनाशवासनाक्षयद्वंद्वं । दृश्यतेत्वग्र्ययाबुद्ध्येतिश्रुतेरात्मैक्याभिमुखवृत्तेर्दर्शनहेतुत्वादितरवृ
त्तिवृत्तिनाशस्यतत्वज्ञानहेतुत्वमवगम्यते ।सतिचतत्वज्ञानेमिथ्याभूतेजगतिनरविषाणादाविवधीवृत्त्यनुदयादात्मनश्चदृष्टत्वेनपुनर्वृत्त्यनुप
योगान्निरिंधनाग्निवन्मनोनश्यति । तदिदंमनोनाशतत्त्वज्ञानयोर्द्वंद्वं । तत्वज्ञानस्यक्रोधादिवासनाक्षयहेतुतांवार्तिककारआह रिपौबंधौ
स्वदेहेचसमैकात्म्यंप्रपश्यतः ॥ विवेकिनःकुतःकोपःस्वदेहावयवेष्विवेतिक्रोधादिवासनाक्षयरूपस्यशमादेर्ज्ञानहेतुत्वंप्रसिद्धं । वसिष्ठोपि
गुणाःशमादयोज्ञानात्शमादिभ्यस्तथाज्ञता ॥ परस्परंविवर्द्धेतेद्वेपद्मसरसीइवेतिवासनाक्षयतत्वज्ञानयोर्द्वंद्वं । तत्वज्ञानादीनांत्रयाणांसं
पादनेसाधनमाह । तस्माद्राघवयत्नेनपौरुषेणविवेकिना ॥ भोगेच्छांदूरतस्त्यक्त्वात्रयमेतत्समाश्रयेत् ॥ पौरुषोयत्नःकेनाप्युपायेनावश्यं

संपादयिष्यामीत्येवंविधोत्साहानुरूपोनिर्बंधः । विवेकोनामविभज्यनिश्चयः । तत्वज्ञानस्यश्रवणादिकंसाधनं । मनोनाशस्ययोगः । वा
सनाक्षयस्यप्रतिकूलवासनोत्पादः।भोगेच्छायाः स्वल्पायाअप्यभ्युपगमेहाविषाक्तकृष्णवर्त्मेवभूयएवाभिवर्द्धतइतिन्यायेनातिप्रसंगस्यदुर्वार
त्वाद्दूरतइत्युक्तम् ॥ इहमनोनाशस्ययोगउपायउक्तः । सचचित्तवृत्तिनिरोधरूपस्तस्यचाष्टांगानि । यमनियमासनप्राणायामप्रत्याहारधा
रणाध्यानसमाधिभेदात्॥तत्रास्तेयकरुणार्जवशांतिशौचधृतिमिताहारसत्याहिंसाब्रह्मचर्यभेदाद्दशयमाः। आस्तिक्यहर्षतपःसुरार्चनदान
लज्जासज्ज्ञानहोमसच्छ्रवणजपभेदात् दशनियमाः। पद्मकस्वस्तिकभद्रवीरासनादीनिकरचरणादिसंस्थाविशेषलक्षणानिबहून्यासनानिसं
ति।प्राणायामस्तुपूरककुंभकरेचकभेदात्त्रिधा याज्ञवल्क्येनैषांस्वरूपमप्युक्तं । नासिकोत्कृष्टउच्छ्वासोध्मानः पूरकउच्यते॥ कुंभकोनिश्चल
श्वासोमुच्यमानस्तुरेचकः । इति ॥ इंद्रियाणांस्वस्वाविषयेभ्यःप्रत्याहरणंप्रत्याहारः । अद्वितीयवस्तुन्यंतरिंद्रियधारणंधारणा । विच्छिद्य
विच्छिद्यप्रत्ययावृत्तिर्ध्यानम् । सावधानेनाविच्छिद्यविच्छिद्यप्रत्ययावृत्तिरंगघटकसंप्रज्ञाताख्यसाधनंसमाधिः।निरवधानेनाविच्छिद्याऽवि
च्छिद्यप्रत्ययावृत्तिरंगिस्वरूपसंप्रज्ञाताख्यसाध्यसमाधिरिति। विशेषस्त्वत्रपातंजलशास्त्रादवसेयः।ब्रह्मचर्यंतु दर्शनंस्पर्शनंकेलिःकीर्तनंगु
ह्यभाषणं॥संकल्पोध्यवसायश्चक्रियानिर्वृतिरेवच ॥एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः । विपरीतंब्रह्मचर्यमनुष्ठेयंमनीषिभिरिति । रागपूर्व
कंस्त्र्यादिविषयकंज्ञानंदर्शनम्।तत्पूर्वकक्रियादिविशेषजन्यंज्ञानंस्पर्शनम् । तथैवपरिहासादिव्यवहारःकेलिःस्त्र्यादेरनुरागपूर्वकंसौंदर्यादिव
र्णनंकीर्तनम् । अनुरागेणरहसिसंभाषणंगुह्यभाषणम् । स्त्र्यादिविषयइदंमेस्त्वितिदृढेच्छाविशेषःसंकल्पः।अनयारमइतिनिश्चयोध्यवसायः
रागपूर्वकंस्त्र्यादिविषयकानुभवविशेषःक्रियानिवृत्तिरिति विवेकइत्यलंप्रपंचेन । प्रकृतमनुसरामः । किंभूतंसंन्यासाश्रमंस्वेनानिजेनधा
म्नाप्रभावेणनिरस्तःकुहकःसंसृतिरूपोयेनतं । नविद्यायानप्रजयाधनेनत्यागेनैकेऽमृतत्वमापुरितिश्रुतेः । पुनःकिंभूतंसत्यंपरंसत्यश्चसमद
र्शनमितिश्रीमुखोक्तेःसत्येनसमदर्शनेनपूर्य्यतेपूर्णोभवतीतिसत्यंपरस्तं । पिपर्तेःखःखित्वान्मुम् । समदर्शनंविनासंन्यासपूर्त्तिर्नभवतीति
भावः । अथकदासंन्यासःकार्यःकीदृशःकतिधाचेतिप्रश्नेउत्तरमाह । जायमानोवैब्राह्मणस्त्रिभिर्ऋणवान्जायतेब्रह्मचर्येणऋषिभ्योयज्ञेनदे

वेभ्यःप्रजयापितृभ्यएषवाअनृणोयःपुत्रीयज्वाब्रह्मचारीवासीदितिश्रुतेः।अनृणोब्राह्मणःपरिव्रजेदितिश्रुतेरनृणेनसंन्यासोविधेयः। तदुक्तं मनुनापि। दशलक्षणकंधर्ममनुतिष्ठन्समाहितः॥ वेदांतंविधिवच्छ्रुत्वासंन्यसेदनृणोद्विजः॥ इति। दशधर्माअपितत्रैव धृतिःक्षमादमो स्तेयंशौचमिंद्रियनिग्रहः॥ धीर्विद्यासत्यमक्रोधोदशकंधर्मलक्षणम्॥ दशलक्षणानिधर्मस्ययेविप्राःसमधीयते॥ अधीत्यचानुवर्त्ततेते यांतिपरमांगतिमिति। विप्राइत्युक्तेर्गृहीतदशधर्मश्रुतवेदांतविप्रस्यैवसंन्यासाधिकारइतिस्फुटमेव । किंचऋणानित्रीण्यपाकृत्यमनोमो क्षेनिवेशयेत्॥ अनयाकृतमोक्षंतुसेवमानोव्रजत्यधः॥ इतित्रिभिर्ऋणैर्द्विजोजातोदेवर्षिपितृणांप्रभो॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य व्रजत्यधः॥ इति। प्रजावान्वापरिव्रजेदितिवक्ष्यत्यपि। प्रजावान्वेत्यत्रवादशब्देनयज्ञाध्ययनवत्त्वंग्राह्यमिति।संन्यासलक्षणंतुभगवतैवो क्तं काम्यानांकर्मणांत्यागंसंन्यासंकवयोविदुरिति। किंचअनाश्रितःकर्मफलंकार्यंकर्मकरोतियः॥ ससंन्याशीचयोगीचननिरग्निनचाक्रि यः॥ इति। ज्ञेयःसनित्यसंन्यासीयोनद्वेष्टिनकांक्षतीतिच। यज्ञोदानंतपःकर्मनत्याज्यंकार्यमेवहीति। तद्विपरीतंचोक्तमथात्रनिर्णयः। ननुकर्मणान्यासोनन्याय्यःयावज्जीवमग्निहोत्रंजुहोतियावज्जीवंदर्शपूर्णमासाभ्यांयजेत । वीरहावाएषदेवानांयोग्निमुद्वासयते। आचा र्यायप्रियंधनमाहृत्यप्रजातंतुंमाव्यवच्छेत्सीः। कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाइत्यादिश्रुतिभिः। नियतस्यतुसंन्यासःकर्मणोनोपप द्यते॥ मोहात्तस्यपरित्यागस्तामसःपरिकीर्त्तितः॥ यज्ञदानतपःकर्मनत्याज्यंकार्यमेवतत्॥ नकर्मणामनारंभान्नैष्कर्म्यंपुरुषोश्नुतइत्या दिस्मृतिभिश्च नित्यनैमित्तिककर्मत्यागस्यनिषिद्धत्वात् । संन्यासशास्त्रंतुकर्मानधिकृतविधुरादिविषयंकाम्यकर्मत्यागविषयंसर्वकर्मफल त्यागविषयंवा। तथाचोक्तंभगवता काम्यानांकर्मणांन्यासंसंन्यासंकवयोविदुः॥ सर्वकर्मफलत्यागंप्राहुस्त्यागंविचक्षणाः॥ इति। नच संन्यासमंतरेणश्रवणाद्यसम्भवात्तदावश्यकत्वं गृहस्थादिभिरपिकर्मानवरुद्धकालेश्रवणादेःकर्त्तुंशक्यत्वात् । प्रतर्दनादेर्गार्हस्थदशायामेव श्रवणादेर्जनकयाज्ञवल्क्याजातशत्रुप्रभृतीनांगृहस्थानामेवब्रह्मनिष्ठत्वस्यचश्रवणादितिचेन्मैवं। छांदोग्येत्रयोधर्मस्कंधाइत्याश्रमत्रयंप्र स्तुत्यसर्वेएतेपुण्यलोकाभवंतिब्रह्मसंस्थोऽमृतत्वमेतीति गृहस्थाद्याश्रमत्रयस्यपुण्यलोकावाप्तिरेवब्रह्मसंस्थशब्दितसंन्यासिनएवामृतत्व

मितिविस्पष्टमभिधानात् । नचब्रह्मसंस्थशब्दोयौगिकःकथंसंन्यासिनमेवविशिष्याभिदध्यादितिवाच्यं । ब्रह्मसंस्थइतिहिब्रह्मणिपारि समाप्तिरनन्यव्यापाररूपंतन्निष्ठत्वभिधीयते। तच्चत्रयाणामाश्रमिणांनसंभवतितेषांस्वाश्रमविहितकर्माननुष्ठानेप्रत्यवायश्रवणात्।परि व्राजकस्यतुविधिनासर्वकर्मत्यागान्नप्रत्यवायः।शमादिसहितंब्रह्मनिष्ठत्वमेवतस्यस्वाश्रमानुरूपंकर्मेति। तथाहुःआसुप्तेरामृतेःकालंनये द्वेदांतचिंतया॥ दद्यान्नावसरंकिंचित्कामादीनांमनागपीति। त्रयोधर्मस्कंधाइत्यादिनाधर्ममात्राधिकृतत्वेनप्रस्तुतानांत्रयाणामाश्रमा णांसर्वएतेपुण्यलोकाभवंतीतिनिरवशेषंपरामृश्यपुण्यलोकभाक्त्वेनविनियुक्तानांनिराकांक्षाणांनपुनर्ब्रह्मसंस्थशब्देनपरामर्शःसंभवतीतिप रिशेषादाकांक्षितत्वाच्चसंन्यासिनःपरामर्शः। एतेनगृहस्थानांश्रवणादिसंभवप्रत्याशानिरस्ता । आख्यायिकासुप्रतर्दनप्रभृतिगृहस्था नांश्रवणादिदर्शनलिंगंतुप्राप्तिसापेक्षंनप्रापकशास्त्रविरुद्धं। तेषांज्ञानाधिकारंकल्पयितुंक्षमतेऽन्यथागावोवैसत्रमासतेत्यादिलिंगाद्गवादी नामपिकर्माकारकल्पनाप्रसंगात्। तथाचोक्तंवार्तिके त्यक्ताशेषक्रियस्यैवसंसारंप्रजिहासतः॥जिज्ञासोरेवचैकात्म्यंत्रय्यंतेष्वधिकारितेति॥ अस्तुवाजन्मांतरेसंन्यासपूर्वकंश्रवणाद्यनुष्ठितमेवप्रतिबंधकवशात्तुतदाज्ञानंनाभूदिहजन्मनितुतेषांप्रतिबंधकापगमाद्गार्हस्थ्येपिसकृच्छ्रव णमात्रेणज्ञानमुत्पन्नमितिकल्पनम् । तथाचस्मृतिः पूर्वाभ्यासेनतेनैवह्रियतेह्यवशोपिसः॥ इति। अनेकजन्मसंसिद्धस्ततोयातिप रांगतिमितिच॥ तस्मात्संन्यासोदरपह्नवः। तथान्यासइतिब्रह्माब्रह्माहिपरःपरोहिब्रह्मातानिवाएतान्यवराणितपांसिन्यासएवात्परेच यत्। वेदांतविज्ञानसुनिश्चितार्थाःसंन्यासयोगाद्यतयःशुद्धसत्त्वाः॥ नकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुः॥ एतमेवप्रव्राजि नोलोकमिच्छंतःप्रव्रजंति। त्यजतैवहिविज्ञेयंत्यक्तुःप्रत्यक्परंपदमित्यादयोविविदिषासंन्यासविधायिन्यः। एतद्धस्मवैतत्पूर्वेविद्वांसआ हुर्ऋषयःकावषेयाःकिमर्थावयमध्येष्यामहेकिमर्थावयंयक्ष्यामहेएतद्धस्मवैतत्पूर्वेविद्वांसोग्निहोत्रंनजुहवांचक्रिरेएतमेवैतमात्मानंविदित्वाब्रा ह्मणाःपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षाचर्यंचरंति । एतावदरेखल्वमृतत्वमितिहोक्त्वायाज्ञवल्क्यःप्रवव्राजे त्यादयोविद्वत्संन्यासपराः। तत्रापिकाश्चिद्ब्रह्मचर्यंसमाप्यगृहीभवेद्गृहाद्वनीभूत्वाप्रव्रजेदितिक्रमिकसंन्यासविधिपराः । अन्याश्चयदिवे

तरथाब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वावनाद्वायदहरेवविरजेत्तदहरेवप्रव्रजेत्खलुवेदार्थंयोविद्वांसोपनयनादूर्ध्वंसतानिप्राग्वात्यजेत्पितरंपुत्रमग्न्युप
वीतंकर्मकलत्रंकुटीचकोब्रह्मचारीकुटुंबंविसृजेत्त्रिदंडकमंडलुंशिक्यंपात्रंजलपवित्रंशिखांयज्ञोपवीतंचेत्येतत्सर्वंभूःस्वाहेत्यप्सुपरित्यज्या
त्मानमन्विच्छेदित्याश्रमक्रमंविनास्मार्त्तसंन्यासोत्तरंचोत्कटवैराग्योदयोत्तरकालमेवपारमहंस्यविधिपराश्चश्रुतयोद्रष्टव्याः । नचासांतत्रै
वंशक्यतेवक्तुंयेंधपंग्वादयोनराः॥गृहस्थत्वंनशक्ष्यंतिकर्त्तुंतेषामयंविधिः।नैष्ठिकंब्रह्मचर्यंवापरिव्राजकतापिवा । तैरवश्यंगृहीतव्यातेनादावे
तदुच्यते॥इतिभट्टोक्तेर्विधुरादिविषयत्वंन्याय्यं।अथपुनरव्रतीवाव्रतीवास्नातकोवावास्नातकोवाउत्सन्नाग्निरनग्निकोवेतितेषांपृथक्संन्यास
विधानात्। भगवतापिनैष्कर्म्यसिद्धिंपरमांसंन्यासेनाधिगच्छतीत्यादिनाविविदिषासंन्यासः॥योगारूढस्यतस्यैवशमःकारणमुच्यते॥ सर्वं
कर्माणिमनसासंन्यस्यास्तेसुखंवशी । नैवतस्यकृतेनार्थोनाकृतेनेहकश्चनेत्यादिनाविद्वत्संन्यासश्चदर्शितएव । बृहस्पतिरपि । संसारमेव
निस्सारंदृष्ट्वासारदिदृक्षया॥प्रव्रजंत्यकृतोद्वाहाःपरंवैराग्यमाश्रिताः॥ अंगिराश्च प्रव्रजेद्ब्रह्मचर्येणप्रव्रजेद्वागृहादपि । वनस्थःप्रव्रजेद्विद्वाना
तुरोवापिदुःखितः ॥ मनुरपिप्राजापत्यांनिरूप्येष्टिंसार्ववेदसदक्षिणाम् ॥ आत्मन्यग्नीन्समारोप्यगृहस्थःप्रव्रजेद्गृहात् । व्यासः ब्रह्मचर्येण
वाकालंकुर्यात्संकल्पपूर्वकम् ॥ वानप्रस्थोवापिभवेत्परिव्राडथवेच्छयेति । अनुष्ठेयंबादरायणःसाम्यश्रुतेरितिसूत्रंच । पारिव्रज्यमनुष्ठेयं
बादरायणोमन्यते त्रयोधर्मस्कंधाइत्यत्रब्रह्मसंस्थपदेनाश्रमत्रयतुल्यश्रुतेरितितदर्थः।संन्यासंदर्शयति । तस्माद्बहुतरश्रुतिविरोधात्कुर्वन्नेवे
हेतिश्रुतिवचनंनियतस्यत्वित्यादिभगवद्वचनंचाविरक्तविषयंमंदविरक्तविषयंवेत्यवसीयते ॥ अतएवाविरक्तस्यचित्तशुद्ध्यर्थफलत्यागसहि
तंकर्मानुष्ठानंकाम्यानांकर्मणामित्यादिनाभगवताप्रसिद्धसंन्याससाम्येनस्तूयते । दुःखमित्येवयत्कर्मेत्यादिनाप्ययमेवार्थःस्फुटीकृतः । त्रि
भिर्ऋणवानितिश्रुतिस्तुपश्चवदानविधिशेषार्थवादांतर्गतानस्वतंत्रब्रह्मचर्यादिसंन्यासविधिविरुद्धमृणत्रयसद्भावंसाधयितुंक्षमतेइतिसुरेश्व
रवार्त्तिकेप्रपञ्चितम् । अविरक्तस्यसंन्यासस्तुभगवताप्येकादशस्कंधेनिंदितएव । यस्त्वसंयतषड्वर्गःप्रचंडेंद्रियसारथिः ॥ ज्ञानवै
राग्यरहितस्त्रिदंडमनुजीवति । सुरानात्मानमात्मस्थंनिन्हुतेमांसधर्महा ॥ अविपक्वकषायोस्मादमुष्माच्चविहीयते ॥ इति । विरक्त

स्यतूक्तएव । यदाकर्मविपाकेषुलोकेषुनिरयात्मसु ॥ विरागोजायतेसम्यङ्न्यस्ताग्निःप्रव्रजेत्तदेति । किंचविविदिषासंन्यासेत्रिदंडादिग्रहणं
नतुविद्वत्संन्यासे । तत्रत्वेकदंडमेवगृह्यते । यदातुविदितंतत्स्यात्परंब्रह्मसनातनम् ॥ तदैकदंडंसंगृह्यसोपवीतांशिखांत्यजेत् । ज्ञात्वा
सम्यक्परंब्रह्मसर्वंत्यक्त्वापरिव्रजेदितिविद्यारण्योक्तेः । यस्त्वग्रेचतुर्द्धान्यासेकुटीचकःपूर्वंबह्वोदोहंसनिष्क्रियावित्यादिनावक्ष्यतेसोप्यनयो
रेवांतर्भूतइति । एषांस्वरूपमाहयस्तुयात्राद्यशक्तएकस्मिन्नेवतीर्थेवसन्प्रत्यहंद्वादशसहस्रंप्रणवंजपन्यथोक्तकालेभैक्ष्यमाहरन्कुर्व्यांपर्ण
शालायांचकास्तिब्रह्मध्यानेनसकुटीचकः । यस्तुतीर्थयात्रासुशक्तोग्रामेएकरात्रंनगरेत्रिरात्रंतीर्थेसप्तरात्रंवसंस्त्रिकालस्नायीमाधुकरीं
वृत्तिमाश्रितोनिजाश्रमधर्मरतःप्रणवमनुस्मरन्दण्डादिकंपरिगृह्यतीर्थात्तीर्थान्तरंव्रजतिबहून्युदकानितीर्थजलानियस्यसबहूदकः । य
स्तुयथाजातस्तथारूपधरोनिर्द्वंद्वोनिष्परिग्रहोब्रह्मध्याननिष्ठश्चतुर्थभूमिकारूढोभवतिसहंसः । यस्तुदण्डकौपीनविधिनिषेधहीनःसप्त
भूमिकारूढोध्यातृध्येयविभागरहितोब्रह्मानंदेलीनवृत्तित्वाच्छरीरमपिनानुसंधत्तेसपरमहंसोनिष्क्रियइतिचोच्यते । आचारमयूखेपि च
तुर्विधोभिक्षुकःस्यात्कुटीचकबहूदकौ ॥ हंसःपरमहंसश्चयोयःपश्चात्सउत्तमः ॥ तत्राद्ययोर्द्वयोःशिखासूत्रधारणंपुत्रदत्तान्नभोजनंभव
ति । परंतुसर्वव्यासंगान्विहायाध्यात्मविद्याभ्यासः । हंसस्तुपुत्रादीनांत्यागंकृत्वावनादौवसेत् । शिखासूत्रेवैकल्पिके । परमहंसो
मुण्डःसूत्ररहितश्च । सर्वेषांब्रह्मविद्याभ्यासस्तुल्यएव । परमहंसस्यैकएवदण्डस्त्रिदण्डादिकंहंसादीनामिति । ज्ञानस्यसप्तभूमिका
स्तु ॥ ज्ञानभूमिःशुभेच्छाख्याप्रथमासमुदाहृता ॥ विचारणाद्वितीयास्यात्तृतीयातनुमानसा ॥ सत्वापत्तिश्चतुर्थीस्यात्ततोऽसंसक्तिमा
मिका ॥ पदार्थभाविनीषष्ठीसप्तमीतुर्यगास्मृतेतियोगवासिष्ठे । भूमिकानामचित्तस्यावस्थाविशेषःअत्रभूमिकात्रितयंब्रह्मविद्यासाधन
मेवनतुब्रह्मविद्याकोटावंतर्भवति । भेदसत्यत्वबुद्धेरनिवृत्तत्वात् । यस्तुचतुर्थभूमिकांप्राप्तःसब्रह्मविदित्युच्यते । पञ्चमभूमौनिर्विक
ल्पात्तदास्वयमेवव्युत्तिष्ठतेसोयंयोगीब्रह्मविद्वरः । षष्ठभूमौपार्श्वस्थबोधितोव्युत्तिष्ठतिसोयंब्रह्मविद्वरीयान् । तदेतद्भूमिद्वयंसुषुप्तिरि
तिवाभिधीयते । असंप्रज्ञातप्रतिपादिकानिवाक्यानियोगशास्त्राणिसप्तमभूमिकांप्राप्तेयोगिन्येवपर्यवस्यांति । सोयमीदृशोयोगीव्युत्था

नरहितःनिर्विकल्पकसमाधिस्थःपरमहंसः सप्तमभूमौब्रह्मविद्वरिष्ठ इतिचोच्यते । तत्रनित्यानित्यवस्तुविवेकादिपुरःसराफलपर्यवसा
यिनीमोक्षेच्छाप्रथमा १ । यतोगुरुतोवेदांतविचारःश्रवणमननात्मकोद्वितीया २ । ततोनिदिध्यासनाभ्यासेनमनसएकाग्रतयासूक्ष्म
वस्तुग्रहणयोग्यत्वंतृतीया ३ । ततोवेदांतवाक्यान्निर्विकल्पकोब्रह्मात्मैक्यसाक्षात्काररूपश्चतुर्थी ४। सविकल्पकसमाध्यभ्यासेनानिरुद्धे
मनसियानिर्विकल्पकसमाध्यवस्थाऽसंसक्तिः ५ । ततस्तदभ्यासपरिपाकेतया।चिरकालावस्थायिनीसापदार्थाभाविनीगूढसुषुप्तिश्च ६ ।
सर्वदान्यैःपरिपोष्यमाणःसच्चिदानंदैकनिष्ठोयदा।तिष्ठतितदातुर्य्यगेतिमधुसूदनः। संन्यासिनोधर्मास्त्वेकादशेकृष्णेन बिभृयाच्चेन्मुनिर्वासः
कौपीनाच्छादनंपरम् ॥ त्यक्तंनदंडपात्राभ्यामन्यत्किंचिदनापादि । दृष्टिपूतंन्यसेत्पादंवस्त्रपूतंपिबेज्जलम् ॥ सन्यपूतंवदेद्वाक्यंमनः
पूतंसमाचरेत् ॥ मौनानीहानिलायामादंडावाग्देहचेतसाम् ॥ नह्येतेयस्यसंत्यंगवेणुभिर्नभवेद्यतिः ॥ भिक्षांचतुर्षुवर्णेषुविगर्ह्यान्वर्जयं
श्चरेत् ॥ सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेनतावतेत्यादिनायावदध्यायसमाप्ति । वक्ष्यंतेसप्तमेपिकल्पस्त्वेवंपरिव्रज्यदेहमात्रावशेषितः ।
ग्रामैकरात्रविधिनेत्यादिना। वक्ष्यंतेमनुनापि एकएवचरेन्नित्यंसिद्ध्यर्थमसहायवानित्यारभ्ययावदध्यायसमाप्तिषष्ठेऽध्यायेउक्ताः । पराश
रेणापि कमंडल्वक्षमालाचभिक्षापात्रमथापरम् ॥ काषायवासाःकौपीनीत्यादिनाद्वादशाध्यायेउक्ताः । इहतुविस्तरभियातत्रत्यतत्रत्यवा
क्यानिनोक्तानि । नन्वश्वालंभंगवालंभंसंन्यासंपलपैतृकम् ॥ देवराच्चसुतोत्पत्तिंकलौपंचविवर्जयेदितिस्मृतेस्संन्यासःकलौनकार्यएवकिं
तस्याधर्माधर्मविचारेणेतिचेन्न । यावद्वर्णविभागोस्तियावद्वेगामहीतले ॥ अग्निहोत्रंचसंन्यासंतावत्कुर्यात्कलौयुगे ॥ इतिदेवलस्मृतेः ।
कलावपिकिंश्चित्कालंकार्यएवसइति । सचातुरसंन्यस्तस्यपुनर्जीवनविषयएवसंन्यस्यार्तोयदाजीवेत्तदादंडग्रहीभवेत् । अन्यथातुकलौनैव
ग्राह्योदंडोद्विजोत्तमेरितिसंहितोक्तेः । पूर्वमुक्तमपिस्थूणानिखननन्यायेनपुनराह । ब्राह्मणेनैवायंकार्योनान्यवर्णेन । परीत्यलोकान्कर्म
चितान्ब्राह्मणोनिर्वेदमायान्नास्त्यकृतःकृतेनेतिश्रुतेः। तस्माद्ब्राह्मणःपांडित्यंनिर्विद्यबाल्येनतिष्ठासेत् । बाल्यंचपांडित्यं । निर्विद्याथमुनि
रमौनंचमौनंचनिर्विद्याथब्राह्मणाइतिश्रुतेश्च। अस्यार्थस्तु । यस्मात्पूर्वेब्राह्मणाआत्मानंविदित्वापुत्राद्येषणाभ्योव्युत्थायभिक्षाचर्यंचरांति

तस्मादधुनातनोपिब्राह्मणोब्राह्मणत्वजातिविशिष्टःपंडाध्ययनजायाधीस्तद्वान्पंडितस्तस्यकृत्यंपांडित्यंश्रवणंतान्निर्विद्यनिश्चयेनलब्ध्वा
बाल्येनज्ञानबलभावेनमननेनशुद्धांतःकरणेनवास्थातुमिच्छेत् । तद्द्वयंलब्ध्वाऽथश्रवणमननानंतरंमुनिर्मननशीलोनिदिध्यासनशीलो
भवेत् । अमौनंश्रवणमनने । मौनंचनिदिध्यासनंलब्ध्वाउक्तत्रयस्यब्रह्मसाक्षात्कारहेतुत्वात्त्रयानंतरंब्रह्मावगच्छतीतिब्राह्मणःसाक्षात्कृत
ब्रह्माभवतीत्यर्थः । द्विजोत्तमोयदापश्येद्वलीपलितमात्मनः ॥ उपरामंतथाक्षाणांक्षैण्यंकामस्यसद्विजः ॥ समीक्ष्यपुत्रंपौत्रंवादृष्ट्वावादु
हितुःसुतम् ॥ अधीत्यविधिवद्वेदान्कृत्वायागान्विधानतः ॥ निश्चयंमनसःकृत्वाचतुर्थाश्रममाविशेदितिबृहत्पाराशरस्मृतेश्च । अधीत्य
विधिवद्वेदान्पुत्रांश्चोत्पाद्यधर्मतः ॥ इष्ट्वातुशक्तितोयज्ञैर्मनोमोक्षेनिवेशयेत् ॥ अनधीत्यद्विजोवेदाननुत्पाद्यतथात्मजान् ॥ अनिष्ट्वाचैव
यज्ञैश्चमोक्षमिच्छन्व्रजत्यधः ॥ प्रजापत्यांनिरूप्येष्टिंसर्ववेदसदक्षिणाम् ॥ आत्मन्यग्नीन्समारोप्यब्रह्मणःप्रव्रजेद्गृहादितिमानवोक्तेश्च ।
शतंकुलानांपुरतोबभूवतथापराणांत्रिशतंसमग्रम् ॥ एतेभवंतिसुकृतस्यलोकेयेषांकुलेसंन्यसतीहविप्रः ॥ इत्याचारमयूखेस्मृत्यंतराच्च ।
नैष्ठिक्यंचैवगार्हस्थंवानस्थ्यंभैक्षवंतथा ॥ चत्वारआश्रमाविप्रात्क्रमेणैकैकहीनता ॥ चत्वारोमुखजेप्रोक्ताआश्रमाबाहुजेत्रयः ॥ द्वावाश्रमा
वूरूद्भूतेपादजेत्वेकएवहि ॥ विप्रेतरःपतत्येवप्रव्रज्याश्रमसंग्रहात् ॥ तस्माद्विप्रेणकर्त्तव्याप्रव्रज्यानान्यवर्णजैरितिकौशिकसंहितोक्तेश्च।
तस्माद्ब्राह्मणस्यैवसंन्यासाधिकारोनान्यवर्णस्येति। इहान्यवर्णस्यसंन्यासेपातित्याभिधानात्तद्दर्शनसंगादिशुभेप्सुनानकार्यमितिराद्धांतः।
किंश्चात्रविचारोस्ति । सचविस्तरभियानकृतइति ॥ वस्तुतस्तुप्रव्रज्याधर्माणामतिदुष्करत्वादपि कलौवैराग्यासमर्थेनसंन्यासोनकार्य
एवकेवलंदेवलोक्तिमाश्रित्यैवसंन्यासोनकार्यः । तदुक्तंकलौयदिभवेद्विप्रःसंन्यासीसंततिंविना ॥ वैराग्येनविनाचापिसज्ञेयश्चांत्यजो
धमः ॥ तंदृष्ट्वाकश्मलंतोयेसवासाःप्रविशेत्पुमान्॥रौरवादिषुघोरेषुनरकेषुवसेत्सवै ॥ कलौविधायसंन्यासंतदाचारस्यदुर्घटात्॥कलौकृत्वा
तुसंन्यासंप्रायश्चित्तेनशुध्याति ॥ तच्चपुनरुपनयनादिरूपमेतत्सर्ववारतांतविनोक्तंसंहितायाम् । अतएवोक्तंब्रह्मवैवर्ते कलौभवेत्ससंन्यासी
विषस्तैन्यंकरोतियः ॥ इतिमुनिकृतशपथेआतुरसंन्यासस्तुप्राणप्रयाणसमयेकुर्यादनशनंखग ॥ दद्यादातुरसंन्यासंविरक्तस्यद्विजन्मनः

संन्यस्तमितियोब्रूयात्प्राणैःकण्ठगतैरपि ॥ मृतोविष्णुपुरींयातिनपुनर्जायतेभुवीतिभगवदुक्तेःकार्यएव । सचब्राह्मणत्रयात्पृथक्पृथक्प्रै
षानुच्चारयित्वादण्डधारणमंतराकार्यः । दण्डधारणेतुदाहातिलोदकपिंडदानादिनस्याद्वहिःसंन्यस्तस्यतुरीयाश्रमत्वादस्याहंब्रह्मास्मी
त्यंतःसंन्यस्तस्यतुसर्वसांपरायिकंकार्यमेवद्विजन्मनइतिवदताभगवता बाहुजातोरुजातानांत्रिदण्डंनविधीयते ॥ इतिस्मृतेर्दंडधार
णमंतरात्रयाणांवेदमधीत्याश्रमाचरणमितिसूत्रकारवचनाच्च । क्षत्रियवैश्ययोःकेवलंप्रैषोच्चारणमात्रेणसंन्यासाधिकारः । परंसोपवीत
योरधीतवेदयोर्विरक्तयोरेवनत्वन्यथेति । स्वीकृतःयदिप्रारब्धवशाज्जीवित्तदादण्डंधृत्वागृहात्प्रव्रजेत् । क्षत्रियवैश्यौतूपशमादिसंन्यासध
र्मान्स्वीकृत्यप्रव्रजेताम् ॥ इतिसंन्यासपक्षः ॥ १०० ॥ ॥छ॥ ॥छ॥

॥ श्रीमद्भागवताद्यपद्यविषयंव्याख्याशतंश्रीगुरोर्विद्याबुद्धिप्रदस्यनित्यकृपयासर्वार्थबोधप्रदम् ॥ श्रीवंशीधरशर्मणाकृतामिदंगौडान्वयेना
द्भुतंनिक्कारामसुतेनखर्डनगरोद्भूतेननाभ्यंबुजे ॥ यशस्विसिंहनृपतेर्यशोदानंदनालये ॥ यशोदानंदनप्रीत्यैयशोदासून्वग्रहात् ॥ चातुर्य्यं
ग्रंथसंदर्भेगुरूणामेवमेनहि ॥ यदत्राचारुतातन्मेगुरूणांनैवसर्वथा ॥ यदत्रस्खलितंतन्मेविद्वांसः पूरयंतुवै ॥ मय्यल्पज्ञेकृपांकृत्वास्व
स्थासूयांविहायच ॥ गुणगणपरिपूर्णेवस्तुनिनिर्विवेकानिजहृदयस्वभावाद्दोषमेवाकलंति॥ विविधरसफलाद्यैःशाखिभिःपूरितेपिविपिनइ
ववराहागूथमेवाश्रयंति ॥ अल्पंगुणंपरेषांप्रथितंकुर्वंतिसाधवोलोके ॥ तेषामेषस्वभावस्तृप्ताःस्युःपरोदयेनैते ॥ ६ ॥ ॥ ॥

॥ अथद्वितीयश्लोकमपिव्याख्यास्यामः ॥ श्रीव्यासदेवोनिजशिष्येभ्योवदति । पूर्वंब्राह्मणपक्षेपूर्वश्लोकस्यव्याख्यातत्वादधुनाद्विती
यमपितत्रैवयोजयति । भोशिष्याःअत्रेत्यनेनविप्रसंघःपरामृश्यते । त्यदादीनांबुद्धिस्थपरामर्शकत्वामितिभाष्यात् । अत्रविप्रसंघे
धरतिनरकेपतंतमितिधर्मोस्ति । किंभूतःप्रकर्षेणोज्झितंत्यक्तंकैतवंपाखण्डलक्षणंयस्मिन्सतथावेदविहितइत्यर्थः । तत्रहेतुःपरउत्कृष्टो
मायस्मात्सपरमःसर्वोत्कृष्टःश्रीकृष्णभक्तिलक्षणः । तंविनामोक्षासिद्धेः । तद्वक्ष्यतिश्रीदशमेब्रह्माश्रेयःस्तुतिंभक्तिमुदस्यतेविभोक्लिश्यं
तियेकेवलबोधलब्धये ॥ तेषामसौक्लेशलएवाशिष्यतेनान्यद्यथास्थूलतुषावघातिनामिति । सतांसदाचारपराणांवास्तवंपरमार्थभूतंव

स्तुब्रह्मात्रैव ब्रह्मकुलादेववेद्यंज्ञातुंयोग्यं।ब्रह्मकुलस्यैवाचार्यत्वात् । क्वचित्पश्चम्यर्थेपित्रल्स्यात् । आचार्यत्वमाद्यवर्णेमयासंस्थापितंधरे॥इ
तिवाराहोक्तेः।तद्विज्ञानार्थंसगुरुमेवाभिगच्छेच्छ्रोत्रियंब्रह्मनिष्ठमितिश्रुतेश्चश्रोत्रियत्वंब्राह्मणएवपर्यवस्यति।जन्मनाब्राह्मणोज्ञेयःसंस्कारा
द्द्विजउच्यते ॥ विद्ययायातिविप्रत्वंत्रिभिःश्रोत्रियशब्दभागितिस्मृतेः। किंभूतानांसतांपरोत्कर्षासहनंमत्सरस्तद्रहितानां।पाखण्डानुगा
विप्रोत्कर्षंनसहंते । तेचेत्थंवदंति यथान्येप्राणिनस्तथाविप्रानतेषुकिंचिदाधिक्यंकिमर्थावयंतानाश्रयामइतियेमत्सरिणस्तद्भिन्नानांशास्त्र
मार्गानुयायिनामित्यर्थः। किंभूतंवस्तुशिवंपरमानंदंददातीतिशिवदंमोक्षदमित्यर्थः ॥ प्रकाशदत्ववच्छिवरूपरूपस्यापिब्रह्मणशिवदत्वंन

**धर्मःप्रोज्झितकैतवोत्रपरमोनिर्मत्सराणांसतांवेद्यंवास्तवमत्रवस्तु**
**शिवदंतापत्रयोन्मूलनम् ॥ श्रीमद्भागवतेमहामुनिकृतेकिंवापरैरी**
**श्वरःसद्योहृद्यवरुध्यतेत्रकृतिभिःशुश्रूषुभिस्तत्क्षणात् ॥ २ ॥**

विरुद्धमिति।पुनःअध्यात्माधिदैवाधिभूतरूपतापत्रयाणामुन्मूलनमुत्पाटनकरं । अध्यात्मतापाःकामादयःअधिभूतास्सर्पव्याघ्रादिजन्या
आधिदैवास्तुवाय्वग्नितडित्पातादिजन्याइतिविवेकः । किंभूतेऽत्रकोर्थःसंघेश्रीमद्भागवते । ऋचःसामानियजूंषिसाहिश्रीरमृतासतामिति
श्रुतेर्वेदाभ्यासएवश्रीःसाविद्यतेऽस्यास्मिन्वेतिश्रीमान्।ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसः श्रियः ॥ ज्ञानवैराग्ययोश्चैवषण्णांभगइतींगनेति
स्मृतेर्भगःषड्विधैश्वर्यंसोस्यास्तीतिभगवान्कृष्णस्तंभगवंतमुपास्तइतिभागवतः । अत्रकारकादण् । श्रीमांश्चासौभागवतश्चेतिश्रीमद्भाग
वतस्तस्मिंस्तथाश्रोत्रियेब्रह्मनिष्ठेचेत्यर्थः । पुनःमह्यतेपूज्यतेसर्वैरितिमहान्मन्यतेजानातिसर्वमितिमुनिः । महतेरतृमन्यतोरिश्चप्रत्ययः।

महांश्चासौमुनिर्महामुनिः महाबन्धोमहामुनिरितिगोपालसहस्रनामसुपठितत्वान्महामुनिः कृष्णस्तेनकीर्त्यतेस्तूयतेइतिमहामुनिकृतस्त स्मिंस्तथा । कृतसंशब्दइत्यतःकर्मणिकःधातोरुपधायाह्रस्वश्चनिपातनाद्गुणादौबोध्यः। ब्राह्मणेभ्योनमस्यामोयेस्मद्रूपंत्रयीमयम् ॥ बि भ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैरित्यादिवाक्यैर्हरिणाश्रीदशमेविप्राःस्तुताद्दश्यंते । अन्यत्रापि इयंब्राह्मणनौराजन्विपरीताभवा र्णवे ॥ तरंत्यधोगतायस्यांमज्जंत्युपरिवर्त्तिनः ॥ इत्यादिवाक्यैस्तथाद्दश्यंते । ननुश्रीमद्भागवतइत्यत्रतुब्राह्मणाविष्णोरुपासकाउक्ताम हामुनिकृतइत्यत्रविष्णुर्ब्राह्मणोपासकउक्तइतश्चविरोधःप्रतीयते । नहिस्तोतैवस्तुत्यःस्तुत्यश्चस्तोतालोकेकुत्राचिद्दरीद्दश्यते इतिचेच्छृ णु । ब्रह्माविष्णुःशिवोविप्राःसैर्वैर्देवैश्चपूजिताः ॥ परस्परंस्तुवंत्येतेलीलयाभेदभावनादितिपुराणांतरात् । किंचपरैर्विप्रद्विड्भिःकिमीश्वरोहृ द्यवरुध्यते किंतुनकदापिअत्रविप्रसंघेशुश्रूषुभिःशुश्रूषांकुर्वद्भिस्तत्क्षणादेवावरुध्यतेस्थिरीक्रियते । विप्रद्विषंनरंदृष्ट्वादूराद्विष्णुःपलायते॥ विप्राणांसेवनादाशुहरिस्तिष्ठतिमानसे ॥ इतिसंहितोक्तेः । द्येनाब्धिनासहवर्त्ततइतिसद्यःजलशायीत्यर्थः । तर्हिसर्वेविप्रानेवकथंनसेवंतेइ तिचेत्तत्राह कृतिभिर्जन्मांतरेकृतपुण्यपुंजैःजन्मांतरीयपुण्यंविनातत्रविश्वासोनजायते ॥ तदुक्तं तीर्थेदेवेगुरौविप्रेईशनाम्निचपार्थिव ॥ स्वल्पपुण्यवतांलोकेविश्वासोनैवजायते ॥ इतियुधिष्ठिरंप्रतिकृष्णेन ॥ इतिब्राह्मणपक्षः ॥ १ ॥ ॥छ॥ ॥

॥ एतच्छास्त्रस्यश्रीकृष्णभक्तिप्रतिपादकत्वाद्भक्तियोगेप्येनंश्लोकंयोजयति । भोशिष्याइतिसंबोध्यव्यासोवदति । भागवतेभगवतो विष्णोरयंभागवतोभक्तियोगस्तस्मिन्धर्मोस्ति । तत्रश्रीविष्णुपूजनादिरूपधर्मस्यविद्यमानत्वात् । किंभूतोधर्मःनविद्यतेत्रपानामो च्चारणदण्डवत्प्रणत्यादिषुयेषांतेऽत्रपावैष्णवास्तेरमंतेक्रीडंत्यत्रेत्यत्रपरमः । वैष्णवेतरास्तुनामोच्चारणादौलज्जंते । मृषाभाषणपरस्त्र्यु परिपतनादौतुनलज्जंते ॥ तदुक्तं । नामोच्चारेथसाष्टांगप्रणतौश्रीहरेर्नृणाम् ॥ अभक्तानांयथालज्जाजायतेनतथाध्रुवम् ॥ मृषोक्तौ व्यभिचारादौभक्तानांत्वन्यथाततः ॥ इत्यादिनाबहुप्रपाश्चितं श्रीहरिभक्तिप्रदीपे । इत्यभिप्रेत्यैवभगवंतंकुंतीवक्ष्यति जन्मैश्वर्यश्रु तश्रीभिरेधमानमदःपुमान् ॥ नैवार्हत्यभिधातुंवैत्वामाकिंचनगोचरमिति एकादशेपिवक्ष्यतिभगवान् रजःसत्वतमोनिष्ठारजःसत्त्वतमो

जुषः ॥ उपासतइंद्रमुख्यान्देवादीन्नतथैवमाम् ॥ इष्ट्वेहदेवतायज्ञैर्गत्वारंस्यामहेदिवि ॥ तस्यांतेइहभूयास्ममहाशालामहाकुलाः ॥ एवं पुष्पितयावाचाव्याक्षिप्तमनसांनृणाम् ॥ मानिनांचातिस्तब्धानांमद्वार्त्तापिनरोचते ॥ इति । पुनःप्रोज्झितंप्रकर्षेणत्यक्तंकैतवंफला भिसंधिलक्षणंयत्रसतथा । फलेच्छायत्रजायेतसधर्मःसकैतवः ॥ निष्कामोयोभवेद्धर्मःसशुद्धःपरिकीर्तितः ॥ इतिस्मृतेः । यद्वा प्रकर्षेणोज्झितंकैतवंवैषम्यलक्षणंयत्रेति । तद्वक्ष्यति । जितमजिततदाभगवतायदाहभागवतंधर्ममनवद्यम् ॥ निष्किंचनायेमुनयआ त्मारामायमुपासतेपवर्गाय ॥ विषममतिर्नयत्रनृणांत्वमहमितिममतवेतियदन्यत्र ॥ विषमधियारचितोयःसह्यविशुद्धःक्षयिष्णुरधर्म बहुलः ॥ इति । इत्यभिप्रायेणैवकर्मशुद्धिर्मदर्पणामितिवक्ष्यत्युद्धवंश्रीहरिः । सतांसदाचारतत्पराणांवास्तवंसत्यभूतवस्तुपरमात्मा त्रभगवद्भक्तियोगेएववेद्यम् । भक्त्यामामभिजानातियावान्यश्चास्मितत्त्वतइतिश्रीमुखोक्तेः सत्यंज्ञानमनंतंब्रह्मेतिश्रुतेः परमात्मैवस त्यः । ज्ञानकारणसामर्थ्याभक्तिरेवगरीयसीतिशिष्टोक्तेश्च । किम्भूतंवस्तुनिर्मत्सराणामनसूयूनांशिवदंमोक्षफलदंसासूयानांतुजातम पितत्वज्ञानंनफलपर्यवसायि । नैःश्रेयसकरंज्ञानंसुवृत्तानांप्रजायते ॥ दुर्वृत्तानांकथमपिजातमप्यन्यथाभवेदितिपुराणात् । पुनःकिं भूतंतापत्रयाणामुन्मूलनंतापयंतिक्लेशयंतीतितापाःकामक्रोधलोभास्तएवत्रयास्तापत्रयास्तेषामुत्पाटनकरं । तपंतिविविधास्तापानैता न्मद्गतचेतसः ॥ इतिवक्ष्यमाणत्वात् । पुनःश्रीमत्श्रीशब्दोदिताराधातद्युतमित्यर्थः । एतेनश्रीराधाकृष्णएवपरमार्थवस्तुताद्भिन्नंसर्वमव स्त्वेव । यस्मिन्सर्वंविलीयेतवस्तुतत्परमार्थकं । एतादृशंपरंब्रह्मराधाकृष्णोनसंशयः ॥ इतिजीवगोस्वामिवचनात् ॥ किंभूतेभागवतेमहामु नयोनारदादयस्तैःकृतेप्रवर्तिते । यद्वामहामुनिर्विष्णुरेवतेनप्रवर्त्तितेउद्धवादिभ्यउपादिष्टेपरैर्भक्तियोगेतरैःसाधनैरीश्वरःकिंसद्योहृद्यवरुध्यते स्थाप्यतेवेतिविलंबेनअत्रशुश्रूषुभिर्भक्तियोगंसेवद्भिस्तत्क्षणादेवावरुध्यते । नसाधयतिमांयोगोनसांख्यंधर्मउद्धव ॥ नस्वाध्यायस्तप स्त्यागोयथाभक्तिर्ममोर्जिततेतिवक्ष्यमाणत्वात् । यद्वाकिंभूतईश्वरःपरमः ब्रह्मरुद्रादिसेव्यत्वेनोत्कृष्टतमःश्रीकृष्णइतिभावः । श्रीकृष्णस्य परमत्वंपूर्वाचार्यैर्भागवतामृतेवर्णितं । तद्यथासर्वप्रधानानन्यापेक्षिमहैश्वर्यमाधुर्यःश्रीकृष्णएवस्वयंरूपःप्रायस्तस्यतुल्यशक्तिधारीयःस

तस्यविलासःयथावैकुंठनाथःन्यूनशक्तिधारीयःसस्वांशःयथामत्स्यकूर्मादिःयत्रैकशक्तिसंचारमात्रंसआवेशःयथापृथुनारदादिः।पुरुषावतार
गुणावतारलीलावतारभेदादवतारास्त्रिधा । महत्स्रष्टाकारणोदशायीप्रकृत्यंतर्यामीसंकर्षणांशःपुरुषःप्रथमः । गर्भोदशायीसमष्टिविराडंत
र्यामीप्रद्युम्नांशोद्वितीयःपुरुषः । क्षीरोदशायीव्यष्टिविराडंतर्याम्यनिरुद्धांशस्तृतीयःपुरुषइतिपुरुषावताराः । सत्वगुणेनविष्णुःपालनक
र्ताक्षीरोदनाथएव । रजोगुणेनब्रह्मासृष्टिकर्तागर्भोदशायिनाभिपद्मोद्भवः । क्वचित्कल्पेतुतादृशपुण्यकारीजीवएवब्रह्मा । तदातत्रेश्वरस्य
सृष्टिशक्तिसंचारेणावेशादावेशावतारएवरजोगुणयोगाद्गुणावतारत्वमपि । विष्णुनातस्यसाम्यंतुक्वचित्कल्पेस्वयमेवब्रह्माभवतियथायज्ञः
स्वयमेवेंद्रोजातइति । पातालादिसत्यलोकांतःसमष्टिविराट्स्थूलोब्रह्मणएवविग्रहःप्राकृतः । सोपिब्रह्माशुद्धोजीवःहिरण्यगर्भस्तस्यांतर्या
मीतुगर्भोदशायीश्वरएव । अथतमोगुणेनशिवःसंहारकर्ताक्वचित्स्वयंविष्णुरेवसदाशिवः । किंचसदाशिवःस्वयंरूपांगविशेषस्वरूपोनिर्गु
णएवसगुणशिवश्चांशः । ब्रह्मातुशिवान्नाधिकः । सगुणत्वेप्यस्यविष्णुनासाम्यमेवेतिगुणावताराः । लीलावतारास्तुचतुःसननारदवराह
मत्स्ययज्ञनरनारायणकपिलदत्तहयग्रीवहंसपृश्निगर्भर्षभपृथुनृसिंहकूर्मधन्वंतरिमोहिनीवामनपर्शुरामरघुनाथव्यासबलभद्रकृष्णबुद्धकल्की
त्यादयः । एतेप्रतिकल्पंप्रादुर्भवंति। मन्वंतरावतारास्तुयज्ञविभुसत्यसेनहरिवैकुण्ठाजितवामनसार्वभौमर्षभविष्वक्सेनधर्मसेतुसुधामयो
गेश्वरबृहद्भानवः । युगावतारास्तुशुक्लरक्तपीतकृष्णाः । एषांमध्येकेचिदावेशाःकेचित्प्रभावाःकेचिद्वैभवाःकेचित्परावस्थाः । चतुः
सननारदहरिविभुपृथुप्रभृतयआवेशाः।ततोधिकशक्तिमंतःप्रभावामोहिनीधन्वंतर्यृषभव्यासदत्तशुक्लादयः । ततोधिकशक्तिप्रकाशावैभवाः
मत्स्यकूर्मनरनारायणवराहहयग्रीवपृश्निगर्भबलदेवयज्ञादयः । ततोप्यधिकशक्तिमंतःपरावस्थाःउत्तरोत्तरश्रेष्ठास्त्रयःनृसिंहरामकृष्णाश्च । त
त्रापिश्रीकृष्णएवस्वयंभगवान्नततोधिकःकोप्यस्ति । तस्यवासस्थानानिपूर्वपूर्वमुख्यानिचत्वारि । व्रजमधुपुरद्वारावतीगोलोकाख्यानि ।
सपरिवारोबलदेवसहितोव्रजेपूर्णतमःमथुरायांपूर्णतरःद्वारिकायांप्रद्युम्नानिरुद्धसहितःसपरिवारःपूर्णःगोलोकेपूर्णकल्पोपिवृंदावनीयलील
त्वात्पूर्णतमसजातीयः।पूर्वपूर्वेषुमाधुर्याधिक्यतारतम्यादैश्वर्याच्छादनतारतम्यं। उत्तरोत्तरेषुमाधुर्यह्रासतारतम्यादैश्वर्य्यप्रकाशतारतम्यं।



यस्याजलेऽनेककोटिब्रह्मांडानिमहाविष्णुरोमकूपगतानितस्याविरजायामहावैकुण्ठलोकपरिखीभूतायाउपरिमहावैकुण्ठलोकःतदूर्ध्वभागे
गोलोकःतत्रगोलोकनाथःश्रीकृष्णोदेवलीलःसपरिवारोवर्त्तते । तस्यविलासोमहावैकुण्ठनाथःपरव्योमनामातस्यविलासोवासुदेवःतस्यवि
लासःपरमात्मा । ब्रह्मचनिर्विशेषरूपम् । गोलोकनाथस्यद्वितीयव्यूहोबलदेवस्तस्यविलासोमहावैकुण्ठेसंकर्षणःतस्यांशःकारणार्णवशा
यीतस्यविलासोगर्भोदशायीब्रह्मांडांतर्यामित्वेनप्रद्युम्नांशःतस्यविलासःक्षीरोदशायीअनिरुद्धांशःतस्यविलासोंतर्यामी । मत्स्याद्यवतारा
स्तुगर्भोदशायिविलासाः । द्वारकामथुरावृन्दावनाख्येधामत्रयेश्रीकृष्णस्यनरलीलत्वात् ऐश्वर्याधिक्यतारतम्यात्क्रमेणमाधुर्याधिक्यता
रतम्यम् । सालीलाद्विधाप्रकटाऽप्रकटाच । याबाल्यपौगण्डविलाससहस्रस्यसपरिकरस्यकृष्णस्यानंतप्रकाशेनानित्यमेवाप्रकटाली
लावर्ततेताएवएकेनैवप्रकाशेनसपरिकरेण कृष्णेनयदाप्रपञ्चेक्रमात्प्रकाश्यंतेतदाप्रकटाइति । गमनागमनेतुतत्तद्धामतःप्रकटलीलायामे
वेतिविशेषः । एकमेववृंदावनमेकैवमथुराएकैवद्वारावतीब्रह्मांडसमूहकोटिमध्यगतभारतभूमौतत्तदंडवासिजनैर्दृश्यते । प्रकटलीलाचज
न्मादिमौशलांताप्रत्येकब्रह्मांडसमूहेतत्रतत्रस्थैर्दृश्या । यथाज्योतिश्चक्रस्थएवसूर्येकिरणावलीति । यथाज्योतिश्चक्रस्थएवसूर्यएक
स्मिन्वर्षेपूर्वाह्णादिकंसमाप्यान्यस्मिन्प्रकाशयतिचएवमेवकृष्णः प्रकटप्रकाशोनिजधामस्थएवएकस्मिन्ब्रह्माण्डेबाल्यादिलीलाःसमाप्या
न्यस्मिन्प्रकटयतिअन्यस्मिन्नकिमपिनप्राकव्येत ॥ बाल्यादिलीलानित्याएवसच्चिदानन्दरूपाःमौशलमहिषीहरणलीलास्तुकृत्रिमा
एवेंद्रजालवत् ॥ लीलांतरस्यानित्यत्वसंगोपनार्थत्वमेतयोरुपासकाभावात् । किंचप्रकटलीलायामपिश्रीवृन्दावनस्यमणिमयभूम्या
दिकल्पवृक्षादिमत्त्वंतत्परिवारेणकेनचिदपिनदृश्यते । दृश्यतेचकेनचित्तदिच्छावशात् ॥ प्रकटलिलासमाप्त्यनन्तरंतुतत्रस्थजनेन
भजनाधिक्येनात्युत्कंठायांजातायामेवदृश्यते । तत्रापिस्ववासनातदिच्छानुसाराभ्यामितिविवेकः । एवंचसर्वरूपेभ्योव्रजेंद्रनन्द
नस्यमुख्यत्वं सर्वधामतोगोकुलस्यमुख्यत्वं । तत्रापिचतुर्द्धामाधुरीतस्यव्रजएवविराजते ॥ ऐश्वर्यक्रीडयोर्वेणोस्तथाश्रीविग्रहस्यच
॥ भागवतास्तु मार्कंडेयोंबरीषश्चवसुर्व्यासोविभिषणः ॥ पुंडरीकोबलिःशम्भुःप्रन्हादोविदुरोद्धवौ ॥ दाल्भ्यःपराशरोभीष्मोनार

दाद्याश्चवैष्णवाः ॥ एषुप्रल्हादःश्रेष्ठःततोपिपांडवास्तेभ्योपिकेचिद्यादवास्तेष्वप्युद्धवस्तस्मादपिव्रजदेव्यस्ताभ्योपिराधेति । तदुक्तं त्रैलोक्येपृथिवीधन्यायत्रवृन्दावनम्पुरम् ॥ तत्रराधासखीवर्गस्तत्रराधाप्रियाममेति कृष्णवाक्यमितिभागवतामृतेबहुशः श्रीकृष्णस्यमहत्वमुक्तं । किंभूतैःकृतिभिर्जन्मांतरेकृतपुण्यैःनहिपूर्वपुण्यंविनाभगवद्भक्तियोगोस्ति । दुरापाह्यल्पतपसः सेवावैकुण्ठवर्त्मसु ॥ यत्रोपगीयतेनित्यंदेवदेवोजनार्दनः॥इतिवक्ष्यमाणत्वात् । पञ्चमेपिभक्तियोगस्यदुर्लभत्वंसूक्तं॥राजन्पतिर्गुरुरलंभवतांयदूनांदैवंप्रियःकुलपतिःक्वचकिंकरोवः ॥ अस्त्वेवमंगभगवान्भजतांमुकुन्दोमुक्तिंददातिकर्हिचित्स्मनभक्तियोगमितिभगवत्प्राप्तिहेतुत्वादपिभक्तियोगएवन्याय्यः । यमेषवृणुतेतेनलभ्यइतिश्रुतेः भक्तियोगस्यमद्गतिरित्येकादशोक्तेश्चत्वंभक्तियोगपरिभावितहृत्सरोजआस्सेश्रुतेक्षितपथोननुनाथपुंसा

**निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ॥**
**पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ३ ॥**

मितिवक्ष्यमाणत्वादपिनहिभक्तेःप्रभावोवर्णयितुंशक्योयतःपतितानपिपावयतिभक्तिः। तदुक्तं भक्तिःपुनातिमन्निष्ठाश्वपाकानपिसंभवादिति । मद्भक्तियुक्तोभुवनंपुनातीतिबहुशस्तत्रतत्रोक्तत्वात् । नचैवंतमेवविदित्वातिमृत्युमेतिनान्यःपन्थाविद्यतेऽयनायेतिश्रुतिविरोधःशंकनीयः । भक्त्यवांतरव्यापारत्वाज्ज्ञानस्यनहिकाष्ठैःपचतीत्युक्तेर्ज्वालानामसाधनत्वमुक्तंभवति। किंबहुनाभक्तियोगोप्यनन्तरूपःसचापिसर्वशःकर्तुमशक्यस्तदपियथाकथंचित्स्वल्पोपिसर्वार्थसाधकएवभक्तानामिति ॥ यत्कर्म्मभिर्यत्तपसाज्ञानवैराग्यतश्चयत् । तत्सर्वंभक्तियोगेनमद्भक्तोलभतेंजसेतिश्रीमुखोक्तेरित्यलमतिप्रपञ्चेन॥इतिभगवद्भक्तियोगपक्षः ॥२॥ ॥ ॥ ॥ ॥ ॥
॥अथप्रसंगात्तृतीयश्लोकमपिश्रीकृष्णपक्षेयोजयिष्यामः॥भोभावुकाःभवंतीत्येवंशीलाभावुकाःभवनशीलाःपुमांसःयद्वाभोभावुकाविद्वांसः



भावयंतिचिंतयंतिसदसद्रूपमितिव्युपत्तेः।भूमिश्रीकरणचिंतनयोरतउकण्।यूयंभागवतंभगवतोमुकुंदस्यश्रीनन्दनंदनस्यरूपंवंशीविभूषितकरनवनीरदाभपीतांबरारुणबिंबफलाधरोष्ठपूर्णेंदुसुन्दरमुखारविंदलोचनंबल्लवीवृंदवंदितपदतामरसंमुहुःपौनःपुन्येनभजतश्रद्धातिशयेन सेवध्वं । किंभूतंनितरांगमयतिबोधयतिपुरुषार्थचतुष्टयामितिनिगमोवेदःसएवकल्पतरुस्सर्वार्थपूरणसमर्थद्रुमस्तस्यफलंफलवत्प्रकाश्यंवेदाध्ययनश्रवणादेःश्रीकृष्णरूपभजनमेवफलमन्यथातद्वृथैवेतिभावः । तदुक्तमपि वेदानांचेहसांगानामितिहासपुराणयोः ॥ अध्यापनादिसाफल्यंश्रीकृष्णंभजतांभवेत् ॥ अधीत्यचतुरोवेदान्योनध्यायेतकेशवम् ॥ वृथाश्रमोभवेत्तस्यापिष्टंपिष्टवतोयथेत्यादिपुराणात् ॥ द्वितीयेपितदुक्तं। भगवान्ब्रह्मकार्त्स्न्येनत्रिरन्वीक्ष्यमनीषया ॥ तदध्यवस्यत्कूटस्थोरतिरात्मन्यतोभवेदिति । दशमेपि दानव्रततपोहोमजपस्वाध्यायसंयमैः ॥ श्रेयोभिर्विविधैश्चान्यैःकृष्णेभक्तिर्हिसाध्यतइति । यद्वानितरांगम्यतेप्राप्यतेबहुपुण्यैरितिनिगमोनृदेहःसचासौकल्पतरुस्तस्यफलम् । मनुष्यदेहस्यहरिभक्तिरेवफलमित्यभिप्रायेणवक्ष्यति । दुर्लभोमानुषोदेहोदेहिनांक्षणभंगुरः॥ तत्रापिदुर्लभंमन्येवैकुण्ठप्रियदर्शनमिति । वैकुण्ठप्रियदर्शनादेवहरिभक्तिःप्राप्यतेइतिभावः । किंचसर्वेषामंगिनोंगानांभगवत्परिचर्ययैवसाफल्यमन्यथावैफल्यमितिवक्ष्यतिद्वितीये । बिलेबतोरुक्रमविक्रमान्येनशृण्वतःकर्णपुटेनरस्य ॥ जिह्वासतीदार्दुरिकेवसूतनचोपगायत्युरुगायगाथाः ॥ भारःपरंपट्टकिरीटजुष्टमप्युत्तमांगंननमेन्मुकुंदमित्यादिभिःश्लोकैः । किंचाभियुक्तैरप्युक्तं शरीरंसुरूपंतथावाकलत्रंधनंमेरुतुल्यंवचश्चारुचित्रम् ॥ हरेरंघ्रियुग्मेमनश्चेन्नदत्तंततःकिंततःकिंततःकिंततःकिमिति। ब्रह्माप्यग्रेवक्ष्यति येभ्यर्थितामपिचनोनृगतिंप्रपन्नाज्ञानश्चतत्वविषयंसहधर्मयत्र ॥ नाराधनंभगवतोवितरंत्यमुष्यसंमोहितावितताबतमाययाते ॥ इति । कपिलोपिमात्रेवक्ष्यति एतावानेवलोकेस्मिन्पुसांनिःश्रेयसोदयः ॥ तीव्रेणभक्तियोगेनमनोमय्यर्पितंस्थिरमिति । नारदोपि तज्जन्मतानिकर्माणितदायुस्तन्मनोवचः ॥ नृणांयेनेहविश्वात्मासेव्यतेहरिरीश्वरः ॥ इति । पञ्चमेपि प्राप्तानृजातिंत्विहयेचजंतवोद्रव्यक्रियाज्ञानकलापसंभृताम् ॥ नवैयतेरन्सपुनर्भवायतेभूयोवनौकाइवयांतिबन्धनमिति । श्रीशेषेणापि लब्ध्वेहमानुषींयोनिंज्ञानविज्ञानसंभवाम्॥ आत्मानंयोनबुध्येतनक्वचित्क्षेममाप्नुयादिति ।

आत्मानंश्रीकृष्णं कृष्णमेनमवेहित्वमात्मानमखिलात्मनामित्युक्तेः प्रल्हादोपि एतावानेवलोकेस्मिन्पुंसःस्वार्थःपरःस्मृतः ॥ एकांतभक्ति
र्गोविंदेयत्सर्वत्रतदीक्षणमिति । किंबहुनाहरिभक्तिरेवनृदेहफलम् । पुनःकिंशुकमुखेनबादरायण्यास्येनाद्यतआस्वाद्यतेवर्णनीयत्वेने
तिशुकमुखात् । तच्चाग्रेविशेषतोध्रुवचरितादौप्रकटीभविष्यत्येव । यद्वाशुकःमुखंप्रेष्ठंयस्यसःशुकमुखोव्यासस्तेनाद्यतइतितथा । मु
खमुपायेप्रारंभेप्रेष्ठेनिस्सरणास्ययोरितिविश्वः । शुकोव्याससुतेप्रोक्तोरावणस्यचमंत्रिणीतिच । यद्वाशुकःमुखमादिर्येषांतेशुकमुखाना
रदादयोमुनयस्तैरद्यतेवर्णनविषयतयास्वाद्यते इतितथा । अत्रात्तिरास्वादनेऽनेकार्थत्वाद्धातूनामिति । क्विबत्रप्रत्ययःकर्मणि । पुनः
किंभूतंअमृतद्रवेणनवनीतेनसंयुतंहस्तधृतनवनीतपिंडमितिभावः । अमृतंयज्ञशेषेस्यात्पीयूषेसलिलेघृते ॥ अयाचितेचमोक्षेचनाधन्वं
तरिदेवयोरितिहरिदीक्षितः । यद्वाऽमृतेननवनीतेनहेतुनाद्रवोधावनंतेनसंयुतंनवनीतंहृत्वाधावमानमित्यर्थः । यद्वानमेभक्तःप्रणश्यती
त्युक्तेरमृताभक्तास्तेषुद्रवोनुरागस्तेनसंयुतंभक्तप्रियमित्यर्थः । द्रवोविद्रवणेप्रोक्तोनुरागेरसनर्मणोः ॥ आसवेगमनेज्ञानेतोयेप्राप्तौविचा
रणे ॥ इतिनाममालायाम् । भक्तिमान्मेप्रियोनरइतिश्रीमुखोक्तेः । पुनःकिंभूतंअहोअद्भुतंभुविश्रीव्रजभूमौगलितंप्राप्तं । गलअदनग
त्योरितिक्तः । किंभूतायूयंरसिकाःरसज्ञाः । पुनःकिंभूतंरसंरसकदंबमूर्तिं।रसाश्चरौद्रोद्भुतश्चशृंगारोहास्यंवीरोदयातथा ॥ भयानकश्चबी
भत्सःशांतःसप्रेमभक्तिकः ॥ इति । रसमूर्तित्वंश्रीदशमे। मल्लानामशनिर्नृणांनरवरःस्त्रीणांस्मरोमूर्तिमान्गोपानांस्वजनोऽसतांक्षितिभुजां
शास्तास्वपित्रोःशिशुः । मृत्युर्भोजपतेर्विराडविदुषांतत्वंपरंयोगिनांवृष्णीनांपरदेवतेतिविदितोरंगंगतःसाग्रजः ॥ इतिभगवद्भक्तास्तुभ
क्तिरसमेवमुख्यंमन्यंते।अथभक्तिरसप्रपञ्चः।भक्तिर्द्विधावैधीरागानुगाच। यदिशास्त्रशासनभयेनश्रवणकीर्तनादीनिक्रियंतेतदावैधीभक्तिः।
निजाभिमतव्रजवासिजनानुसारिसेवाप्राप्तिलोभेनयदिश्रवणादीनिक्रियंतेतदारागानुगाभक्तिः । तदुक्तं सेवासाधकरूपेणसिद्धरूपेणचात्र
हि ॥ तद्भावलिप्सुनाकार्याव्रजलोकानुसारतः ॥ कृष्णंस्मरन्जनंचास्यप्रेष्ठंनिजसमीहितम् ॥ तत्तत्कथारतश्चासौकुर्याद्वासंव्रजेसदेति ।
तत्ररागानुरागायांस्मरणस्यमुख्यत्वं तच्चस्मरणं निजभावोचितलीलावेषस्वभावस्यश्रीकृष्णस्यतत्प्रियजनस्यच तथैवश्रवणंतथैवकीर्त्त

नादिकमितिअर्चनादावपिमुद्रान्यासाद्द्वारकाध्यानादिरुक्मिण्यादिपूजादिकमपि।निजभावप्रातिकूल्यादागमादिशास्त्रविहितमपिनका
र्यं।भक्तिमार्गेकिंचिदंगवैकल्येपिदोषाभावस्मरणात्।तद्वक्ष्यतिनह्यंगोपक्रमेध्वंसोमद्धर्मस्योद्धवाण्वपि॥इत्यादि।अंगिवैकल्येत्वस्त्येवदोषः।
तदुक्तं श्रुतिस्मृतिपुराणादिपञ्चरात्रविधिंविना ॥ ऐकांतिकीहरेर्भक्तिरुत्पातायैवकल्पते ॥ इति । यदिचांतरेरागोवर्त्ततेऽथचसर्वमेव
विधिदृष्ट्यैवकरोतितदाद्वारकायांरुक्मिण्यादिमतंप्राप्नोति । अत्रायंविवेकः।व्रजलीलापरिकरस्थशृंगारादिभावमाधुर्य्येश्रुतेइदंममापिभू
यादितिलोभोत्पत्तिकालेशास्त्रयुक्त्यपेक्षानस्यात् । सत्यांचतस्यांलोभत्वस्यैवासिद्धेः । नहिकेनचिच्छास्त्रदृष्ट्यालोभःक्रियतेकिंतुलोभ्ये
वस्तुनिश्रुतेदृष्टेवास्वतएवलोभउत्पद्यते । ततश्चतद्भावप्राप्त्युपायजिज्ञासायांशास्त्रापेक्षाभवेत् । शास्त्रएवतत्प्राप्त्युपायलिखनात् । ना
न्यत्र । तच्चशास्त्रंभजनप्रतिपादकंभागवतमेव । तेषुतेष्वपिमध्येकानिचित्तद्भावमयानिकानिचित्तद्भावसंबंधीनिकानिचित्तद्भावानुकूल्या
निकानिचित्तद्भावाविरुद्धानिकानिचित्तद्भावप्रतिकूलानींतिपञ्चविधानिसाधनानि । तत्रदास्यसख्यादीनिभावमयान्येव१ । गुरुपादाश्र
यतोमंत्रजपादीनितथाप्रेष्टस्यश्रीकृष्णस्यनिजसमीहितस्यतत्प्रियजनस्यसमयोचितानांलीलागुणरूपनाम्नांश्रवणकीर्तनस्मरणानिविवि
धपरिचरणानिचभावसंबंधीनि २ । तत्प्राप्त्युत्कंठायामेकादशीजन्माष्टमीकार्तिकव्रतभोगादित्यागादीनितयोरूपाणितथाश्वत्थतुलस्या
दिसंमानादीनितद्भावानुकूल्यान्येव ३। नामाक्षरमाल्यनिर्माल्यादिधारणप्रणत्यादीनितद्भावाविरुद्धानि४। उक्तान्येतानिसर्वाणिकर्तव्या
निन्यासमुद्राद्वारकादिध्यानादीनितद्भावप्रतिकूलानि ५ । एतानिरागानुगायांवर्जनीयानि । अथसाधनपरिपाकेनकृष्णकृपयाभक्तकृप
यावाभावभक्तिर्भवतितस्यचिह्नानिनव । क्षांतिरव्यर्थकालत्वंविरक्तिर्मानशून्यता ॥ आशाबंधःसमुत्कंठानामगानेसदारुचिः॥आसक्तिस्त
द्गुणाख्यानेप्रीतिस्तद्वसतिस्थले । इत्यादयोनुभावाःस्युर्जातभावांकुरेजने ॥ तदाकृष्णसाक्षात्कारेयोग्यताभवतिभावभक्तिपरिपाकएवप्रे
मातस्यचिह्नंविघ्नादिसंभवेपिकिंचिन्मात्रस्यापिनह्रासः । ममतातिशयःप्रेम्णएवोपरितनोऽवस्थाविशेषःस्नेहः । तस्यचिह्नंचित्तद्रवीभा
वोनिबिडःततोरागःतस्यलक्षणंकृष्णसंबंधेनमहादुःखमपिसुखमेवतत्संबंधंविनामहासुखमपिदुःखमेवततःप्रणयस्तस्यलक्षणंगाढविश्वासः

स्वस्वाम्यदृष्टयासंभ्रमाभावेनसख्यंमुमुक्षुप्रभृतिषुयदिभावचिह्नंदृश्यतेतदाभावप्रतिबिंबएव।ननुभावः अज्ञजनेषुभावच्छाया। अथस्थायी श्रीकृष्णविषयारातिःस्थायीभावः । सविभावानुभावसात्विकसंचारिमिलनेनरसोभवति । यत्रविषयेभावोभवतिसविषयालंबनविभावःकृष्णः। योभावयुक्तोभवतिसआश्रयालंबनविभावोभक्तः । येकृष्णंस्मारयंतिभूषणवस्त्रालंकारादयस्तेउद्दीपनविभावाः। येभावंज्ञापयंतितेनुभावानृत्यगीतवाद्यादयस्तत्रयेचित्तंतनुंवाक्षोभयंतितेसात्विकाःअष्ट।स्तंभःस्वेदोथरोमाञ्चोवेपथुःस्वरभेदकः॥ वैवर्ण्यमश्रुप्रलयाइत्यष्टौसात्विकाःस्मृताः॥एतेधूमायिताज्वलितादीप्ताउद्दीप्ताःसुदीप्ताइतिपञ्चविधायथोत्तरंमुख्याःस्युः। एतेयदिस्थायिभावोत्पन्नास्तदास्निग्धाः॥ जातरतिजनेयदिव्यभिचारभावोत्पन्नास्तदादिग्धाः॥भावशून्यभक्तजनेयदिजातास्तदारूक्षाः। मुमुक्षुजनेयदिजातास्तदारत्याभासजाः। कर्मिजनेविषयिणिचजनेयदिजातास्तदासत्वाभासजाः।पिच्छिलचित्तजनेतदभ्यासपरेवायदिजातास्तदानिःसत्वाः।भगवद्द्वेषिजनेयदिजातास्तदाप्रतीपाः। अथस्थायिभावपोषकायेतेव्यभिचारिणस्त्रयस्त्रिंशत्॥ निर्वेदोथविषादोदैन्यग्लानिश्रमौचमदगर्वौ । शंकात्रासोद्वेगाउन्मादापस्मृतीतथाव्याधिः। मोहोमृतिरालस्यंजाड्यंव्रीडावहित्थाच ।स्मृतिरथवितर्कचिंतामतिधृतयोहर्षउत्सुकत्वञ्च।औग्र्यामर्षासूयाचापल्यंचैवनिद्राच। सुप्तिर्बोधइतीमेभावाव्यभिचारिणःसमाख्याताः॥ ३३ अथैषांलक्षणानि । आत्मनिंदानिर्वेदः। अनुतापोविषादः। आत्मन्ययोग्यत्वबुद्धिर्दैन्यं। ग्लानिः श्रमजन्यदौर्बल्यं । श्रमःस्पष्टएव । मदोमधुपानादिमत्तता । गर्वोहंकारः । अनिष्टाशंकनंशंका। अकस्मादेवभयंत्रासः । चित्तसंभ्रमउद्वेगः। उन्मत्तताउन्मादः। अपस्मारव्याधिरपस्मृतिः। ज्वरतापोव्याधिः । मूर्च्छैवमोहः। मरणंमृतिः। आलस्यंस्पष्टम् । जाड्यंजडता । लज्जैवव्रीडा।आकारगोपनमवहित्था । पूर्वानुभूतवस्तुस्मरणंस्मृतिः ।अनुमानंवितर्कः । किंभविष्यतीतिभावनैवचिंता । शास्त्रार्थनिर्द्धारणंमतिः । धृतिर्धैर्यं। हर्षआनंदः। उत्कंठैवौत्सुक्यम् ॥ तीक्ष्णस्वभावतौग्र्यम्। असहिष्णुतामर्षः। गुणेपिदोषारोपोऽसूया। स्थैर्येऽशक्तिश्चापल्यं। सुषुप्तिरेवनिद्रा। स्वप्नदर्शनंसुप्तिः।जागरणंबोधः अविद्याक्षयश्च । किंचभक्तानांचित्तानुसारेणैवभावानांप्राकट्यतारतम्यंभवति । समुद्रवद्गंभीरेचित्तेऽप्राकट्यमल्पप्राकट्यंवा। अल्पखातजलवत्तरलेचित्तेऽतिशयप्राकट्यंकतिचिदगंभीरेचित्तेप्यतिप्राकट्यंभवतीतिनायमात्यंतिकोनियमइतिनतत्प्रपञ्चोलिखितः।अथस्थायीभावः। सचसामान्यरूपःस्वच्छरूपःशांत्यादिपञ्चविधरूपश्च । एकैकरसनिष्ठभक्तसंगरहितस्यजनस्यसामान्यभजनपरिपाकेनसामान्यरतिरूपःस्थायीभावःसामान्यरूपोभवति । शांतादिपंचविधभक्तेष्वपिअविशेषेणकृतसंगस्यभक्तजनस्यतत्तद्भजनपरिपाकेनपंचविधैवरतिःतत्तद्भक्तसंगवशात्स्वच्छारतिर्भवति। यत्रशांतदास्यसख्यवात्सल्यादिकमपि । तथाकदाचिच्छांतिःकदाचिद्दास्यंकदाचित्सख्यंकदाचिद्वात्सल्यंकदाचित्कांतभावश्चनत्वेकत्रनैष्ठिकत्वंतदास्वच्छारतिरूपः । अथपृथक्पृथक्रसैकनिष्ठेषुभक्तेषुशांत्यादित्रिविधमप्युदयते । अथपञ्चविधरूपः। शांतभक्तानांशांतिः। दास्यभक्तानांप्रीतिः। सख्यभक्तानांसख्यं । वात्सल्यभक्तानांवात्सल्यं । उज्ज्वलभक्तानांप्रियता।एवमेतेस्थायीभावाःविभावादिमिलनेनशांतदास्यसख्यवात्सल्योज्ज्वलाःपंचमुख्यरसायथोत्तरश्रेष्ठाः। शांतेश्रीकृष्णनिष्ठबुद्धिवृत्तिता। दास्येसेवा। सख्येनिःसंभ्रमता। वात्सल्येस्नेहः। उज्ज्वलेस्वांगसंगदानेनसुखोत्पादनम् । एवंपूर्वपूर्वगुणउत्तरोत्तरस्थाःस्युः । अथशांतरसेनराकृतिपरब्रह्मचतुर्भुजःपरमात्माइत्यादिगुणःश्रीकृष्णोविषयालंबनः । सनकसनातनादयस्तपस्विनश्चज्ञानिनोमुमुक्षांत्यक्त्वाकृष्णभक्तकृपयाभक्तिवासनायुक्तायदिस्युस्तदातेआश्रयालंबनाः । तत्वविचारवनशैलादिवासिजनसंगसिद्धक्षेत्राद्याउद्दीपनविभावाः। नासिकाग्रदृष्टिःअवधूतचेष्टानिर्ममताभगवद्द्वेषिजनेपिनद्वेषःतद्भक्तजनेपिनातिभक्तिःमौनंज्ञानशास्त्रेऽभिनिवेशइत्यादयोऽनुभावाः। अश्रुपुलकरोमांचाद्याःप्रलयवर्जिताःसात्त्विकाः । निर्वेदमतिधृत्यादयःसंचारिणः। शांतिःस्थायी । इतिशांतरसः ।अथदास्यरसः। ईश्वरःप्रभुःसर्वज्ञःशरणागतपालकःभक्तवत्सलइत्यादिगुणःश्रीकृष्णोविषयालंबनःआश्रयालम्बनादासाश्चतुर्विधाःअधिकृतभक्ताआश्रितभक्ताःपार्षदाअनुगाइति। ब्रह्मशंकरेंद्रादयोधिकृतभक्ताः। आश्रितास्त्रिधाशरण्याज्ञानिचराःसेवानिष्ठाश्च। कालियमागधवृद्धराजादयःशरण्याः। प्रथमतोज्ञानिनोपिमुमुक्षांत्यक्त्वायेदास्येप्रवृत्तास्तेशौनकादयोज्ञानिचराः। येप्रथमतएवभजनेरतास्तेचंद्रध्वजहरिहरबहुलाश्वादयःसेवानिष्ठाः।उद्धवदारुकश्रुतदेवादयःपार्षदाः। रक्तकपत्रकमधुकण्ठपयोदादयोव्रजेऽनुगाः।एषांमध्येसपरिवाराएवश्रीकृष्णेयथोचितंभक्तिमंतोयेते

धुर्यभक्ताः । येकृष्णप्रेयसीवर्गैआदरयुक्तास्तेधीरभक्ताः। येतुतत्कृपाप्राप्यवर्गैणकमपिनगणयंतितेवीरभक्ताः । एतेसर्वेसम्भ्रमप्रीतियुक्ताः
गौरवप्रीतियुक्तास्तुप्रद्युम्नसांबगदादयःश्रीकृष्णस्यलाल्यास्तेसर्वेकेचिन्नित्यासिद्धाःकेचित्साधनसिद्धाःकेचित्साधकाःश्रीकृष्णानुग्रहचरणधू
लिमहाप्रसादादयउद्दीपनविभावाःश्रीकृष्णस्याज्ञाकरणादयोऽनुभावाः। स्तम्भादयोऽष्टसात्विकाः।हर्षादयःसंचारिणः।प्रभुताज्ञानेनात्मन
श्चेतासिसंभ्रमः।पितृत्वादिभावादादरश्चस्थायीभावः। प्रेमारागःस्नेहश्चात्ररसेभवति। अधिकृतेआश्रितेचभक्तेप्रेमपर्यंतोभवतिस्थायी ।पा
र्षदेस्नेहपर्यंतः । परीक्षितिदारुकेउद्धवेचरागःप्रकटएव । व्रजानुगेरक्तकादौसर्वएव । प्रद्युम्नादावपिसर्वएव । यावत्पर्यंतंश्रीकृष्णदर्शनंप्र
थमतोनभवतितावत्कालमयोगः । दर्शनानंतरंयदिविच्छेदस्तदावियोगः। तत्रदशदशाअंगेषुतापःकृशताजागर्यालंबशून्यता॥अधृतिर्जड
ताव्याधिरुन्मादोमूर्च्छितंमृतिरिरिति।इतिदास्यरसः।अथसख्यरसः।विदग्धोबुद्धिमान्सुवेशःसुखीत्यादिगुणःश्रीकृष्णोत्रविषयालंबनः।आश्र
यालम्बनाःसखायश्चतुर्द्धा।सुहृदःसखायःप्रियसखाःप्रियनर्मसखाश्च । येकृष्णस्यवयसाधिकास्तेसुहृदःकिंचिद्वात्सल्यवन्तःसुभद्रमंडलीभद्र
बलभद्राद्याः। येकिंचिद्वयसान्यूनास्तेकिञ्चिद्दास्यमिश्रिताःसखायःविशालर्षभदेवप्रस्थादयः। येवयसातुल्यास्तेप्रियसखाःश्रीदामाचसुदा
माचदामाचवसुदामकइत्याद्याः । येतुप्रेयसीरहस्यसहायाःशृंगारभावानुमोदकास्तेप्रियनर्मसखाःसुबलमधुमंगलोज्ज्वलार्जुनादयः। कृष्णस्य
कौमारपौगंडकैशोराणिवयांसिशृंगवेणुदलवाद्यादयश्चोद्दीपनविभावाः।कौमारंपंचमाब्दांतंपौगंडंदशमावधि ॥ कैशोरमापंचदशाद्यौवनंतु
ततःपरम्॥अष्टमासाधिकदशवर्षपर्यंतंश्रीकृष्णस्यव्रजेप्रकटविहारः। अतएवकृष्णस्यालपकालतएववृद्धयामासचतुष्टयाधिकवत्सरत्रयपर्य
न्तंकौमारं । ततःपरमष्टमासाधिकषड्वर्षपर्यंतंपौगण्डं । ततःपरंदशवर्षपर्यंतंकैशोरं । ततःपरमापिसर्वकालंव्याप्यदशवर्षंकैशोरंत
त्रैवसदास्थितिः । एवंचसप्तमेवर्षेवैशाखेमासिकैशोरारंभः । तत्रवैशाख्यांपूर्णिमायांप्रेयसीवृन्दमुख्ययाप्राथमिकःसंगमः । सोयंवसंतसम
यःसमियाययस्मिन्पूर्णंतमाश्विरमुपोढनवानुरागम् ॥ गूढग्रहारुचिरयासहराधयासौरंगायसंगमयितानिशिपौर्णमासीतिविदग्धमाधवप्र
सिद्धेः । अतएवप्रसिद्धपौगण्डमध्यएवप्रेयसीभिर्विहारस्तदपिताद्दशसमयभूतत्वादितिप्रसंगाल्लिखितम् । बाहुयुद्धखेलाएकत्रशयनादयो

ऽनुभावाःसर्वएवात्रसात्विकाः । हर्षगर्वाद्याःसंचारिणः।साम्यदृष्टयानिःसंभ्रमतामयविश्वासविशेषःसख्यरातिः। स्थायीभावःरतिःप्रणयः
प्रेमास्नेहोरागश्चेतिपञ्चविधः । अर्जुनभीमसेनद्रौपदीश्रीदामविप्राद्याअन्यत्रसखायः । अत्रापिवियोगेदशदशाःपूर्ववत्। इतिसख्यरसः ।
अथवात्सल्यरसः । कोमलांगोविनयीसर्वलक्षणयुक्तइत्यादिगुणःश्रीकृष्णोविषयालंबनःकृष्णेभाववंतोमातापित्रादयोऽत्रव्रजेश्वरीव्रजराज
रोहिण्युपनन्दपत्न्यादयश्च । तथादेवकीकुन्तीवसुदेवादयश्चाश्रयालम्बनाः । स्मितजल्पितबाल्यचेष्टाद्याउद्दीपनाः । मस्तकघ्राणाशी
र्वादलालनपालनादयोऽनुभावाःसात्विकाःसर्वेस्तनस्रवश्चेतिनवसंख्याः । हर्षशंकाद्याव्यभिचारिणः। वात्सल्यंस्थायीभावः प्रेमस्नेहरागा
अत्रभवंतिवियोगेदशदशाःपूर्ववदितिवात्सल्यरसः। अथमधुररसः । रूपमाधुर्यवेणुमाधुर्यलीलामाधुर्यप्रेममाधुर्यसिंधुःश्रीकृष्णोविषयाल
म्बनः । मुरलीरववसंतकोकिलादयउद्दीपनाः । कटाक्षस्मितादयोनुभावाः सात्विकाःसर्वेसुदीप्तपर्यंताः । निर्वेदाद्याःसर्वेआलस्यौग्र्यर
हिताव्यभिचारिणः । प्रियतारातिस्थायिभावःप्रेमस्नेहरागाद्याउज्वलनीलमण्युक्ताःसर्वेभवंति । इतिमधुरसः ॥ अथैषांवैरमैत्रीस्थितिः ।
शांतस्यदास्यस्यचपरस्परंमैत्री । सख्यवत्सलौतटस्थौ । उज्ज्वलःशत्रुः । सख्यस्योज्ज्वलस्यचपरस्परंमैत्री । उज्ज्वलस्यशांतवत्सलौश
त्रू ।सख्यस्यतुउज्ज्वलशांतौतटस्थौ । वत्सलस्यचनकेनापिमैत्री । उज्ज्वलदासौमित्रेइतिवैरमत्र्यादिः । अथभावमिश्रणं। बलदेवादीनां
सख्यंवात्सल्यंदास्यञ्च । मुखराप्रभृतीनांवात्सल्यंसख्यंच । युधिष्ठिरस्यवात्सल्यंदास्यंसख्यञ्च।भीमस्यसख्यंदास्यंवात्सल्यञ्च। नकुलस
हदेवयोर्दास्यंसख्यंच । उद्धवस्यदास्यंसख्यंच । अक्रूरोग्रसेनादीनांदास्यंवात्सल्यंच । अनिरुद्धादिनप्तृणांदास्यंसख्यंचेति । एवंपञ्चमु
ख्यरसाः । अथहास्याद्भुतवीरकरुणरौद्रभयानकबीभत्साःसप्तगौणभक्तिसाःपञ्चविधभक्तेष्वेवोदयंते । तएवाश्रयालम्बनाः । हास्यादीनां
षण्णांकृष्णः।कृष्णसंबंधिनश्चविषयालम्बनाः । बीभत्सस्यतुघृणास्पदामेध्यमांसशोणितादयोविषयालंबनाः । रौद्रभयानकयोःश्रीकृष्ण
शत्रवोपिविषयाः। गंडविकासनेत्रविस्तारादयोयथासम्भवमनुभावाः।सात्विकाअपियथासंभवंद्वित्राः हर्षविमर्षाद्याव्यभिचारिणः । हासो
विस्मयउत्साहः शोकक्रोधौभयंतथा ॥ जुगुप्साचेत्ययंभावविशेषःसप्तधोदितः । एतेस्थायिभावाः। किंचवीररसेयुद्धदानदयाधर्मेषुरुत्सा

हवशात् युद्धवीरदानवीरदयावीरधर्मवीराइतिचतुर्द्धावीररसः । इतिसप्तगौणरसाः । एवंमिलित्वाद्वादशरसाभवंति। अथैषांसप्तानां
गौणानांपंचमुख्येष्वेवांतर्भावोयथाहास्ययुद्धवीरयोः सख्ये अद्भुतस्यसर्वत्रकरुणादानवीरदयावीराणांवात्सल्ये । भयानकवत्सलेदास्ये
च । बीभत्सस्यशांते । रौद्रस्यतुक्रोधवतिवत्सलेउज्ज्वलपरिवारेषुएकांशेनेत्यनेनैवपरस्परमैत्रीज्ञेया । वैरंचयुक्त्याज्ञेयं । वैरसरस्यस्म
रणेवाबाध्येवाविषयाश्रयाभेदेवोपमायांवारसांतरव्यवधानेवावर्णनेसातिनरसाभासः । यदिपरस्परमैत्रयोर्योगस्तदासुरसता । मुख्यानांप
श्चानांतुविषयाश्रयभेदेपिवैरयोगेरसाभासएव । अधिरूढमहाभावेकेवलंराधायास्तुवैरयोगेपिवर्णनपरिपाद्यानरसाभासः । किंचकृष्णोयदि
स्वयमेकदैवसर्वरसानांविषयोवाआश्रयोवातदापिनरसाभासः । अथान्येपिरसाभासाः केचिदसह्यप्रायाः। कृष्णेयदिब्रह्मतश्चमत्काराधिक्यं
नभवतितदाशांतरसाभासः। कृष्णाग्रेयदिदासस्यातिधाष्टर्यंभवतितदादास्यरसाभासः । पुत्रादीनांबलाधिक्यज्ञानदृष्टचालालनाद्यकरणंवा
त्सल्यरसाभासः । द्वयोर्मध्येएकस्यरमणेच्छाऽन्यस्यनास्तिप्रकटमेवसंभोगप्रार्थनंवातदोज्ज्वलरसाभासः । कृष्णसम्बन्धवर्जिताश्चेद्धास्या
दयस्तदातेहास्यादिरसाभासाः । यदिकृष्णवैरिषुभवंतितदातिरसाभासः। अथोज्ज्वलरसमप्याह। विशेषतोमुख्यत्वादिति । तत्रविषयालंब
नोपिनायकचूडामणिःश्रीकृष्णः सगोकुलमथुराद्वारकासुक्रमेणपूर्णतमःपूर्णतरःपूर्णइतित्रिविधः । पूर्णतमत्वादीनांलक्षणानिपूर्वमुक्तानि
कृष्णपक्षव्याख्याने । सचधीरोदात्तोधीरललितोधीरोद्धतोधीरशांतइतिप्रत्येकंचतुर्विधएवंकृत्वाद्वादशधा। तत्ररघुनाथवद्गांभीर्यविनयं
सर्वजनसन्मानकारित्वादिगुणवान्धीरोदात्तः । कन्दर्पवत्प्रेयसीवशोनिश्चिन्तोविदग्धोधीरललितः । भीमसेनवदौद्धत्यात्मश्लाघारोष
कैतवादियुक्तोधीरोद्धतः। युधिष्ठिरवद्धार्मिकोजितेंद्रियः शास्त्रदर्शीधीरशांतः । सचपत्युपपतिभेदात्पुनर्द्विधा । एवंकृत्वाचतुर्विंशति
धास्यात् । पुनश्चसोप्यनुकूलदक्षिणधृष्टशठभेदाच्चतुर्द्धा। एवंकृत्वाषण्णवतिभेदवान्भवति । तत्रैकस्यामेवनायिकायामनुराग्यनुकूलः ।
सर्वत्रसमोदाक्षिणः ॥ साक्षात्प्रियंवक्तिपरोक्षेऽप्रियंकरोतियःसशठः ॥ अन्यसंभोगादिचिन्हयुक्तोनिर्भयोमिथ्यावादीयःसधृष्टः ॥ अ
थाश्रयालम्बननायिकापिप्रथमंस्वकीयापरकीयेतिद्विधा । कात्यायनीव्रतकन्यानांमध्येयागांधर्वेणाविवाहिताःप्रच्छन्नतयाताःस्वकीयाः

तदन्याधन्याधान्यादयःकन्याःपरकीयाः। श्रीराधिकाद्यास्तुपरोढाःपरकीयाएव। किञ्चगोकुलेस्वकीयाअपिपित्रादिशंकयापरकीयाएव।
द्वारकायांरुक्मिण्याद्याःस्वकीयाएव। ताश्चमुग्धामध्याप्रगल्भाइतित्रिविधाः। मध्यातुमानसमयेधीरमध्याऽधीरमध्याधीराधीरमध्येतित्रि
धा । वक्रोक्तिपवित्रभर्त्सनकारिणीयासाधीरमध्या । निष्ठुरवाक्यायासाऽधीरमध्या । मिश्रितवाक्यासाधीराधीरमध्या । राधाप्रग
ल्भापिधीरप्रगल्भाऽधीरप्रगल्भाधीराधीरप्रगल्भेतित्रिधा । निजरोषगोपनपरासुरतेप्युदासीनायासाधीरप्रगल्भा । चंद्रावलीभद्रानिष्ठुर
तर्जनेनकर्णोत्पलेनचयाकृष्णंताडयेत्साधीरप्रगल्भा । श्यामलारोषसंगोपनंभंग्याकिंचित्तर्जनंचयाकरोतिसाधीराधीरप्रगल्भा मंगला ।
मुग्धातुरोषेणमौनमात्रपरैकविधैव । मध्यात्रिधाप्रगल्भात्रिधाएवंकृत्वासप्तविधास्ताश्चस्वकीयापरकीयाभेदेनचतुर्दशविधाकन्याचमुग्धै
वेत्येकविधेतिपञ्चदशनायिकाभवन्ति । अथाष्टौनायिकाः। अभिसारिकावासकसज्जाविरहोत्कंठिताविप्रलब्धाखंडिताकलहांतरितास्वा
धीनभर्तृकाप्रोषितभर्तृकाभेदात्। तत्रयाकृष्णमभिसारयतिसाभिसारिका । कुंजमन्दिरेसुरतशय्यादिकंयासज्जीकरोतिरमणोत्सुकासावा
सकसज्जा । याकृष्णविलंबेसातितिरहेणोत्कंठितासाविरहोत्कंठिता । यदानायात्येवकृष्णस्तदाविप्रलब्धा। याप्रातरागतमन्यस्त्रीसंभोगां
कयुतंकृष्णंरोषेणपश्येत्साखण्डिता । मानांतेयापश्चात्तापंकरोतिसाकलहांतरिता । सुरतांतेवेषाद्यर्थंकृष्णंयाज्ञापयतिसास्वाधीनपति
का । कृष्णस्यमथुरागमनेयादुःखितासाप्रोषितभर्तृका। अथपञ्चदशानामष्टगुणितत्वेविंशत्युत्तरंशतंभवति । पुनश्चोत्तममध्यमकनिष्ठत्वे
नषष्ठ्युत्तरशतत्रयभेदभिन्नानायिकाःस्युस्तासुव्रजसुंदरीणांमध्येकाश्चिन्नित्यसिद्धाःश्रीराधाचंद्रावल्याद्याःकाश्चित्साधनसिद्धाःकाश्चिन्मु
निपूर्वाःकाश्चिच्छ्रुतिपूर्वाःकाश्चिद्देव्यइतिज्ञेयाः। अथतासांस्वभावाः। काश्चित्प्रखराःश्यामलामंगलाद्याः काश्चिन्मध्याःश्रीराधालीलाप्र
भृतयः । काश्चिन्मृद्वीतिख्याताश्चंद्रावलीप्रभृतयः । अयपक्षाः । स्वपक्षसुहृत्पक्षतटस्थपक्षप्रातिपक्षभेदाच्चतुर्द्धा । श्रीराधायाःस्वप
क्षः । ललिताविशाखादीनांसुहृत्पक्षः । श्यामलायूथेश्वर्यादीनांतटस्थपक्षः । भद्रादीनांप्रतिपक्षः। चंद्रावलीश्रीराधाचवामामध्यानी

१ परैरापाणाद्यैरूढाः ॥

लवस्त्रारक्तवस्त्राच । ललितावामाप्रखराशिखिपिच्छवसना । विशाखावामामध्यातारावलीवसुना । चंपकलतावामामध्यानीलवसना ॥ चित्रादक्षिणा मृद्वीनीलवसना।तुंगविधादक्षिणाप्रखराशुक्लवस्त्राचंदनगौरीच । इंदुलेखावामाप्रखराऽरुणवस्त्रा । रंगदेवीसुदेवीचवामा मध्यारक्तवस्त्राभद्रादक्षिणामृद्वीचित्रवसना। अस्याःसखीपद्मादक्षिणाप्रखरा । शैब्यादक्षिणामृद्वी । दूतीद्विधा स्वयंदूत्याप्तदूतीच । अंत्यात्रिधा मितार्थानिसृष्टार्थापत्रहारिणीच ॥ वाक्यंविनेंगितेनयादौत्यंकरोतिसामितार्था । याज्ञयासमस्तकार्यभारंवहतिसानि सृष्टार्था । यापत्रेणकार्यंसाधयतिसापत्रहारिणी । ताश्वशिल्पकारिणीदैवज्ञालिंगिनीपरिचारिकाधात्रेयीवनदेवीचेत्याद्याः । व्रजे यातुस्वयमेवदौत्यंकरोतिसाद्येतिबोध्यम् । वीरावृंदावंशीचेतिकृष्णस्यदूतीत्रयम् । प्रगल्भवचनावीराप्रियवादिनीवृंदासर्वकार्यसा धिनीवंशी। अथसखीपंचधासखीनित्यसखीप्राणसखीप्रियसखीपरमेष्टसखीच। एतासुकाचित्समस्नेहाकाचिदसमस्नेहा।याकृष्णेस्नेहाधिका सासखीकुसुमिकाविंध्याधनिष्ठाद्यायाराधायांस्नेहाधिकासानित्यसखीकस्तूरिकामाणिभंजर्याद्या । यातत्रमुख्यासाप्राणसखीशशिमुखी वासंतीलामिकाद्या । द्वयोरेवयासमस्नेहासाप्रियसखीकुरंगाक्षीकंदर्पसुंदरीशशिकलाद्या । यातत्रमुख्यासापरनेष्टसखीललिताविशा खाचंपकलताचित्रातुंगविद्येंदुलेखारंगदेवीसुदेवीचयद्यपिसमस्नेहातथापिराधायाःपक्षपातंकरोति । यौवनंतुसंभिन्नयौवननवयौवनऽव्य क्तयौवनपूर्णयौवनभेदाच्चतुर्द्धा। कलावत्याद्याःसंभिन्नयौवनयौवनसन्धिस्थाः । धन्याद्यानवयौवनस्थाः । श्रीराधाद्याव्यक्तयौवन स्थाः। चंद्रावल्याद्याःपूर्णयौवनस्थाइत्यालंबनविभावाः। अथोद्दीनपविभावाः । तेचगुणनामतांडववेणुवाद्यगोदोहनविभूषणगतिचरण चिह्नरंगसौरभ्यनिर्माल्यबर्हगुंजावतंसकालमेघचंद्रदर्शनादिभेदाद्बहुविधाः। अथानुभावाः भावहावहेलाशोभाकांतिदीप्तिमाधुर्यप्रगल्भ तौदार्य्यधैर्यलीलाविलासविच्छित्तिविभ्रमकिलकिंचित्तमोट्टायितकुट्टमिताविव्वोकललिताविहृताइतिविंशतिरेव । तत्रचित्तस्यप्रथमविका

१ द्वादशवार्षिकासंभिन्नयौवनाषोडशवार्षिकानवयौवनविंशतिवर्षाऽव्यक्तयौवनात्रिंशद्वर्षापूर्णयौवनेतिविवेकः । पुरुषस्तुषोडशाब्दस्संभिन्नयौवनस्ततश्चतुर्विंशाब्दांतोन वयौवनस्ततद्वाद्वात्रिंशदंतोऽव्यक्तयौवनस्ततश्चत्वारिंशदब्दांतःपूर्णयौवनइतिशृंगाररत्ने ॥



रोनेत्रचापल्यसूच्योभावः१। तिर्यग्ग्रीवाभ्रूनेत्रादिविकाशसूच्योहावः२। कुचस्फुरणपुलकनीवीस्खलनादिसूच्योहेला ३ । संभोगानंत रंगात्रभूषादीनांसालसत्वमस्तव्यस्तत्वंचशोभा ४ । शोभैवयौवनोद्रेकेकांतिः ५ । कांतिरेवदेशकालसंभोगवैशिष्टचदीप्तिः६। नृत्यादिश्र मजनितगात्रशैथिल्यंमाधुर्य्यम् ७। संभोगवैपरीत्यंप्रगल्भता ८। रोषेपिविनयव्यंजनमौदार्य्यम् ९ दुःखसंभावनायामपिप्रेम्णिनिष्ठाधैर्यम् १० । कांतचेष्टानुकरणंलीला ११।प्रियसंगेरतिसुखादीनांतात्कालिकीप्रफुल्लताविलासः१२। अल्पमात्राभरणाधारणेपिशोभाविच्छित्तिः १३। अभिसारादावतिसंभ्रमेणहारमाल्यादिस्थानविपर्ययोविभ्रमः १४ । वर्त्मरोधनादौगर्वाभिलाषरुदितस्मितासूयाभयक्रुधांसंकरीकर णंहर्षादुच्यतेकिलकिंचितम् १५ । कांतवार्त्ताश्रवणेपुलकादिभिरभिलाषस्यप्राकट्यंमोट्टायितम् १६ । सुखेदुःखचेष्टाकुट्टमितम् १७। वांछि तेपिवस्तुनिगर्वेणानादरोविव्वोकः१८। भ्रूभंग्यांगमंग्याद्यसझणत्कारहस्तेनभ्रमणाविद्रावणादिचेष्टितंललितम् १९।लज्जादिभिर्यन्निजका र्यंनोच्यतेकिंतुचेष्टयाव्यज्यतेताद्विहृतम् २० । क्वचिद्द्वयमधिकं । ज्ञातस्याप्यज्ञवत्प्रश्नोमौग्ध्यम् १ । प्रियस्याग्रेभ्रमरादिकंदृष्ट्वा भयंचकितम् । अथान्येनुभावाः । नीव्युत्तरीयधमिल्लस्रंसनंगात्रमोटनम् ॥ जृंभाघ्राणस्यफुल्लत्वंनिःश्वासाद्याश्चतेमताः ॥ १ ॥ अथ सात्विकाः । स्तंभस्वेदादयोष्टौधूमायितप्रज्वलितदीप्तोद्दीप्तसुदीप्ताः । अथव्यभिचारिणोनिर्वेदाद्याभावास्त्रयस्त्रिंशत्तेचपूर्वमुक्ताः । तत्रभा वोत्पत्तिर्भावसंधिर्भावशाबल्यंभावशांतिरितिदशाचतुष्टयम् । भावोत्पत्तिःस्पष्टार्था। भावद्वयस्यमिलनंभावसंधिः । पूर्वपूर्वभावस्यपरप रभावेनोपमर्दोभावशाबल्यं। भावस्यांतर्द्धानंभावशांतिः । अथस्थायीभावाः । मधुरारतिःसाचत्रिधा साधारणिसमंजसासमर्थेतिभेदा त् । कुब्जायांसाधारणीमणिवत् । पट्टमहिषीषुसमंजसाचिंतामणिवत् । व्रजदेवीषुसमर्थाकौस्तुभमणिवत् । सामान्यभावेनस्वसुखतात्प र्यवतीसाधारणी । कृष्णस्यनिजस्यचसुखतात्पर्यवतीपत्नीभावमयीसमंजसा । केवलंकृष्णस्यसुखतात्पर्यवतीपरांगनाभावमयीसमर्था। ततःसमर्था । प्रथमदशायारतिर्बीजवत् १ । ततःप्रेमेक्षुवत् २ । ततःस्नेहोरसवत् ३ । ततोमानोगुडवत् ४ । ततःप्रणयःखण्डवत् ५ । त तोरागःशर्करावत् ६ । ततोनुरागःसितावत् ७ । ततोमहाभावःसितोपलवत् ८ । अथैषांलक्षणानि । पूर्वसंस्कारतोबाललालनादिनि

छास्वरूपाद्वाश्रवणदर्शनादिभ्योवाकृष्णेप्रीत्यामनोलग्नतारतिः १ । विघ्नसंभवेपिह्रासाभावःप्रेमा २ । चित्तस्यद्रवीभावनिदानंस्नेहः३ ।
तत्रचंद्रावल्यादौतदीयताभावेनघृतस्नेहआदरमयोभावांतरामिश्रितएव । सुरसोयथाघृतम् । श्रीराधादौमदीयताभावेनमधुस्नेहआदरशू
न्यःस्वतएवसुरसोयथामधु । अथमानः । स्नेहाधिक्येनभद्राभद्रहेतुनावारोषोहेतुनाविनैववाम्यंमानः । चंद्रावल्यादौदाक्षिण्योदात्तःक्वाचि
द्वाम्यगंधोदात्तःकिंचिदनादरसूचकमौदासीन्यं । श्रीराधादौकौटिल्यलालितम् कुटिलभावोद्गारणंनर्मललितश्चवक्रोक्तिमधुरव्याहारमयः ।
अथप्रणयः । मनोदेहेन्द्रियैरैक्यभावनामयोविस्रंभःप्रणयः । चंद्रावल्यादौविनययुक्तंमैत्र्यंसुमैत्र्यंच । श्रीराधादौस्ववशतामयंसख्यंसुसख्य
ञ्च । अथरागः । श्रीकृष्णसंबंधेनाधिकंदुःखमपिसुखमेव तत्सम्बंधंविनासुखमपिदुःखमेवेतियतोभवतिसरागः । तत्रचंद्रावल्यादौनीलीरा
गःस्वलग्नभावावरणः । तथैवश्यामारागोभद्रादौचिरसाध्यरूपः । श्रीराधादौतुमंजिष्ठारागोऽनन्यापेक्षः । भावावरणशून्यः । तथैवश्या
मलादौकुसुंभरागःसुखसाध्यत्वात्किंचिदन्यापेक्षः । पात्रसाद्गुण्यात्स्थिरः । अथानुरागः । याकृष्णेसदानुमतेऽथचनवनवोऽपूर्वइवेतिबुद्धि
र्यतोभवतिसोनुरागः । अत्राप्राणिन्यपिजन्मलालसासप्रेमवैचित्त्यंविच्छेदेपिपूर्त्तिरित्यादिक्रिया । अथमहाभावः । अनुरागएवनिःसीम
वृद्धिंप्राप्तःसूर्यइवरविकांतेप्रियसंबंधिजन्ममात्रएवस्वभावसमर्पकोयदिभवतितदासमहाभावः । सोपिरूढाधिरूढभेदाद्विधा । कृष्णस्यसु
खेपिपीडाशंकयाखेदः । निमेषस्याप्यसहिष्णुत्वादिकंयत्रसरूढोमहाभावः । कोटिब्रह्मांडगतसमस्तसुखमपियस्यसुखस्यलेशोपिनभव
तिसमस्तवृश्चिकसर्पादिदंशकृतमपिदुःखमपियस्यदुःखस्यलेशोपिनभवतिकृष्णसंयोगवियोगत एतेसुखदुःखेयतोभवतःसोधिरूढोमहाभा
वः । सोधिरूढएवमोदनमादनभेदाद्विधा । यस्योदयेकृष्णतत्प्रेयसीनामन्यासामपिमहाविक्षोभचमत्कारोभवेत् सुदीप्तसात्विकविकारद
र्शनात् समोदनोराधिकायूथएवभवतिनान्यत्र । मोदनोयंप्रतिश्लेषेमोहनोभवेत् । यस्योदयेसतिपट्टमहिषीगणालिंगितस्यापिकृष्णस्य
मूर्च्छाराधाविरहतापेनब्रह्मांडक्षोभकारित्वंतिरश्चामपिरोदनं । प्रायोवृन्दावनेश्वर्यांमोहनोयमुदंचति ॥ मोहनस्यवृत्तिभेदएवदिव्योन्मा
दः । यत्रभ्रममयव्यवस्थायत्रोद्घूर्णाश्चित्रपत्न्यादयःसंति । अथमादनः । यत्रानंतभावोद्गमःअत्रवनमालायामपीर्ष्यापुलिंदीष्वपिश्लाघा



तमालस्पर्शिन्यामालत्याअपिभाग्यवर्णनमेषमादनःसर्वश्रेष्ठोराधायामेवनान्यत्र । अथैषामाश्रयनिर्णयः । कुब्जायांसाधारणीरतिःप्रेमप
र्यंता । पट्टमहिषीणांसमंजसारतिरनुरागपर्यंता । तत्रसत्यभामाराधिकाभावानुसरिणीलक्ष्मणाच ॥ रुक्मिणीतुचंद्रावलीभावानुसारिणी ।
अन्याश्चव्रजस्थप्रियनर्मसखीनांचानुरागपर्यंता । व्रजसुंदरीणांतुसमर्थारतिर्महाभावपर्यंता सुबलादीनांच ॥ तत्रापिमोदनोराधायूथ
एवनान्यत्र । तत्रापिमोहनोराधायांललिताविशाखयोश्चनान्यत्र । तद्यूथेपि । तत्रापिमादनोराधायामेवनतुललिताविशाखयोरपीतिस्था
यीभावः । सएवविप्रलंभसंभोगभेदाद्विधा । तत्राद्यश्चतुर्द्धा पूर्वरागमानप्रेमवैचित्यप्रवासभेदात् । अङ्गसङ्गात्पूर्वमुत्कण्ठामयीरतिःसपूर्व
रागः । अत्रदशादश । लालसोद्वेगजागर्य्यास्तानवंजडिमात्रतु ॥ वैयग्र्यंव्याधिरुन्मादोमोहोमृत्युर्दशादशेति । मानोद्विधासहेतुकनिर्हे
तुकभेदात् । निर्हेतुकःस्वयमेवशाम्याति । सहेतुकस्यतुशांतिःसामभेदक्रियादानानत्युपेक्षारसांतरैरिति । प्रियवाक्यंसाम । निजैश्वर्यंश्रा
वयित्वातस्याअयोग्यत्वज्ञापनभेदः । वयस्यादिद्वाराभयप्रदर्शनंत्वभेदः । दानंवस्त्रमाल्यादीनां । नतिर्नमस्कारः । औदासीन्यप्रकटनमु
पेक्षामयकष्टादिप्रस्तावः । मानशांतिचिह्नानि । अश्रुस्मितादीनि । अथप्रेमवैचित्यम् । सत्यपिकृष्णनैकव्येऽनुरागाधिक्याद्यत्रविरहोभ
वतितदेवतत् ॥ अथप्रवासःकिंचिद्दूरनिष्ठसुदूरनिष्ठभेदाद्विधा । सःगोचारणाद्यनुरोधादाद्यस्तुनित्यमेव॥द्वितीयस्तुश्रीकृष्णेमथुरादिगते
स्यात् । तत्रपूर्वोक्तादशदशाअतिप्रबलाभवंति ॥ अथसंभोगः । ससंक्षिप्तसंकीर्णसंपन्नसमृद्धिमद्भेदाच्चतुर्द्धा । पूर्वरागांतेकुचाधरनखक्षता
दीनामल्पाल्पत्वेसंक्षिप्तः मानांतेसूयामात्सर्यरोषभाषणमिश्रितःसंकीर्णः किंचिद्दूरप्रवासांतेसंपन्नःस्पष्टः । सुदूरप्रवासांतेसमृद्धिमानतिस्प
ष्टः । संभोगप्रपंचस्तुदर्शनकथनवर्त्मरोधरासवनविहारजलकेलिवंशीचौर्यनौखेलादानलीलालुक्कायनलीलामधुपानादिरूपोबहुधेतिप्रपंचि
तमुज्वलनीलमणिग्रंथेऽतोऽस्माभिरुपरम्यतइति । पुनःकिंभूतं आलयंआलीनांसखीनामर्थाद्राधायाललिताप्रभृतीनांसमूहआलम् । स
मूहेपीत्यण् । तद्यातिप्राप्नोतीत्यालयस्तंगोपीकदम्बमध्यगमित्यर्थः । यद्वाऽऽलीयतेसर्वमत्रेत्यालयस्तं । तच्चब्रह्मस्तुतौप्रकटीभविष्य
ति । श्रीगीतास्वप्येकादशेविश्वरूपाध्यायेपिस्फुटम् । वाक्यानिविस्तरभियानोक्तानि ॥ श्रीमद्भागवतीयस्यकृष्णपक्षेसुशोभना ॥

व्याख्यातृतीयपद्यस्यकृताविद्वन्मुदेमया ॥ १ ॥ अत्रार्थाबहवःसंतियथारत्नानिचार्णवे ॥ सुबुद्धिभिःप्रलभ्यास्तेमंदैर्नचकदाचन ॥ २ ॥ गुरूणामनुकंपातःश्रीवंशीधरशर्मणा ॥ व्याख्यांकृतांबुधजनास्स्वीकुर्वंत्वनुकंपया ॥ ३ ॥ तीर्थैःशोभितमम्बुजैर्बहुविधैराज्ञोस्त्ययोध्यापतेर्नाम्नाजस्यत्रियोजनंगिरिवराच्छ्रीमानसायादिशि ॥ वारुण्यांखलुपापतापहरणांसंसेविनांयन्नृणांतत्तीरेचनिवत्स्यतिकलियुगेखर्डाह्वयंपत्तनम् ॥ १ ॥ रघोःसूनुरजोराजाचकारात्रतपःक्वचित् ॥ ब्रह्मातत्तपसातुष्टआगत्यात्रददौवरम् ॥ मन्नाम्नाब्रह्मकासारस्त्वन्नाम्नाजसरोवरम् ॥ तीर्थमेतन्महाराजभविष्यतिनसंशयः ॥ स्नास्यंतिचात्रयेमर्त्यास्त्रिसंध्यंश्रद्धयान्विताः ॥ तेमत्पदंप्रयास्यंतिनात्रकार्याविचारणा ॥ स्नानंदानंजपंहोमंस्वाध्यायंश्राद्धतर्पणे ॥ येत्रकुर्वंतिराजेंद्रतेषांफलमनंतकम् ॥ स्मरणाद्दर्शनादस्यसर्वाःसिध्यंतिसिद्धयः ॥ आपदश्चलयंयांतिसत्यमेतद्ब्रवीमिते ॥ आजंसरोवरंचैतत्सर्वतीर्थोत्तमंनृप ॥ भविष्यतिनसंदेहइत्युक्त्वांतर्दधेविधिः ॥ ततोराजापिसययावयोध्यांरघुनंदनः ॥ इत्यैतिह्यादवगतं स्वपूर्वेभ्यःश्रुतंथा ॥ लिखितंनमयाबुद्ध्याकल्पनेयंगिरोनमे ॥ ततःप्रथांययौतीर्थमजनाम्नाथतद्भुवि ॥ तस्योपकंठेन्यवसद्द्विसहस्रशरन्मिते ॥ गतेकलियुगेखर्डनामकंपत्तनंशुभम् ॥ तत्रोवासद्विजश्रेष्ठःसर्वधर्मविदांवरः ॥ बलरामशर्मातस्माच्चभूधरोभूद्विचक्षणः ॥ गौरिप्रसादशर्मातुतत्पुत्रःशैवधर्मयुक् ॥ सुखदेवस्ततोजातउदारोहरिभक्तियुक् ॥ गजरामस्ततोजातोनिक्कारामस्ततोभवत् ॥ ततोवंशीधरोजातस्तेनायंरचितःशुभः ॥ निबंधआद्यपद्यानांश्रीमद्भागवतस्यच ॥ त्रयाणांसुज्ञमोदायप्रीतयेराधिकापतेः ॥ पुष्पवंशजनेराज्येहीरासिंहस्यभूपतेः ॥ नाभिकंजपुरेनेनप्रीयतांराधिकापतिः ॥ इयन्मात्रानविज्ञेयाव्याख्यासर्वापरापिच ॥ स्कंधानांद्वादशानांहि कृतासुज्ञप्रमोददा ॥ श्रीधरस्वामिभावार्थदीपिकायाप्रकाशिका ॥ नंदसूनोर्यदेच्छास्यात्तस्यामुद्रापणंतदा ॥ भविष्यतिनसंदेहःप्रभोर्भक्तार्थकारिणः ॥ इतिश्रीमद्भागवताद्यपद्यत्रयीव्याख्याश्रीवंशीधरशर्मकृताश्रीकृष्णचंद्रपदपंकजार्पिताश्रोतृवक्तृकर्तृसुखदास्तुसदा ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥



एतत्पुस्तकं श्रेष्ठिवर्यश्रीघनश्यामतनयश्रीलक्ष्मीनारायणश्रेष्ठिनःसाहाय्येन मुबय्यां श्रीकृष्णदासात्मजाभ्यां गङ्गाविष्णु खेमराजगुप्ताभ्यां स्वकीये श्रीवेङ्कटेश्वर नाम्नि मुद्रणालये मुद्रयित्वा प्रकाशमानीतम् ॥
शके १८११ संवत् १९४६

